जपन्ति च महाश्वेतां ते लभन्ते यथेप्सितम् ।
अहोरात्रेण नक्तेन त्रिरात्रनियमेन च ।
जपमानो महाश्वेतामीप्सितं लभते फलम् ॥
विशेषादादित्यदिने जपमानो गणाधिप[1] ।
षडक्षरं महाश्वेतां [2]गच्छेद्वैरोचनं पदम् ॥

'आदित्यहृदयं' मन्त्रः[3] । 'महाश्वेता' ह्रीं ह्रीं स इति मन्त्रः । 'षडक्षरः' मन्त्रः 'षरोल्काय[4] नमः' इति केचित् । [5]ह्रां ह्रीं सः सूर्याय इति मन्त्रः ॥

तथा

[6]यो वै सूर्यदिने भक्त्या भानुं संपूज्य श्रद्धया ।
नक्तं करोति पुरुषः स यात्यमरलोकताम् ॥[7]

[8]आदित्य उवाच—

योऽब्दमेकं प्रकुर्वीत नक्तं [9]मम दिने नरः ।
ब्रह्मचारी जितक्रोधो ममार्चनपरः सदा[10] ॥
संवत्सरान्तमासाद्य [11]मद्भक्तांश्चैव वै द्विजान् ।
भोजयित्वा ततो[12] ब्रूयात् प्रीयतां मे दिवाकरः ॥

1 गणाधिपान्—हे. व्र. II.
2 जपन् वैरोचनं—हे. व्र. II.
3 आदित्यहृदयं यन्त्रम्—हे. व्र. II.
4 'ख खोल्काय नमः इति केचित्'—उ.
5 'ह्रांस्रीं स सूर्याय नमः'—हे. व्र. II., ५२१.
6 'यो यः सूर्यदिने भानुं संपूज्य श्रद्धयान्वितः' हे. व्र. II., ५२१.
7 इति भविष्योत्तरोक्तमादित्यव्रतम्—हे. व्र. II., ५२१.
8 हे. व्र. II., ५२१.
9 हि मद्दिने—हे. व्र. II.
10 खग—हे. व्र. II.
11 मद्भक्तांश्च द्विजोत्तमान्—हे.
12 प्रीतो—हे.

एवं भक्तिसमायुक्तो मम लोकं स गच्छति ।
[1]न च मानुष्यकं लोकमध्रुवं प्राप्नुते नरः ॥

[2]इत्यादित्यवारे नक्तादिव्रतानि ॥

## अथादित्यवारे नन्दादिविधिः

तत्र भविष्यपुराणे[3]—

ब्रह्मोवाच—

[4]द्वादशाहः स्मृतो वारो ह्यादित्यस्य महात्मनः ।
नन्दो भद्रस्तथा सौम्यः कामदः पुत्रदस्तथा ॥
जयो जयन्तो विजयश्चादित्याभिमुखस्तथा[5] ।
हृदयो रोगहा चैव [6]महाश्वेताप्रियो वरः ॥
[7]शुक्लपक्षस्य षष्ठ्यां तु माघे मासि गणाधिप ।
यो भवेत्स भवेन्नन्दः सर्वपापभयापहः ॥
तत्र नक्तं स्मृतं पुण्यं घृतेन स्नपनं रवेः ।
अगस्तिकुसुमानीह[8] भानोस्तुष्टिकराणि तु ॥
विलेपनं सुगन्धं च श्वेतचन्दनमुत्तमम् ।
धूपस्तु गुग्गुलुः श्रेष्ठो[9] नैवेद्यं पूपमेव च ॥

1 'स च भानुकृतं लोकं ध्रुवं संप्राप्नुयान्नरः—हे.

2 इति भविष्यत्पुराणोक्तमादित्यव्रतम्—हे. व्र. II., ५२१.

3 हे. व्र. II., ५२२-५२३.

4 द्वादश्यां हस्तभं वारो—हे; द्वादशाहे—ना.

5 आदित्यादिमुपास्थितः—हे; आदित्याभिमुखः स्थितः—ना, उ.

6 महारोगविनाशनम्—हे.

7 The following three lines are omitted by Hemādri.

8 माल्तीकुसुमनीह—हे. व्र. II; हेमाद्रि omits the two quarters of this verse and reads माल्तीकुसुमानीह श्वेतचन्दनमुत्तमम् ।

9 धूपं गुग्गुलश्रेष्ठेन—हे.

दत्वा [1]पूर्वं तु विप्राय ततो भुञ्जीत वाग्यतः ।
प्रस्थमात्रं भवेत्पूपं [2]गोधूमजमनुत्तमम् ॥
यवोद्भवं वा कुर्वीत [3]सगुडं सर्पिषान्वितम् ॥
'प्रस्थमात्रम्' इति षोडशापूपान्नानि[4] ॥'
सहिरण्यं च दातव्यं [5]ब्राह्मणे सेतिहासके ।
भौमे दिव्येऽथवा देयं [6]न्यसेद्वा पुरतो रवेः ॥
'दिव्यः' ब्राह्मणो गमः[7] । तदितरब्राह्मणाः 'भौमाः' ॥
दातव्यो [8]मन्त्रतश्चायं मण्डको ग्राह्य एव हि ।
[9]पूपादिः शनकैर्भक्त्या आदित्यपरमस्य[10] तु ॥
आदित्यतेजसोत्पन्नं [11]राज्ञां तु रविनिर्मितम् ।
श्रेयसे मम विप्र त्वं प्रतीच्छापूपमुत्तमम् ॥
कामदं सुखदं धन्यं पुत्रदं धनदं तथा ।
सदानैस्तु[12] प्रतीच्छामि मण्डकं भास्करप्रियम् ॥
एतावेव महामन्त्रौ दानाऽऽदाने रविप्रियौ ।
अपूपस्य गणश्रेष्ठ श्रेयसे[13] नात्र संशयः ॥

1 पूपं—हे.
2 गोधूमोत्थम्—हे.
3 सुगन्धसर्पिषान्वितम्—हे.
4 षोडशपलानि—उ.
5 ब्राह्मणेभ्यो हितेप्सुना—हे.
6 न्यसेदापूरणं रवेः—हे.
7 दैवा ब्राह्मणाः, भौमाः तदितरे ब्राह्मणाः—हे; दिव्यः ब्राह्मणागमः—उ; दिव्यः ब्राह्मणा मगाः—ना. See page 15 line 19.
8 मन्त्रवत्पूपो—हे.
9 भूत्वादित्येन वै भक्त्या—उ; भूत्वादित्ये नवे भक्त्या—ना.
10 आदित्यपरमश्च तु—हे.
11 राज्ञीकरविनिर्मितम्—हे.
12 सदा ते तु—हे.
13 अद्य मे—हे.

सैष[1] [2]नन्दविधिः प्रोक्तो नराणां श्रेयसे विभो ।
अनेन विधिना यस्तु नन्दे[3] पूजयते रविम् ॥
सर्वपापविमुक्तात्मा[4] सूर्यलोके महीयते ।
न दारिद्र्यं न रोगाश्च कुले तस्य महात्मनः ॥
यश्चैनं[5] पूजयेद्भानुं [6]न क्षयः सन्ततेः सदा ।
सूर्यलोकं गतश्चायं[7] राजा भवति भूतले ।
बहुज्ञातिसमायुक्तस्तेजसा द्विजसन्निभः[8] ॥

'द्विजसंनिभः' रवितुल्यः ॥

इति नन्दविधिः ॥

[9]मासि भाद्रपदे वीर शुक्लपक्षे तु यो[10] भवेत् ।
षष्ठ्यां[11] गणकुलश्रेष्ठ स भद्रः परिकीर्तितः ॥
तत्र नक्तं च यः कुर्यादुपवासमथापि वा ।
हंसयानसमारूढो याति हंससलोकताम् ॥
मालतीकुसुमानीह तथा श्वेतं च चन्दनम् ।
विजयं च तथा धूपं [12]पायसं च तथा परम् ॥

1 एवं—ना ; एष—हे.
2 मन्त्रविधिः—हे.
3 देवं—हे.
4 सर्वपापविमुक्तात्मा—हे.
5 यश्चैवं—उ.
6 अक्षयं तनुते सदा—हे.
7 सूर्यलोकाश्रयं कृत्वा—हे.
8 स नरो रविसन्निभः—हे.
9 हे. व्र. II., ५२३-५२४.
10 या—हे.
11 षष्ठी—हे.
12 नैवेद्यं पायसं परम् —हे.

[1]'विजयो धूपो' भविष्यत्पुराणोक्तः, तद्यथा—

वृषणं सिल्हकं विप्र श्रीखण्डमगुरुं तथा ।
कर्पूरं च तथा मुस्ता शर्करा सत्वचा द्विज ॥
[2]इत्येष विजयो धूपः स्वयं देवेन निर्मितः ॥

'वृषणं' कस्तूरिका ॥

[2]पूजायां भास्करस्येह कुर्यात्त्रिपुरसूदन ।
इत्थं संपूज्य देवेशं मध्याह्ने तु नराधिप[3] ॥
दद्यात्तु दक्षिणां शक्त्या ततो भुञ्जीत वाग्यतः ।
[4]पायसं गणशार्दूल सगुडं सर्पिषा सह ॥
सर्वान् [5]कामानवाप्येह पुत्रदारधनादिभिः ।
[6]विमुक्तः सर्वपापेभ्यो व्रजेद्भानुसलोकताम् ॥
एष एव विधिः प्रोक्तो [प्र]यत्नाच्च नराधिप ।
कृत्वा श्रुत्वा च यः पापान्मुच्यते मानवो भुवि ॥

इति भद्रविधिः[7] ॥

[8]नक्षत्रं रोहिणी वीर यदा वारेऽस्य वै भवेत्[9] ।
[10]यात्यसौ सौम्यतां वीर स सौम्यः परिकीर्तितः ॥

1 Comment reproduced by Hemādri.
2 Line omitted by हेमाद्रि.
3 'मध्याह्ने भुवनाधिप'—उ; भुवनाधिपम्—हे.
4 पायसं सगुडं देयं गुडं च सार्पिषा सह—हे.
5 कामानवाप्नोति पुत्रदारधनादिकान्—हे.
6 The following three lines are omitted by हेमाद्रि.
7 भद्राविधिः—हे.
8 हे. व्र. II., ५२४.
9 यदा वारे रवेर्भवेत्—हे.
10 जात्या स सौम्यता वीरः—हे.

स्नानं दानं जपो होमः [1]पितृदेवाभिपूजनम् ।
अक्षय्यं स्यान्न संदेहस्तस्य वारे महात्मनः ॥
नक्तं समास्थितो[2] योऽत्र पूजयेद्भास्करं नरः ।
याति लोकं स देवस्य भास्करस्य महात्मनः ॥
रक्तोत्पलानि तत्रैव तथा रक्तं च चन्दनम् ।
सुगन्धश्चापि धूपोऽत्र नैवेद्यं पायसं परम् ॥
[3]ब्राह्मणाय च दातव्यं भोक्तव्यं चात्मना तथा ।
य एवं पूजयेत्सौम्यं चित्रभानुं गवां पतिम् ॥
स विमुक्तस्तु पापेभ्यस्त्वाष्ट्रीं कान्तिमवाप्नुते ।

इति सौम्यविधिः ॥

प्राप्ते मार्गशिरे मासि शुक्लषष्ठ्यां तु यो भवेत् ।
स ज्ञेयः कामदो वारः स इष्टो भास्करस्य तु ॥
तत्रं यः पूजयेद्भानुं भक्त्या श्रद्धया समन्वितः ।
स मुक्तः सर्वपापेभ्यः प्राप्नुयाचण्डदीधितिम् ॥
रक्तचन्दनमिश्राणि करवीराणि सुव्रत ।
धूपं घृताहुतिं वीर भास्कराय प्रयोजयेत् ॥

'धूपं घृताहुतिम्' इति, घृतप्रक्षेपोद्भवं धूपमित्यर्थः ॥

नैवेद्यं चापि कासारं सुगन्धि तीक्ष्णमेव च ।
कृत्वोपवासमथवा नक्तं त्रिपुरसूदन ॥
इत्थं प्रपूजितो ह्यत्र भास्करो लोकभास्करः ।

1 तथा देवादिपूजनम्—हे.

2 समाहितो यत्र—हे.

3 From here, the portion up to the No. 2 in page 16 is omitted by हेमाद्रि. He reads thus: ब्रह्मेति, मे भावितं मनः । इति संपूजितः पुत्र भास्करः पुत्रदो भवेत् etc.

ददाति विपुलान्कामान् तत्र संपूजितो रविः ॥

इति कामदविधिः ॥

पञ्चतारं भवेद्यत्र नक्षत्रं गोवृषध्वज ।
वारे तु देवदेवस्य स वारः पुत्रदः स्मृतः ॥

'पञ्चतारं' रोहिणी हस्तं च । 'यत्र' इति, पुत्रदवारविधौ ॥

उपवासो भवेत्तत्र श्राद्धं कार्यं यथा भवेत् ।
प्राशनं चापि पिण्डस्य मध्यमस्य प्रकीर्तितम् ॥
सोपवासं तु वै भक्त्या पूजयेत्तत्र गोपतिम् ।
धूपमाल्योपहारैश्च दिव्यगन्धसमन्वितैः ॥
एवं पूज्य विवस्वन्तं तस्यैव पुरतो निशि ।
भूमौ सुप्यात्ततो देवीं जपन् श्वेतां महामते ॥

'पूज्य विवस्वन्तम्' इति, रविदिन इति शेषः ॥

प्रभाते तु ततः स्नानं कृत्वा दत्वार्घ्यमुत्तमम् ।
रक्तचन्दनसंमिश्रैः करवीरैर्गणाधिप ॥
संपूज्य ग्रहभूतेशमंशुमन्तं त्रिलोचनम् ।
वारं च पूजयित्वा तं ततः श्राद्धं प्रकल्पयेत् ॥
पञ्चभिर्ब्राह्मणैर्देव दिव्यैर्भौमैश्च सुव्रत ।
ब्राह्मणौ [1]गमसंज्ञौ तौ तत्र दिव्यौ प्रकल्पयेत् ॥
त्रयस्तु ब्राह्मणा भौमाः प्रकल्प्यान्धकसूदन ।
कुर्यादेवं ततः श्राद्धं पार्वणं भास्करप्रिय ॥

1 संज्ञम् (?)—उ. See page 11 line 7.

श्राद्धे त्वथ समाप्ते तु प्राश्य पिण्डं तु मध्यमम् ।
पुरतो देवदेवस्य स्थित्वा मन्त्रेण सुव्रत ॥
स एषे पिण्डो देवेश योऽभीष्टं तव सर्वदा ।
अश्नाम: पश्य तं तुभ्यं येन मे संततिर्भवेत् ॥
[1]प्रसादात्तव देवेश[2] इति मे भावितं मनः ।
इत्थं संपूजितो यत्र भास्करः पुत्रदो भवेत् ॥
अतोऽयं पुत्रदो वारो देवस्य परिकीर्तितः ॥

इति [3]पुत्रदविधिः ॥

[4]दक्षिणे त्वयने यः स्यात् स जयः परिकीर्तितः ।
अत्रोपवासो नक्तं च स्नानं दानं जपस्तथा ॥
भवेच्छतगुणं देव [5]भास्करप्रीतये कृतम् ।
तस्मान्नक्तादि कर्तव्यं स स्याच्छतगुणो विधिः ॥

[6]इति जयविधिः ॥

[7]जयन्तेत्युत्तरे ज्ञेयो[8] [9]अयने गणनायक ।
वारो देवस्य यः स्याद्वै[10] तत्र पूज्यो दिवाकरः[11] ॥
पूजितस्तत्र देवेशः सहस्रगुणितं फलम् ।

1 The following two lines are omitted by ना.
2 See footnote 3 page 14.
3 पुरापुत्रदो विधिः—हे. व्र. II., ५२४.
4 हे. व्र. II., ५२४.
5 भास्करस्य दिने कृतम्—हे.
6 इति भविष्यत्पुराणोक्तो जयविधिः—हे. II., ५२४.
7 हे. व्र. II., ५२५.
8 जयन्त उत्तरश्चैव—हे.
9 आदित्यगणनायक—हे.
10 चैवात्र—हे.
11 गणाधिपः—हे.

[1]ददाति देवशार्दूल स्नानदानादिकर्मणि ॥
घृतेन पयसा यत्र स्नानमिक्षुरसेन च ।
विलेपनं कुङ्कुमं च[2] प्रशस्तं भास्करप्रियम् ॥
धूपक्रिया गुग्गुलुना [3]नैवेद्यं मोदकं प्रियम् ।
इत्थं संपूज्य देवेशं [4]कुर्याद्धोमं ततस्तिलैः ॥
ब्राह्मणान् भोजयेत्पश्चान्मोदकांस्तिलशष्कुलीः ।
[5]इत्थं यः पूजयेद्भानुं मित्रवारे गणाधिप ॥
सहस्रगुणितं तस्य फलं देवो ददाति वै ।
स्नानदानव्रतादीनामुपवासस्य वा विभो ॥

इति जयन्तविधिः ॥

शुक्लपक्षस्य सप्तम्यां प्राजापत्यर्क्षसंयुतः ।
[6]स ज्ञेयो विजयो नाम सर्वपापभयापहः ॥
तत्र कोटिगुणं सर्वं फलं पुण्यस्य कर्मणः ।
ददाति भगवान् देवः पूजितः स गणाधिप ॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ।

1 फलं ददाति देवेशः—हे.

2 कुङ्कुमस्य—हे.

3 नैवेद्यं माषकं प्रिये—हे ; नैवेद्यं मोदकप्रिय—ना, उ.

4 कुर्याद्वा मन्त्रवत्किल—हे.

5 Hemādri reads:

इत्थं यः पूजयेद्भानुं प्राजापत्यर्क्षसंयुतः ।
स शोकविजयो नाम सर्वपापभयापहः ॥

Thus Hemādri omits two and a half lines, the colophon 'इति जयन्तविधिः' and 'शुक्लपक्षस्य सप्तम्यां' in the beginning of विजयविधि and reads continuously.

6 स शोकविजयो नाम—हे.

[1]नक्तं वाप्युपवासश्च संपूज्योऽत्र दिवाकरः ॥
[2]सप्तलोकाधिपत्यं च प्राप्यते [3]सप्तसप्ततिः ॥

[4]इति विजयविधिः ॥

[5]कृष्णपक्षस्य सप्तम्यां माघे मासि भवेच्च यः ।
आदित्याभिमुखो ज्ञेयः शृणु चास्य परं विधिम् ॥
कृत्वैकभक्तं सूर्यस्य वारे त्रिपुरसूदन ।
[6]प्रातःस्नानं ततः कृत्वा पूजयित्वा दिवाकरम् ॥
आदित्याभिमुखस्तिष्ठेद्यावदस्तमनं रवेः ।
जपमानो महाश्वेतां स्तम्भमाश्रित्य सुव्रतः ॥
[7]चतुर्हस्तं मृदुश्लक्ष्णमर्चनं तु समं दृढम् ।
[8]रक्तचन्दनवृक्षस्य स्तम्भं कुर्याद्गणाधिप ॥
तमाश्रित्य महाबाहो भक्त्या देवं दिवाकरम् ।
[9]पश्यन् जपन् महाश्वेतां [10]तिष्ठेदास्तमनं रवेः ॥
गन्धपुष्पोपहारैश्च पूजयित्वा दिवाकरम् ।
ब्राह्मणोऽन्नं पुरो दत्वा ततो भुञ्जीत[11] वाग्यतः ॥

1 नक्तं वा सोपवासो वा—हे.
2 सर्वलोकाधिपत्यं च—हे.
3 सप्तसप्तिकः—हे.
4 इति भविष्योत्तरोक्तं सूर्यस्य वारे त्रिपुरसूदनव्रतम्—हे.
5 The following three lines are not found in हे. ब्र. II., ५२५.
6 प्रातः कृत्वा ततः स्नानं—हे.
7 The following two lines are omitted by हे. ब्र. II., ५२५.
8 महादेवस्य भक्त्या तु देवदेवं दिवाकरम्—हे.
9 पश्यमानो महाश्वेतां—उ.
10 तिष्ठेदस्तमयं—हे.
11 विप्राय दक्षिणां दद्यात्ततो भुञ्जीत—हे.

इत्थमेव तु यः [1]कुर्याद्भास्करप्रीतये नरः ।
[2]भानुमांस्तस्य प्रीतः स्यात् स प्रीतश्च ददाति हि ॥
[3]धनधान्यं तथा पुत्रानारोग्यं भार्गवीं नृप ।
तस्मात्संपूजयेदत्र गीर्वाणाधिपतिं हरिम् ॥

'भार्गवी' लक्ष्मी ॥

[4]इत्यादित्याभिमुखविधिः ॥

[5]रविसङ्क्रमणे [6]यः स्याद्रवेर्वारो गणाधिप ।
[7]स ज्ञेयो हृदयो नाम आदित्यहृदयप्रियः ॥
[8]तत्र नक्तं समाश्रित्य देवं संपूज्य [9]तत्त्वतः ।[10]
गत्वा चायतनं भानोरादित्याभिमुखः स्थितः ॥
जपेदादित्यहृदयं संख्ययाष्टशतं बुधः ।
[11]अथवास्तमनं यावद्भास्करं चिन्तयेद्धृदि ॥
गृहमेत्य ततो विप्रान् भोजयेच्छक्तितः शिव ।
भुक्त्वा तु पायसं चैव ततो भूमौ स्वपेद्बुधः ॥

1 इत्थमेव व्रतं कुर्यात्—हे.

2 भानुमांस्तस्य तु प्रीतो दद्यात्सर्वमनोरथान्—हे.

3 The following verse is not found in हे. व्र. II., ५२६.

4 इत्यभिमुखविधिः—ना; इति भविष्यत्पुराणोक्त-आदित्याभिमुखविधिः—हे. व्र. II., ५२६.

5 हे. व्र. II., ५२६.

6 यस्मात्—हे.

7 आदित्यहृदयो नाम—हे.

8 मां तत्र नक्तमाश्रित्य—हे.

9 यत्नतः—हे.

10 हेमाद्रि adds a line after this :

गत्वा मम पुरं पश्चात् पृथिव्यां स्यान्नराधिपः ।

11 The following three lines are not found in हे. व्र. II., ५२६.

योऽत्र संपूजयेद्भानुं[1] भक्त्या श्रद्धासमन्वितः ।
स कामांल्लभते सर्वानादित्यहृदयेऽर्पितान्[2] ॥

[3]इति हृदयविधिः

[4]पूष्णो वारे[5] यदा भौमं भवेद्वै भगदैवतम् ।
स वारो रोगहा प्रोक्तः[6] सर्वरोगभयापहः ॥

'भगदैवतं' पूर्वा फल्गुनी[7] । उत्तरा फल्गुनीत्येके ॥

योऽत्र पूजयते भानुं शुभगन्धविलेपनैः ।
सर्वरोगविनिर्मुक्तो [8]याति संज्ञापतेर्गृहम् ॥
[9]अर्कपत्रपुटे कृत्वा पुष्पाण्यर्कस्य सुव्रत ।
देवस्य पुरतो रात्रौ भक्त्या संपूजयेन्नरः[10] ॥
[11]पूजयित्वार्कपुष्पैस्तमर्कमर्कप्रियैः सदा ।
प्राशयित्वार्कपुष्पं तु दत्वा विप्राय दक्षिणाम् ॥
भुक्त्वा तु पायसं वीर रात्रौ स्वपिति भूतले ।
[12]अनेन विधिना यस्तु पूजयेदत्र वै द्विजम्[13] ॥

1 यो नरः पूजयेद्भानुं—हे.
2 सर्वान् भास्करहृदयेऽर्पितान्—उ ; सर्वानादित्यहृदये स्थितः—हे.
3 इति भविष्यत्पुराणोक्त-आदित्यहृदयविधिः—हे. व्र. II., ५२६.
4 हे. व्र. II., ५२६–५२७.
5 कृष्णे वारे—हे.
6 स वरो हि महाप्रोक्तः—हे.
7 Commentary reproduced by हेमाद्रि.
8 स याति भास्पतेर्गृहम्—हे.
9 अर्कपत्रं पुटे कृत्वा पुष्प्यार्के चैव सुव्रत—हे.
10 संपूजयेद्बुधः—हे.
11 The following three lines are omitted by—हे.
12 पूजयेदत्र वै भक्त्या एतेन विधिना द्विजम्—हे.
13 'द्विजं' सूर्यम्—हे.

[1]स मुक्तः सर्वरोगैस्तु गच्छेद्दिनकरालयम् ।
तस्मादपि व्रजेल्लोकं [2]हुङ्काररववेदिनः ॥
'हुङ्काररववेदिनः' ब्राह्मणाः ॥

[3]इति रोगहृद्विधिः ॥

[4]यस्त्वादित्यग्रहेशस्य वारो[5] देवस्य सुव्रत ।
स्वशाखोक्तप्रियो लोके[6] ख्यातो गोश्रुतिभूषण[7] ॥
यस्तु पूजयते तस्मिन् पतङ्गं पन्नगप्रियम् ।
गन्धपुष्पादिधूपैस्तु [8]स्तोत्रैर्वा विविधैः सदा ॥
सोपवासो गणश्रेष्ठ आदित्यग्रहणे शुचिः ।
[9]जपमानो महाश्वेतां स्वशाखोक्तमथापि वा ॥
पूजयेज्जगतामीशं तमोनाशनमाशुगम् ।
पूजयित्वा दिनकरं महाश्वेतां ततोऽर्चयेत् ॥
पूजयित्वा महाश्वेतां रविं देवं ततोऽर्चयेत् ।
महाश्वेतां प्रतिष्ठाप्य गन्धपुष्पैः सुपूजिताम् ॥
तस्या एव पुनः कुर्यादग्निकार्यं समाहितः ।

1 सर्वरोगैर्विमुक्तस्तु गच्छेदादित्यकालयम्—हे.

2 'हुंकाररहितस्तथा', 'हुंकाररहितः' ब्राह्मणः—हे.

3 इति भविष्योत्तरोक्तो रोगहृद्विधिः—हे. व्र. II., ५२७.

4 हे. व्र. II., ५२७–५२८.

5 यस्त्वादित्यग्रहे स्याद्वै वारो—ना.

6 पूजयेत् स प्रियो नित्यं—हे.

7 ख्यातो गोपतिभूषणः—ना; 'गोश्रुतिः' चक्षुःश्रवाः, स भूषणं यस्य सः, सर्पभूषण इत्यर्थः—हे.

8 तोयैर्वा—उ, ना.

9 श्लोकद्वयमिदं नागपुरकोशे न दृश्यते । एतत्स्थाने "जपमानो महाश्वेतां रविं देवं ततोऽर्चयेत्" इत्यर्धः दृश्यते । हेमाद्रिस्तु—"जपमानो महाश्वेतां स्वशाखोक्तग्रहाधिपम्" इति पठन् २२ पुटे प्रथमपङ्क्तिपर्यन्तं मध्यस्थितमंशं कबलीकरोति ।

पूजयित्वा महाश्वेतां स्वशाखोक्तग्रहाधिपम् ॥
ब्राह्मणान् [1]वाचयित्वा तु ततो भुञ्जीत वाग्यतः ।
आदित्यग्रहयुक्तेऽस्मिन् वारे त्रिपुरसूदन ॥
यत्कर्म क्रियते पुण्यं तत्सर्वं शुभदं भवेत् ।
स्नानदानजपादीनां कर्मणां [2]वृषभध्वज ॥
अनन्तं हि फलं तेषां भवत्यस्मिन्न संशयः ।
कृतानां तु [3]गणश्रेष्ठ भास्करस्य [4]वचो यथा ॥
तस्मात् सूर्यदिने कार्यं पुण्यं कर्म विचक्षणैः ।
एकभक्तं[5] च नक्तं चाप्युपवासमथापि वा ॥
ये त्वादित्यदिने कुर्युस्ते यान्ति [6]परमं पदम् ।
धन्यं पुण्यं यशस्यं च पुत्रीयं[7] कामदं तथा ॥
[8]तस्मिन् दानमपूपस्य गोदानेन समं मतम् ।
द्वादशैते महाबाहो वारा[9] भानोर्महात्मनः ॥
[10]तुष्टिदाः कथितास्तुभ्यं[11] सर्वपापभयापहाः ।
[12]कृत्वैकमेषां विधिवद्वारं वृषभवाहन ॥

1 भोजयित्वा—हे.
2 गोवृषध्वज—ना.
3 गुणश्रेष्ठ—ना.
4 वरो—ना.
5 एवं भुक्त्वा च—हे.
6 परमां गतिम्—हे.
7 आयुष्यं—हे.
8 तस्मिन् यद्दानमपरं तद्गोदानसमं मतम्—हे.
9 वाचा—हे.
10 श्लोकार्धत्रयं 'उ' मातृकायां नास्ति.
11 अनुष्ठितास्तु कथिताः—हे.
12 कृत्वैतदेषां—हे.

ततो याति परं लोकं वृषकेतोर्महात्मनः ।

[इति महाश्वेताप्रियविधिः]

[1]इति भविष्यपुराणीयनन्दादिवारविधिः ॥

## [दिवाकरव्रतम्]

[2]श्रीनारायण उवाच[3]—

[[4]कृत्वा भूमौ लिखेत् पद्मं शोभनं कर्णिकाचितम् ।]
पत्रैर्द्वादशभिर्युक्तं शोभमानं मनोरमम् ॥
तेषां मध्ये तु चत्वारि तन्मध्ये भास्करं न्यसेत् ।

'तेषां मध्ये चत्वारि' इति, [5]तेषां द्वादशपत्राणां संबन्धीनि चत्वारि पत्राणि पद्ममध्ये कर्णिकासंलग्नानि कार्याणि । अष्टौ तु तद्बाह्ये । [6]एवं द्वादशदलं कृत्वेत्यर्थः ॥

पूर्वपत्रे न्यसेत्[7] सूर्यमाग्नेय्यां तु दिवाकरम् ।
याम्यायां तु विवस्वन्तं निर्ऋत्यां तु भगं न्यसेत् ॥
वरुणं पश्चिमे पत्रे वायव्ये इन्द्रमेव च ।
आदित्यमुत्तरे चैव सवितारं ततः परम् ॥

1 इति नन्दादिरविवारविधिः—उ; इति भविष्योत्तरोक्तनन्दादिव्रतविधिः—हे. व्र. II., ५२८.

2 हे. व्र. II., ५२८–५३३.

3 श्रीनारदोवाच—ना.

4 This line is omitted by both ना and उ MSS. but supplied by हे. व्र. II., ५२८.

5 Comment reproduced by हेमाद्रि.

6 पत्रं द्वादशदले इत्यर्थः—हे.

7 पूर्वं यत्र न्यसेत्—ना.

कर्णिकापूर्वपत्रे च न्यसेदर्कस्य वाजिनः ।
दक्षिणेन सहस्रांशुं मार्तण्डं पश्चिमे दले ॥
उत्तरे तु रविं देवं मध्ये भास्करमेव च ।
एवं विन्यस्य सर्वासु दिक्षु सूर्यार्चनं भवेत् ॥
करवीरार्कपुष्पैश्च चन्दनागुरुचम्पकैः ।
"[1]कालात्मन् सर्वभूतात्मन् पूजये सर्वतोमुख ॥
जन्ममृत्युजराशोकसंसारभयनाशन[2] ।
दारिद्र्यव्यसनध्वंसं श्रीमन् कुरु दिवाकर ॥"
नमस्कारेण मन्त्रेण व्याहृत्या प्रणवादिभिः ।
"अग्निमीले नमस्तुभ्यं जातवेद नमोऽस्तु ते ॥
इषे त्वाय नमस्तुभ्यं इषे त्वोर्जे नमो नमः ।
अग्न आयाहि वीतये अग्निगर्भ नमोऽस्तु ते ॥
शंनो देवी नमस्तुभ्यं जगच्चक्षुर्नमो नमः ।"
आदित्यवारं हस्तेन पूर्वं गृहीत पाण्डव ॥
[3][ततः प्रत्यादित्यदिनं सप्तवारान् प्रपूजयेत् ।]
एकभक्तेन नक्ताशी ब्राह्मणान् भोजयेद्दिवा[4] ॥
दक्षिणां तु यथाशक्त्या दद्याद्विप्राय [5]शक्तितः ।
स्थित्वाग्रत इदं ब्रूयाद्भास्करः प्रीयतामिति[6] ॥
कामजं क्रोधजं वापि मदजं दर्पजं तथा ।

1 कालोद्भवैश्च पुष्पैश्च पूजयेत् सर्वतोमुखम्—हे.

2 नाशनम्—हे.

3 This line is omitted by both ना and उ MSS. but supplied by Hemādri, व्र. II., ५२९.

4 पूजयेद्दिवा—हे.

5 भक्तितः—हे.

6 After this Hemādri cites thirty three and a half verses but they are not found in both ना and उ MSS.

अपि जन्मसहस्रोत्थं पापं [1]नश्यति तत्क्षणात् ॥
[2]दद्रुकोटकुष्ठानि श्वासगण्डभगन्दराः ।
तथा गुदव्रणा दुष्टा नाडिकाश्चर्मकीलकाः ॥
अपि जन्मसहस्रेषु नास्य व्याधिभयं भवेत् ।
धनधान्यसमायुक्तो नरः सौभाग्यमाप्नुयात् ॥
कल्पकोटिसहस्राणि कल्पकोटिशतानि च ।
विमानवरमारूढः सूर्यलोके महीयते ॥
अपुत्रा या भवेन्नारी धनसौभाग्यवर्जिता ।
सुरूपान् लभते पुत्रान् धनं सौभाग्यमेव च ॥

[इति दिवाकरव्रतम्]

[3]इत्यादित्यवारकल्पः ॥

## अथ सप्तवारव्रतानि

तत्र पद्मपुराणे

पुलस्त्य उवाच—

आदित्यवारं हस्तेन पूर्वमादाय भक्तितः ।
नक्तेन क्षपयेत्तावद्यावत् सप्तेति संख्यया ॥
ततस्तु सप्तमे पूर्णे कुर्याद्ब्राह्मणभोजनम् ।
आदित्यं विश्वसौवर्णं कृत्वा यत्नेन मानवः ॥
सितवस्त्रयुगच्छन्नं छत्रिकापादुके तथा ।
उपानहौ च दातव्ये स्थापयेत्ताम्रभाजने ॥

1 नश्येत—हे.

2 The following three lines are omitted by हेमाद्रि.

3 इति भविष्यपुराणोक्तं दिवाकरव्रतम्—हे. व्र. II., ५३१.

तेनैव स्नपनं कृत्वा संपूर्णाङ्गद्विजातये ।
दापयेत्कल्पविदुषे ब्राह्मणाय विशेषतः ॥
एवं कृत्वा फलं तस्य भवेदारोग्यमुत्तमम् ।
द्रव्यसंपत्सुतप्राप्तिरिति पौराणिकी क्रिया ॥
अविसंवादिनी चेयं शान्तिपुष्टिप्रदा नृणाम् ।
तद्वच्चित्रासु संगृह्य सोमवारं विचक्षणाः ॥
नक्तेन क्षपयेदष्टौ सोमवारान् प्रयत्नतः ।
प्रत्येकं ब्राह्मणान् भोज्य यथाशक्त्या विचक्षणाः ॥
नवमे तु ततः पूर्णे कुर्याद्ब्राह्मणभोजनम् ।
श्वेतयुग्मं च दातव्यं ततः सोमं तु दापयेत् ॥

'श्वेतयुग्मं' शुक्लवस्त्रयुग्मम् ॥

कांस्यभाजनसंस्थे तु क्षीरसंपूरितं ततः ।
तद्वच्छत्रं पादुके च तथोपानत्समन्वितम् ॥
संपूर्णाङ्गाय दातव्यं ब्राह्मणाय विशेषतः ।
स्वात्यामङ्गारकं गृह्य क्षपयेन्नक्तभोजनम् ॥
अष्टावेतानि यावच्च ततो ब्राह्मणभोजनम् ।
अङ्गारकं तु सौवर्णं स्थापितं ताम्रभाजने ॥
दापयेद्ब्राह्मणार्याय [सं]पूर्णाङ्गाय चैव हि ।
नक्षत्रानुक्रमेणैव गृह्य वारास्तु सप्त वै ॥
उपोष्यैकोत्तरं पश्चात् सौवर्णं दापयेत् सुधीः ।
अग्निकार्यं तु कुर्वीत यथादृष्टं विधानतः ॥

'उपोष्यैकोत्तरम्' इति, एकमङ्गमुपोष्येत्यर्थः ॥

एवं कृत्वा भवेद्यद्वै तन्निबोध नराधिप ।

सर्वे ग्रहाः सौम्यरूपा भवन्ति
नश्यन्ति रोगास्तुष्टिमायान्ति[1] देवाः ।
तृप्यन्ति नाम पितरस्तर्पिताः स्यु-
र्दुःस्वप्नं [2]च श्रवणान्नाशमेति ॥
यदि सोमो रविसुतो भास्करो धरणीसुतः ।
केतुश्च मूर्ध्नि तिष्ठन्ति रौद्राः पीडाकरा ग्रहाः ॥
अनेन कृतमात्रेण[3] सर्वे सौम्या भवन्ति हि ।
य एवं कुरुते राजन् सदा भक्तिसमन्वितः ॥
तस्य सानुग्रहाः सर्वे यच्छन्ति विजयं नृप ।
शनैश्चरं राहुकेतू लोहपात्रे तु विन्यसेत् ॥
लोहमाराधयेद्धीमान् ब्राह्मणेभ्यश्च दापयेत् ।
कृष्णवस्त्रयुगं देयमेतेषां प्रीणनाय वै ॥
सौवर्णकाश्च दातव्या शान्तिश्रीविजयेप्सुभिः
व्रतान्ते सर्व एते हि ग्रहाः सौवर्णका नृप ॥
दातव्या शान्तिमिच्छद्भिर्व्रतान्ते द्विजभोजनम्
यथाशक्त्या दक्षिणां तु ग्रहाणां प्रीतये तथा ॥
अल्पायासेन राजेन्द्र सर्वान् कामानवाप्नुयात् ॥

इति सप्तवा व्रतानि ॥

## [वेश्यादित्यवारानङ्गदानव्रतम्]

[4]मत्स्यपुराणे

कृष्णपत्नीः प्रति दाल्भ्य उवाच—

[5]यथा यथा व्रतं सम्यगुपदिश्याम्यहं ततः ।

1 रोगास्त्विष्टमायान्ति—ना.

2 Nagpur MS. omits the portion from No. 2 to 3 and reads: दु.स्वप्नं तन्मात्रेण सर्वे सौम्या भवन्ति हि ।

4 हे. व्र. II., ५४४–५४८.

5 यथाप्यन्यद्व्रतं सम्यगुपदेश्यामि तत्वतः—हे.

अविचारेण सर्वाभिरनुष्ठेयं तु तत्पुनः ॥
संसारोत्तारणायालमेतद्वेदविदो विदुः ।
यदा सूर्यदिने हस्तः पुष्यो वाथ पुनर्वसुः ॥
भवेत् सर्वौषधिस्नानं सम्यङ्नारी समाचरेत् ।
तस्य पञ्चशरस्यापि सन्निधानत्वमिष्यते ॥
अर्चयेत् पुण्डरीकाक्षमनङ्गस्यानुकीर्तनैः ।
कामाय पादौ संपूज्य [1]जङ्घे वै मोहकारिणे ॥
मेढ्रं कन्दर्पनिधये कटिं प्रीतिमते नमः ।
नाभिं सौख्यसमुद्राय [2]रामाय च तथोदरम् ॥
हृदयं हृदयेशाय स्तनावाह्लादकारिणे ।
वामाङ्गं[3] पुष्पचापाय [4]पुष्पबाणाय दक्षिणम् ॥[5]
नमोऽनन्ताय[6] वै मौलिं [7]विलोलायेति मूर्धजान् ।
सर्वात्मने शिरस्तद्वद्देवदेवस्य पूजयेत् ॥
[8]नमः शिवाय शान्ताय पाशाङ्कुशधराय च ।
गदिने पीतवस्त्राय[9] शङ्खचक्रधराय च ॥
नमो नारायणायेति कामदेवाय ते नमः ।
नमः शान्त्यै नमः प्रीत्यै[10] नमो [11]मत्यै नमः श्रियै ॥

1 ऊरू वै मन्मथाय च—हे.
2 वामनाय—हे.
3 वामांशं—हे.
4 पुष्पचापाय—ना ; पुष्पवानाय—हे.
5 Hemādri adds a line after this :
ललाटं पुष्पबाणेति शिरः पञ्चशराय वै ।
6 नमोऽनङ्गाय—हे.
7 विलोमायेति जङ्घयोः—हे.
8 नमः श्रीपतये तार्क्ष्यध्वजाङ्कुशधराय च—हे.
9 पद्महस्ताय—हे.
10 तुष्ट्यै—हे.
11 रत्यै—हे.

नमः पुष्ट्यै नमस्तुष्ट्यै नमः [1]सर्वात्मसंपदे ।
एवं संपूज्य गोविन्दमनङ्गात्मानमीश्वरम् ॥
गन्धैर्माल्यैस्तथा धूपैर्नैवेद्यैश्चापि भूरिभिः ।
तत्र चाहूय [2]विधिवद्ब्राह्मणं वेदपारगम् ॥
अभ्यङ्गावयवं[3] पूज्य [4]गन्धधूपार्चनादिभिः ।
शालेयतण्डुलप्रस्थं घृतपात्रेण संयुतम् ॥
तस्मै विप्राय तं दद्यान्माधवः[5] प्रीयतामिति ।
इष्टाहारं च कुर्वीत[6] तमेव द्विजसत्तमम् ॥
रत्यर्थं कामदेवोऽयमिति चित्तेऽवधार्यताम् ।
यद्यदिच्छति विप्रेन्द्रस्तत्तत्कुर्याद्विलासिनी ॥
सर्वभावेन चात्मानमर्पयेत् स्मितभाषिणी ।
एवमादित्यवारेण [7]व्रतमेतत् समापयेत् ॥
तण्डुलप्रस्थदानं च यावन्मासास्त्रयोदश ।
ततस्त्रयोदशे मासे संप्राप्ते तस्य [8]भामिनी ॥
विप्रस्योपस्करैर्युक्तां शय्यां दद्याद्विचक्षणा[9] ।
[10]सोपधानकविश्रामां स्वास्तीर्णास्तरणां शुभाम् ॥
दीपकोपानहच्छत्रं पादुकासनसंयुतम् ।
सपत्नीकमलङ्कृत्य हेममुद्राङ्गुलीयकैः ॥

1 सर्वप्रदेति च—हे.
2 धर्मज्ञं ब्राह्मणं—हे.
3 अभ्यङ्गावपनं—ना, उ.
4 पुष्पतण्डुलचन्दनैः—footnote in हे.
5 हृच्छ्रयः—हे.
6 यथेच्छाहारभुङ्नक्तं—हे.
7 सदा तद्व्रतमाचरेत्—हे.
8 कामिनी—हे.
9 विलक्षणाम्—हे.
10 सोपवासश्च विधिवद्विमिश्रां स्वास्तीर्णां शुभाम्—उ.

सूक्ष्मवस्त्रैः सकटकैर्धूपमाल्यानुलेपनैः ।
कामदेवं सपत्नीकं गुडकुम्भोपरि स्थितम् ॥
ताम्रपात्रासनगतं [1]हेमनेत्रघटान्वितम् ।
[2]सुकांस्यभाजनोपेतमिक्षुदण्डसमन्वितम् ॥
दद्यादनेन मन्त्रेण[3] तथैवैकां पयस्विनीम् ।
यथान्तरं न पश्यामि कामकेशवयोः सदा ॥
तथैव सर्वकामाप्तिरस्तु विष्णो सदा मम ।
यथा न कामिनी[4] देहात् प्रयाति तव केशव ॥
तथा ममापि देवेश शरीरं[5] स्वीकुरु प्रभो ।
तथा च काञ्चनं देवं प्रतिगृह्य द्विजोत्तमः ॥
[6]कोऽदात् कामोऽदादिति वैदिकं मन्त्रमुच्चरेत्[7] ।
ततः प्रदक्षिणीकृत्य विसृज्य द्विजपुङ्गवम् ॥
शय्यासनादिकं सर्वं ब्राह्मणस्य गृहं नयेत् ।
ततः प्रभृति योऽन्योऽपि रत्यर्थं गेहमागतः ॥
संमान्यः सूर्यवारेण स संपूज्यो भवेत्सदा ।
एवं त्रयोदशं यावन्मासमेकं द्विजोत्तम ॥
तर्पयेत यथाकामं प्रोषितेऽन्यं समाहरेत् ।
[8]तदनुज्ञां निषेवेत यावदस्यागमो भवेत् ॥
एवमेकं द्विजं शान्तमाचारज्ञं विचक्षणम् ।
संपूजयेच्चतुःप्राज्ञमपरं वरदाज्ञया ॥

1 हेमनेत्रपटावृतम्—हे.
2 स्वकांस्यभाजने स्यातामिक्षुरससमन्वितम्—उ, ना.
3 दद्याद्यथोक्तमन्त्रेण—हे.
4 कमला—हे.
5 शरीरस्थं पतिं कुरु—हे.
6 कोदादिति पठन्मन्त्रं ध्यायंश्चेतसि माधवम्—हे.
7 कोदादिति यजुर्वेदशाखाप्रसिद्धो मन्त्रः—हे.
8 एतच्छ्लोकार्धपञ्चकं नागपुरकोशे त्रुटितमिव भाति । अयं च पाठो [illegible]माद्रिणाहृतः ।

आत्मनोऽपि यदा विघ्नं गर्भसूनकराजकम् ।
दैवं वा मानुषं वा स्यादुपरागेण वा ततः ॥
[1]लक्ष्मीर्वियुज्यते देव न कदाचिद्यथा तव ।
शय्या ममाप्यशून्यास्तु तथैव मधुसूदन ॥
गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् ।
एतद्धि कथितं सम्यग्भवतीनां विशेषतः ॥
[2]सा वारानष्टपञ्चाशद्यथाशक्त्या समापयेत् ।
सुधर्मोऽयं मतो भव्यो वेश्यानामिह सर्वदा ॥
पुरुहूतेन यत्प्रोक्तं दानवीषु पुरा मया ।
तदिदं सांप्रतं सर्वं भवतीष्वपि युज्यते ॥
सर्वपापप्रशमनमनन्तफलदायकम् ।
[3]कल्याणिनीनां कथितं तत्कुरुध्वं वराङ्गनाः ॥
करोति याऽशेषमखण्डमेतत्
कल्याणिनी माधवलोकसंस्था ।
सा पूजिता देवगणैरशेषै-
रानन्दकृत्स्थानमुपैति विष्णोः ॥

[4]इति वेश्यादित्यवारानङ्गदानव्रतम् ॥

## [आदित्यवारनक्तव्रतम्]

[5]नन्दिकेश्वर उवाच—

[6]यत्तदिष्टात्मनो नाम परं ब्रह्म सनातनम् ।

1 The following four lines are missing in both ना and उ MSS. Supplied by Hemādri.

2 This line is read after the following four lines by Hemādri.

3 Hemādri omits this line but adds three lines:
एष प्रोक्तं मया राजन् दानवेषु ततो मया । तदिदं च व्रतं सर्वं वेश्यानां च प्रकाशितम् । पुराणं धर्मसर्वस्वं वेश्याजनसुखप्रदम् ॥

4 'इति भविष्योत्तरे कामदाने वेश्याव्रतं नाम'—हे.

5 हे. व्र. II., ५३८–५४१.

6 यत्तद्विश्वात्मनो—हे.

सूर्याग्निचन्द्ररूपेण[1] तत्त्रिधा जगति स्थितम् ।
[2]तदाराध्य शुभं विप्र प्राप्नोति कुशलं सदा ॥
तस्मादादित्यवारेण सदा नक्ताशनो भवेत् ।
यदा हस्तेन संयुक्तमादित्यस्य तु वासरम् ॥[3]
तदा शनिदिने[4] कुर्यादेकभक्तं विमत्सरः ।
तदारभ्य सदा कार्यं नक्तमादित्यवासरे ॥
नक्तमादित्यवारेण भोजयित्वा द्विजोत्तमान् ।
पत्रैर्द्वादशभिर्युक्तं[5] रक्तचन्दनपङ्कजम् ॥
विलिख्य विन्यसेत्पूर्वं नमस्कारेण पूर्वतः ।
दिवाकरं तथाग्नेये विवस्वन्तमतः परम् ॥
भगं तु नैर्ऋते तद्वद्वरुणं पश्चिमे दले ।
[6]महेन्द्रमनिले तद्वदादित्यं च तथोत्तरे ॥
शान्तमीशानभागे तु नमस्कारेण विन्यसेत् ।
कर्णिकापूर्वपत्रे तु सूर्यस्य तुरगान् न्यसेत् ॥
दक्षिणे यमनामानं मार्तण्डं पश्चिमे दले ।
उत्तरेण रविं देवं कर्णिकायां तु भास्करम् ॥
[7]रक्तपुष्पोदकेनार्घ्यं सतिलारुणचन्दनैः ।
[8]तस्मिन्न्यसेत्ततो दद्यादिमं मन्त्रमुदीरयेत् ॥

1 सूर्याग्निवज्ररूपेण—ना, उ.
2 Line missing in ना and उ. MSS; Supplied by Hemādri.
3 Hemādri adds a line after this:
उत्पद्यते यदा भक्तिर्भानोरुपरि शाश्वती ।
4 तदादित्यदिने—हे.
5 ततोऽस्तसमये भानो रक्तः—हे.
6 महेन्द्रं मारुतदले—हे.
7 अर्घ्यं दत्वा ततो विप्र—हे.
8 यवाक्षतसमायुक्तमिमं—हे.

"कालात्मा सर्वभूतात्मा [1]वेदात्मा विश्वतोमुखः ।
यस्मादग्नीन्द्ररूपस्त्वमतः पाहि प्रभाकर ॥
अग्निमीळे नमस्तुभ्यमिषे त्वोर्जेति भास्कर ।
अग्न आयाहि वरद नमस्ते ज्योतिषां पते ॥"
अर्घ्यं दत्वा विसृज्याथ निशि तैलविवर्जितः ।
[2]भुञ्जीत वत्सरान्ते तु भास्करं संस्मरन् मुहुः ॥
प्राक्तनेऽह्नि शनौ चैव तैलाभ्यङ्गं विवर्जयेत् ।
वत्सरान्ते कारयित्वा काञ्चनं कमलोत्तमम् ॥
पुरुषं च यथाशक्त्या कारयेद्द्विभुजं तथा ।
सुवर्णशृङ्गीं कपिलां [3]यथार्हां
  रौप्यैः खुरैः कांस्यदोहां सवत्साम् ।
पूर्णे गुडस्योपरि ताम्रपात्रे
  निधाय पद्मे पुरुषं च दद्यात् ॥
संपूज्य [illegible] माल्यधूपै-
  र्द्विजं च रक्तैरथवा पिशङ्गैः ।
[4]प्रक्षालयित्वा पुरुषं सपद्मं
  दद्यादनेकव्रतदानकाय ॥
अव्यक्तरूपाय जितेन्द्रियाय
  कुटुम्बिने देयमनुद्धताय ।
नमो नमः पापविनाशनाय
  विश्वात्मने सप्ततुरङ्गमाय ॥

1 सविता सर्वतोमुखः—हे.

2 ना and उ MSS. omit a verse in the middle by reading : भुञ्जीत वत्सरान्ते तु काञ्चनं कमलोत्तमम् ।

3 महार्घ्यां—हे.

4 These two lines are missing in ना and उ MSS; Supplied by Hemādri.

[1]सामर्ग्यजुर्वासनिधेऽभिधात्रे
भवाब्धिपोताय जगत्सवित्रे ।
[2]त्रयीमयाय त्रिगुणात्मने नम-
स्त्रिलोकनाथाय नमो नमस्ते ॥
[3]इत्यनेन विधिना समाचरं-
श्छन्दमेकमपि यस्तु मानवः ।
सोऽधिरोहति विनष्टकल्मषः
सूर्यधाम धुरतां परावलिः ॥
कर्मसंक्षयमथाप्य भूपतिः
शोकदुःखभयरागवर्जितः ।
द्वीपसप्तकपतिर्भवेत् पुन-
र्धर्ममूर्तिरमितौजसा युतः ॥
या च भर्तृगुरुदेवतत्परा
[4]वेदमूर्तिदिनरात्रमाचरेत् ।
सापि लोकममरेशपूजिता
याति नारद रवेर्न संशयः ॥

[5]इत्यादित्यवारनक्तव्रतानि ॥

इति कल्पतरौ व्रतकाण्डे वारव्रतानि

1 सामर्ग्यजुर्धामनिधे विधात्रे—हे; सामर्ग्यजुर्वासनिधेऽभिधाय—ना, उ.

2 These two lines are missing in ना and उ MSS; Supplied by Hemādri.

3 Hemādri has these two verses in the place of the above verse:

इत्यनेन विधानेन वर्षमेकं तु यो नरः ।
नक्तमादित्यवारेण कुर्यात्स निरुजो भवेत् ॥
धनधान्यसमायुक्तः पुत्रपौत्रसमन्वितः ।
मर्त्ये स्थित्वा चिरं कालं सूर्यलोकमवाप्नुयात् ॥

4 Hemādri reads: 'वेदमूर्तिदिननक्तमाचरेत्' and comments: 'वेदमूर्तिः सूर्यः, तद्दिने नक्तमित्यर्थः ।'

5 इति मत्स्यपुराणोक्तं सूर्यनक्तव्रतम्—हे.

# अथ तिथिव्रतानि

## अथ प्रतिपदादितिथिव्रतानि

तत्र भविष्यपुराणे

सुमन्तुरुवाच—

शृणु कौरव कर्माणि तिथिगुह्याश्रितानि तु ।
श्रुत्वैव पापहानिः स्यात् कृत्वानन्तफलं लभेत् ॥

प्रतिपदि क्षीराशनः । पुण्यप्राशनो द्वितीयायाम् । लवणवर्जं तृतीयायाम् । तिलानश्नीयाच्चतुर्थ्याम् । क्षीराशनः पञ्चम्याम् । फलाशनः षष्ठ्याम् । शाकाशनः सप्तम्यामष्टम्यां वापि । पिष्टाशनो नवम्याम् । अनग्निपक्वाहारो दशम्याम् । एकादश्यां घृताशनः । द्वादश्यां पायसाहारः । त्रयोदश्यां गोमूत्राहारः । चतुर्दश्यां यवाहारः । कुशोदकप्राशनं पञ्चदश्याम् । एष प्राशनविधिस्तिथीनाम् । एवं चानेन पक्षमेकं यो वर्तयति सोऽश्वमेधफलं दशगुणमवाप्नोति । स्वर्गे मन्वन्तरं यावत् प्रतिनिवसति । अथोपगीयमानोऽप्सरोगन्धर्वैश्चतुर्युगानां दशशतं यावत् प्रतिवसति । तथाऽष्टमासपारणे राजसूयाश्वमेधफलं सहस्रगुणं प्राप्नोति । स्वर्गे चतुर्दश मन्वन्तराणि यावत् प्रतिवसति । उपगीयमानोऽप्सरोगन्धर्वैर्य एवं नियमस्थः स त्वेकमेकं वर्तते स विष्णुलोके कालमनन्तं प्रतिवसति । य एवं नियमवान् राजन्नाश्वयुजनवम्यां माघसप्तम्यां वैशाखतृतीयायां कार्तिकपौर्णमास्यां तिथौ व्रतानि गृह्णाति ब्रह्मचारी

गृहस्थो वानप्रस्थो नरो नारी वा शूद्रो वा प्रयतमानसः
सोऽनन्तं ब्रह्मसालोक्यं गच्छति ॥

[इति प्रतिपदादिव्रतम्]

## [क्षीरप्रतिपद्व्रतम्]

[1]शतानीक उवाच—

[2]द्विजैतास्तिथयः प्रोक्ताः संक्षेपान्न तु विस्तरात् ।
विस्तरेणैव मे भूयः [3]प्रब्रूहि द्विजसत्तम ॥
रहस्यं यत्तिथीनां च देवतानां च चेष्टितम् ।
यानीष्टानि च देवानां भोज्यानि नियमांस्तथा[4] ॥

सुमन्तुरुवाच[5]—

देवतानां रहस्यानि व्रतानि नियमांस्तथा ।
तान् शृणुष्व महाभाग गदतो मम मानद[6] ॥

1 हे. व्र. I., ३३५—३३८.
2 द्विजैस्तु तिथयः—ना, उ.
3 ब्रूहि भूयो द्विजवरोत्तम—हे.
4 इतः परं हेमाद्रिणायं श्लोकोऽधिकतया पठितः—
तानि मे वद धर्मज्ञ येन पूतो भवाम्यहम् ।
निर्धनोऽपि यथा विप्र लभेदिष्टफलानि च ॥
5 इतः परं हेमाद्रिणैते श्लोका अधिकतया पठिताः—
रहस्यं यत्तिथीनां च भोजनं फलमेव च ।
यावांश्च यस्य नियमो विशेषात् स्त्रीजनस्य च ॥
एवं तु सर्वमाख्यानं रहस्यं तन्निबोध मे ।
पद्मासनोक्तं पूर्वं तु कथञ्चित् स्वप्रियस्य तु ॥
ततोऽहं संप्रवक्ष्यामि यस्य देवस्य या तिथिः ।
6 इतः परं श्लोकावेतावधिकावत्र हेमाद्रिणा पठितौ—
ब्रह्मा नारायणश्चैव सृष्टिं कर्तुं समुद्यतौ ।
ताभ्यां तदानीमखिलद्यावाभूमी च निर्ममे ॥
दिशश्च प्रदिशश्चैव लोकपालाष्टकावृताः ।
तिथिं पूर्वामिमां राजन् चकाराधिपतिः स्वयम् ॥

तिथीनां प्रवरा यस्माद्ब्रह्मणा समुदाहृता ।
प्रतिपादिता पदे पूर्वे प्रतिपत्तेन चोच्यते ॥
अस्यान्ते कथयिष्यामि चोपवासविधिं परम् ॥
[1]कार्तिक्यां माघसप्तम्यां वैशाख्यां च युगादिषु ।
नियमोपवासं प्रथमं ग्राहयेच्च विधानवित् ॥
या तिथिर्नियमं कर्तुं शक्या समनुगच्छति ।
तस्यां तिथौ विधानं यत् तन्निबोध [2]द्विजोत्तम[3] ॥
यदा वै प्रतिपद्यां तु गृह्णीयान्नियमं नृप ।
चतुर्दश्यां कृताहारः सङ्कल्पं परिकल्पयेत् ॥
अमावास्यां न भुञ्जीत त्रिकालं स्नानमाचरेत् ।
पवित्राणि जपेन्नित्यं गायत्रीं शिरसा सह[4] ॥
अर्चयित्वा विधानेन गन्धमाल्यैर्द्विजोत्तमान् ।

1 कार्तिक्यामथ सप्तम्यां—हे.
2 जनाधिप—उ, हे.
3 इदमर्धमधिकमत्र हेमाद्रिणा पठितम्—
नियमोपवासं प्रथमं ग्राहयेद्विधिवन्नरः ।
4 इतः परमेते श्लोका अधिकतया पठिता हेमाद्रिणा—
अथ वेदपवित्राणि वक्ष्याम्यहमतः परम् ।
येषां जपैश्च होमैश्च पूयन्ते तमसावृताः ॥
अघमर्षणं देवकृतः शुद्धवत्यस्तरत्समाः ।
कूष्माण्ड्यः पावमान्यश्च दुर्गा सावित्रिरेव च ॥
भारुण्डानि च सामानि गायत्रं रैवतं तथा ।
शतपर्वाथर्वशिरस्त्रिसुपर्णं महाव्रतम् ॥
अभिषङ्गाः पदस्तोभः सामानि व्याहृतिस्तथा ।
अब्लिङ्गा बार्हस्पत्यं च वाक्सूक्तं मध्वृतस्तथा ॥
तथा—पुरुषसूक्तमघनाशं च तथा देवव्रतानि च ।
गोसूक्तमश्वसूक्तं च ऐन्द्रशुद्धे च सामनी ।
त्रीण्याज्यदोहानि रथन्तरं च अग्निव्रतं वामदेव्यं बृहच्च ॥
एतानि जप्तानि पुनन्ति जन्तून् जातिस्मरत्वं लभते य इच्छन् ।

...क्षीरं प्रदद्यात्तु ब्रह्मा मे प्रीयतां विभुः ॥
ततो भुञ्जीत गोक्षीरमनेन विधिना नृप ।
एष एव विधिर्दृष्टः सर्वासु तिथिषु नृप ॥
संवत्सरे गते काले व्रतमस्य समापयेत् ।
व्रतान्ते यत्फलं तस्य तन्निबोध नराधिप ॥
विमुक्तपापशुद्धस्य दिव्यदेहस्य देहिनः ।
ब्रह्मा ददाति संतुष्टो विमानममितौजसम् ॥
अव्याहतगतिं दिव्यमप्सरोनरसेवितम्[1] ।
रमयित्वा सुरुचिरं दैवतैः सह देववत् ॥
इह चागत्य विप्रत्वं दश जन्मान्यसौ रमेत् ।
वेदवेदाङ्गविद्विज्ञो विद्वान् दीर्घायुरेव च ॥
भोगी धनपतिर्दाता जायतेऽसौ कृते युगे ।
क्षत्रियो वैश्यः शूद्रो वा ब्राह्मणत्वमवाप्नुयात् ॥
हैहयैस्तालजङ्घैश्च तुरुष्कैर्यवनैः शकैः ।
उपोषिता इहात्रैव ब्राह्मणत्वं च लिप्सिताः[2] ॥

[3][इति क्षीरप्रतिपद्व्रतम्]

## [धन्यप्रतिपद्व्रतम्]

[4]तत्र वराहपुराणे[5]

अगस्त्य उवाच—

अथातः संप्रवक्ष्यामि धन्यव्रतमनुत्तमम् ।

1 अप्सरकिन्नरैर्वृतम्—उ, हे.
2 लम्भिताः—उ; ब्राह्मणत्वं लभन्ति ते—हे.
3 इति भविष्यत्पुराणे क्षीरप्रतिपद्व्रतम्—हे; इति प्रतिपदादिव्रतम्—ना, उ.
4 हे. व्र. I., ३५५-३५६.
5 वायुपुराणे—ना; वराहपुराणे—उ, हे.

येन सद्यो भवेद्धन्यो ह्यधन्योऽपि हि यो भवेत् ॥
मार्गशीर्षे सिते पक्षे प्रतिपद्या तिथिर्भवेत् ।
तस्यां नक्तं प्रकुर्वीत रात्रौ विष्णुं च पूजयेत् ॥
वैश्वानराय पादौ तु अग्नये चोदरं तथा ।
[1]हविर्भुजाय च उरो द्रविणायेति वै भुजे ॥
संवर्तायेति च शिरो ज्वलनायेति सर्वतः ।
अभ्यर्च्यैवं विधानेन देवदेवं जनार्दनम् ॥
तस्यैव पुरतः कुण्डं कारयित्वा विधानतः ।
[2]होमं तत्र च कुर्वीत एतैर्मन्त्रैर्विचक्षणः ॥

'एतैर्मन्त्रैः' वैश्वानरायेति प्रागुक्तैः ॥

ततस्तु यावकं चान्नं भुञ्जीत घृतसंयुतम् ।
कृष्णपक्षेऽप्येवमेव चातुर्मास्यां तु यावकम् ॥
चैत्रादिषु च भुञ्जीत पायसं सघृतं बुधः ।
श्रावणादिषु सक्तूंश्च ततश्चैतत् समाप्यते ॥
समाप्ते च व्रते वह्निं काञ्चनं कारयेन्नृप ।
रक्तवस्त्रयुगच्छन्नं रक्तपुष्पानुलेपनम् ॥
कुङ्कुमेन तथा लिप्य ब्राह्मणं त्वेवमेव तु ।
सर्वावयवसंपूर्णं गुणाढ्यं प्रियदर्शनम् ॥
पूजयित्वा विधानेन रक्तवस्त्रयुगेन च ।
पश्चात् प्रदद्यात्तं तस्य मन्त्रेणानेन मन्त्रवित् ॥
"[3]धन्योऽस्मि धन्यकर्मा च धन्यवेषोऽस्मि धन्यवान् ।
धन्येनानेन चीर्णेन व्रतेन स्यां सदा सुखी ॥"

1 हविर्भुजे तथोरुश्च द्रविणोदाय वै भुजे—हे.

2 होमान्ते व्रतं कुर्वीत—हे.

3 धन्योऽसि धन्यधर्मा च धन्योऽस्मि धन्यवान् भवान्—हे.

एवमुच्चार्य तं विप्रे न्यसेत्कोशमिवात्मनः ।
सद्यो धन्यत्वमाप्नोति योऽपि स्याद्भाग्यवर्जितः
इह जन्मनि सौभाग्यं धनं धान्यं च पुष्कलम् ।
अनेन कृतमात्रेण जायते नात्र संशयः ॥
प्राग्जन्मसंचितं[1] पापं वह्निर्दहति तस्य वै ।
दग्धपापः स शुद्धात्मा सोऽमुत्रेह च नन्दति ॥

[2]इति प्रतिपद्धन्यव्रतम् ॥

## अथ द्वितीयाव्रतानि

### [पुष्पद्वितीयाव्रतम्]

[3]तत्र भविष्यपुराणे[4]

रूपं सुरूपं[5] यो वापि तथा च प्रवराः स्त्रियः ।
कार्तिके शुक्लपक्षस्य द्वितीयायां नराधिप ॥
पुष्पाहारो वर्षमेकं वसेत् स नियतात्मवान् ।
कालप्राप्तानि यानि स्युर्हविष्यकुसुमानि च ॥
भुञ्जीत तानि दत्वा तु ब्राह्मणेभ्यो नराधिप ।
सुवर्णस्य च पुष्पाणि गवा सह ददाति यः ॥
व्रतान्ते तस्य संतुष्टौ देवौ त्रिभुवनेश्वरौ ।
दत्तः कामांस्तथा दिव्यान् विमानममितौजसम्
सुचिरं देवनारीभिर्लोके च रमतेऽश्विनोः ।

1 वाङ्मनःसञ्चितं—हे.
2 'इति वराहपुराणोक्तं धन्यव्रतम्'—हे. व्र. I., ३५६.
3 हे. व्र. I., ३८१–३८२.
4 कृष्ण उवाच—हे.
5 स्वरूपं—ना, उ; रूपं सुरूपं यो वाञ्छेत्सौभाग्यं—हे.

इह चागत्य कल्पान्ते द्विजो विप्रपुरस्कृतः ॥
वेदवेदाङ्गविद्वान् स्यात् सप्तजन्मान्तराण्यसौ ।
दाता दान्तमतिर्वाग्मी चाधिव्याधिविवर्जितः ॥
पुत्रपौत्रैः परिवृतः सह पत्न्या रमेच्चिरम् ।
मध्यदेशे सुरम्ये च धर्मिष्ठो राज्यभाग्भवेत् ।
कथितेयं मया तुभ्यं द्वितीया पुष्पसंज्ञिता ॥

'कार्तिके शुक्लपक्षस्य' इति, कार्तिकशुक्लद्वितीयायां व्रतमारभ्यान्यास्वपि शुक्लद्वितीयास्वेवं वर्षपर्यन्तं पुष्पाहारो व्रतं कुर्यादित्यर्थः। 'हविष्यकुसुमानि' देवपूजार्हाणि भक्षयेच्चाविरोधीनि। अश्विनावत्र पूजनीयौ। तयोरेवात्र फलप्रदत्वेन श्रवणात् ॥[1]

इति पुष्पद्वितीयाव्रतम्[2] ॥

## [अशून्यशयनव्रतम्]

[3]सुमन्तुरुवाच[4]—

अशून्यशयनां नाम द्वितीयां शृणु भारत ।
यामुपोष्य न वैधव्यं स्त्री प्रयाति नराधिप ॥
पत्नीवियुक्तश्च नरो न कदाचित् प्रजायते[5] ।

1 Comment reproduced by Hemādri.

2 इति भविष्यत्पुराणोक्तं पुष्पद्वितीयाव्रतम्—हे.

3 हे. व्र. I., ३७२–३७५; 'भविष्योत्तरात्' इति हेमाद्रिः ।

4 कृष्ण उवाच—हे.

5 इतः परमर्धत्रयमधिकतया पठति हेमाद्रिः—
शेते जगत्पतिः कृष्णः श्रिया सार्धं यदा नृप ।
अशून्यशयना नाम तदा ग्राह्या तु सा तिथिः ॥
उपवासेन नक्तेन तथैवायाचितेन च ।

'उपोष्य' इत्युपवासदिने । उपवसनं न पुनरनशनम् । 'नक्तं भुञ्जीत' इत्यग्रेऽभिधानात्[1] ॥

कृष्णपक्षे द्वितीयायां श्रावणे मासि भारत[2] ॥
इदमुच्चारयेत् [3]स्नातः प्रणम्य च जगत्पतिम् ।
"श्रीवत्सधारिन् श्रीवास श्रीकान्त श्रीपतेऽव्यय ॥
गार्हस्थ्यं मा प्रणाशं मे यातु धर्मार्थकामदम् ।
शुचयो मा प्रणश्यन्तु मा प्रणश्यन्तु निर्जराः ।
याम्यगा मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ॥

'शुचयः' अग्नयः । 'याम्यगाः' पितरः ॥[4]

लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा भवान् ।
तथा कलत्रसंबन्धो देव मा मे वियुज्यताम् ॥
लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा ।
शय्या ममाप्यशून्यास्तु तथात्र मधुसूदन ॥[5]"

1 अत्रोपवासदिने न पुनरनशनं नक्तं भुञ्जीतेत्यग्रेऽभिधानात्—हे.

2 इतः परमिमौ श्लोकावधिकतया पठति हेमाद्रिः—
स्नानं नदीतडागे वा गृहे वा नियतात्मवान् ।
स्थण्डिलं चतुरस्रं च मृन्मयं कारयेत्ततः ॥
तत्रस्थं श्रीधरं श्रीशं भक्त्याभ्यर्च्य श्रिया सह ।
नैवेद्यैः पुष्पधूपाद्यैः फलैः कालोद्भवैः शुभैः ॥

3 मन्त्रं—हे.

4 Hemādri reproduces the comment and adds : 'निर्जराः' देवाः ।

5 इतः परमेते श्लोका अधिका विष्णुरहस्यादुद्धृताः हेमाद्रिव्रतखण्डे—
विष्णुरहस्ये पुनरिमे मन्त्राः—
पत्नी भर्तृवियोगं च भर्ता भार्यासमुद्भवम् ।
नाप्नुवन्ति यथा दुःखं दाम्पत्यानि तथा कुरु ॥
यथा श्रियाऽवियुक्तस्त्वं लक्ष्मीर्देव त्वया यथा ।
प्रसादात्तव देवेश स्थितिरस्तु तथावयोः ॥
मात्मपुत्राः प्रणश्यन्तु मा धनं मा कुलक्रमः ।
अग्नयो मा प्रणश्यन्तु गृहभङ्गोऽस्तु मावयोः ॥
शेषो ग्रन्थो भविष्योत्तरेण तुल्यार्थः ॥

एवं प्रसाद्य पूजां च कृत्वा लक्ष्म्यास्तथा हरेः ।
फलानि दद्याच्छय्यायामभीष्टानि जगत्पतेः ॥
नक्तं प्रणम्यायतने हरिं भुञ्जीत वाग्यतः ।[1]

'नक्तं भुञ्जीत' इत्यन्वयः ॥[2]

ब्राह्मणाय द्वितीयेऽह्नि शक्त्या दद्यात्तु दक्षिणाम् ।
यानि तत्र महाबाहो काले सन्ति फलानि च ।
मधुराणि न तीव्राणि न चापि कटुकानि च ॥
दातव्यानि नृपश्रेष्ठ स्वशक्त्या शयनं नृप ।
मधुराणि च दत्वा तु मनोवल्लभतां व्रजेत् ॥
तस्मात् कटुकतीव्राणि स्त्रीलिङ्गानि च वर्जयेत् ।
खर्जूरमातुलुङ्गानि स्थितेन शिरसा सह ॥
फलानि शयने राजन् यज्ञभागहरस्य तु ।
एतान्येव तु विप्राय गाङ्गेयसहितानि तु ॥
द्वितीयेऽह्नि प्रदेयानि भक्त्या शक्त्या च भारत ।
वासोदानं तथा धान्यफलदानसमन्वितम् ॥

1 अतः परं श्लोकपञ्चकमधिकं दृश्यते हेमाद्रिव्रतखण्डे—

चन्द्रोदये स्नानपूर्वं पञ्चगव्येन संयुतम् ।
विप्राय दक्षिणां दत्वा स्वशक्त्या फलसंयुतम् ॥
अनेन विधिना राजन् यावन्मासचतुष्टयम् ।
कृष्णपक्षे द्वितीयायां प्रागुक्तविधिनाचरेत् ॥
कार्तिके त्वथ संप्राप्ते शय्यां श्रीकान्तसंयुताम् ।
सोपस्करां सोदकुम्भां साम्रां दद्याद्द्विजातये ॥
प्रतिमासं च सोमाय अर्घं दद्यात् समन्त्रकम् ।
दध्यक्षतैर्मूलफलैः रत्नैः सौवर्णभाजनैः ॥
गगनाङ्गणसंभूत दुग्धाब्धिमथनोद्भव ।
भाभासितदिगाभोग रमानुज नमोऽस्तु ते ॥

2 हरिं प्रणम्य नक्तं भुञ्जीतेत्यन्वयः—हे.

'[1]स्थितेन शिरसा' नालिकेरेण विद्यमानवृन्तेनेत्यर्थः। '[2]यज्ञभागहरो' यज्ञपुरुषः। 'गाङ्गेयम्' अत्र सुवर्णम् ॥

एवं करोति यः सम्यङ्नरो मासचतुष्टयम्।
तस्य जन्मत्रयं वीर गृहभङ्गो न जायते ॥

'मासचतुष्टयम्' कृष्णद्वितीयास्विति शेषः ॥[3]

अशून्यशयनश्च स्याद्धर्मकामार्थसाधकः।
भवत्यव्याहतैश्वर्यः पुरुषो नात्र संशयः ॥
नारी वा राजधर्मज्ञा व्रतमेतद्यथाविधि।
या करोति न शोच्यासौ बन्धुवर्गस्य जायते ॥
वैधव्यं दुर्भगत्वं च भर्तृत्यागं च सत्तम।
नाप्नोति जन्मत्रितयमेतत्कृत्वा महाव्रतम् ॥
इत्येषा कथिता राजन् द्वितीयातिथिरुत्तमा।
यामुपोष्य नरो राजन्नृद्धिं वृद्धिं श्रियं व्रजेत् ॥[4]

इत्यशून्यशयनं द्वितीयाव्रतम् ॥

<u>मत्स्यपुराण</u>

<u>ब्रह्मोवाच</u>—

भगवन् पुरुषस्येह स्त्रियाश्च विरहादिकम्।
शोकव्याधिभयं दुःखं न भवेद्येन तद्वद ॥

1 'स्थितेन शिरसा सह' नालिकेरं यथास्थितं वर्जयेत्। अन्तर्गोलं दद्यात्।—हे.

2 हेमाद्रिः 'यज्ञभागं हरस्य तु' इति पठित्वैवं व्याचख्यौ—'हरस्य यज्ञभागं वर्जयेत् रुद्रप्रीत्यर्थं कतिचिदवशेष्य परितस्त्यजेदित्यर्थः।'

3 Comment reproduced by Hemādri.

4 अयं श्लोको हेमाद्रिव्रतखण्डेऽधिकतया दृश्यते—

एषा ह्यशून्यशयना नृपते द्वितीया ख्याता समस्तकलुषापहरा द्वितीया।
एनां सदाचरति यः पुरुषोऽथ योषित् प्राप्नोत्यसौ शयनमप्र्यमहार्हभोगम् ॥

हे. व्र. I., १७५.

श्रीभगवानुवाच—

श्रावणस्य द्वितीयायां कृष्णायां मधुसूदन ।
क्षीरार्णवे सलक्ष्मीकः सदा वसति केशवः ॥
तस्यां संपूज्य गोविन्दं सर्वान् कामान् समश्नुते ।
[1]गोभूहिरण्यदानादि सप्तकल्पशतानुगम् ॥
अशून्यशयना नाम द्वितीया सा प्रकीर्तिता ।
तस्यां संपूजयेद्विष्णुमेभिर्मन्त्रैर्विशेषतः ॥
"श्रीवत्सधारिन् श्रीकान्त श्रीधाम श्रीपतेऽव्यय ।
पितरो मा प्रणश्यन्तु मत्तो दाम्पत्यभेदतः ॥
लक्ष्म्या वियुज्यते देवो न कदाचिद्यथा हरिः ।
तथा कलत्रसंबन्धो देव माऽऽत्मा वियुज्यताम् ॥
लक्ष्म्या न शून्यं वरद यथा ते शयनं सदा ।
शय्या ममाप्यशून्यास्तु तथैव मधुसूदन ॥"
[2]गीतवादित्रनिर्घोषं देवदेवस्य कारयेत् ।
[3]घण्टा भवेदशक्तस्य सर्ववाद्यमयी यतः ॥
एवं संपूज्य गोविन्दमश्नीयात्तैलवर्जितम् ।
नक्तमक्षारलवणं यावत्तत्स्याच्चतुष्टयम् ॥
ततः प्रभाते संजाते लक्ष्मीपतिसमन्विताम् ।
[4]दीपान्नभोजनैर्युक्तां शय्यां दद्याद्विचक्षणः ॥
पादुकोपानहच्छत्रचामरासनसंयुताम् ।

1 श्लोकार्धमिदं—'ना' कोशे नास्ति; 'उ' कोशात्संपादितम्.

2 "पद्मपुराणे तु तदेव सकलं मन्त्रादिकमभिधाय—शङ्कर उवाच" इत्युपक्रम्य 'गीतवादित्रे'त्यादि 'महीयते' इत्यन्तं पठति भविष्योत्तरोक्त—अशून्यशयनव्रतानन्तरं हेमाद्रिः, व्रतखण्डे, I., ३७५–३७६.

3 घण्टावादनशक्तस्य सर्वदेवमयीं नमः—हे.

4 दीपार्थभाजनैर्युक्तां—ना, उ.

[1]अभीष्टोपस्करैर्युक्तां शुक्लपुष्पाम्बरान्विताम् ॥
सोपधानकविश्रामां फलैर्नानाविधैर्युताम् ।
तथाभरणधान्यैश्च यथाशक्त्या समन्विताम् ॥
अव्यङ्गाय च विप्राय वैष्णवाय कुटुम्बिने ।
दातव्या वेदविदुषे [2]न च कुप्येत कस्यचित् ॥
तत्रोपवेश्य दाम्पत्यमलङ्कृत्य विधानतः ।
पत्न्यास्तु भाजनं दद्याद्भक्ष्यभोज्यसमन्वितम् ॥
ब्राह्मणस्यापि सौवर्णीमुपस्करसमन्विताम् ।
प्रतिमां देवदेवस्य सोदकुम्भां निवेदयेत् ॥
[3]एवं यस्तु पुमान् कुर्यादशून्यशयनं हरेः[4] ।
[5]वित्तशाठ्येन रहितो रामायणपरायणः ॥
न तस्य [6]पत्न्या विरहः कदाचिदपि जायते ।
नारी वाऽविधवा ब्रह्मन् यावच्चन्द्रार्कतारकम् ॥
[7]न विरूपं न शोकार्तं दाम्पत्यं जायते क्वचित् ।
न पुत्रपशुरत्नानि क्षयं यान्ति पितामह ॥
सप्त कल्पसहस्राणि सप्त कल्पशतानि च ।
कुर्वन्नशून्यशयनं विष्णुलोके महीयते ॥

इत्यशून्यशयनव्रतम् ॥

1 इतः परमर्धद्वयं नास्ति—हे.
2 न बकव्रतिने क्वचित्—हे.
3 इतः परं नागपुरकोशे श्लोकार्धपञ्चकं न दृश्यते ।
4 कुर्यादशून्यशयनव्रतम्—हे.
5 अर्धमिदं नास्ति—हे.
6 वित्तविरहः—हे.
7 इतः परं विद्यमानाः श्लोकाः 'मत्स्यपुराणात्' इत्याह—हेमाद्रिः ।

## [कान्तिव्रतम्]

[1]वराहपुराणे

अगस्त्य उवाच—

अथातः संप्रवक्ष्यामि कान्तिव्रतमनुत्तमम् ।
द्वितीयायां तु राजेन्द्र कार्तिकस्य सिते दिने ॥
नक्तं कुर्वीत यत्नेनाप्यर्चयेद्बलकेशवौ ।
बलदेवाय पादौ तु केशवाय शिरोऽर्चयेत् ॥
एवमभ्यर्च्य मेधावी वैष्णवं रूपमुत्तमम् ।
परं स्वरूपं सोमाख्यं द्विकलं तद्दिनेऽर्चयेत् ॥[2]
दद्यादर्घ्यं च मतिमान् मन्त्रेण परमेष्ठिनः ।[3]
"नमोऽस्त्वमृतरूपाय सर्वौषधिधराय च ॥
यज्ञलोकाधिपतये सोमाय परमात्मने ।"
अनेन खलु मन्त्रेण दत्वार्घ्यं शशिने नृप ॥
[4]रात्रौ सविप्रो भुञ्जीत यवान्नं सघृतं नृप ।
फाल्गुनादिचतुष्ट्यां तु पायसं सघृतं शुचिः ॥
तिलहोमं प्रकुर्वीत कार्तिके तु यवैस्तथा ।
आषाढादिचतुष्ट्यां तु घृतहोमं तु कारयेत् ॥
नक्तं तिलान्नं भुञ्जीत एष पूर्वविधिक्रमः ।[5]

1 हे. व्र. I., ३७७–३७९.

2 Hemādri comments:
सोमरूपं विष्णुरूपं कृत्वा तस्य पादौ 'बलदेवाय' इत्यर्चयेत् । शिरः 'केशवाय' इत्यर्चयेत् । एवमङ्गद्वयमभ्यर्च्य शेषं रूपमर्चयेत् । 'तद्दिने' द्वितीयादिने । 'द्विकलं' द्वे कले यस्य तत् । द्वे कले बलदेवकेशवाख्ये निग्रहानुग्रहशक्ती व्यक्ते भवतः ।

3 Hemādri comments:
'परमेष्ठिनः' चन्द्ररूपस्य विष्णोः । तमेव मन्त्रमाह ।

4 Hemādri comments:
'सविप्रः' सब्राह्मणः । तेन ब्राह्मणाय भोजनं हुत्वा स्वयं भोक्तव्यमित्यर्थः सिध्यति ।

5 Hemādri comments:
कार्तिकादिचतुष्के यवान्नं भुञ्जीतेत्यर्थसिद्धम् ।

अतः संवत्सरे पूर्णे कृत्वा सोमं तु राजतम् ॥
सितवस्त्रयुगच्छन्नं सितपुष्पानुलेपनम् ।
एवमेव द्विजं पूज्य ततस्तं प्रतिपादयेत् ॥
"कान्तिमानखिलोके[1] तु सर्वज्ञः प्रियदर्शनः ।
त्वत्प्रसादात् सोमरूपी नारायण नमोऽस्तु ते ॥"
अनेन खलु मन्त्रेण दत्वा विप्राय वाग्यतः ।
कृतमात्रे ततस्तस्मिन् कान्तिमान् जायते नरः ॥
आत्रेयेणापि सोमेन कृतमेतत् पुरा नृप ।
तस्य व्रतान्ते संतुष्टः स्वयमेव जनार्दनः ॥

[[2]इति कान्तिव्रतम्]

इति द्वितीयाव्रतानि ॥

## अथ तृतीयाव्रतानि

### [अलवणतृतीयाव्रतम्]

[3]तत्र भविष्यपुराणे

सुमन्तुरुवाच—

पतिव्रता पतिप्राणा पतिशुश्रूषणे रता ।
एवंविधापि या युक्ता शुचिसंभोजना सती ॥
सोपवासा तृतीयायां लवणं परिवर्जयेत् ।

'सोपवासा' इति, व्रतारम्भे द्वितीयायां कृतोपवासा तृतीयायां लवणं परिवर्जयेदित्यर्थः ॥[4]

1 कान्तिमानस्मि लोके तु—ना, उ.
2 इति वराहपुराणोक्तं सोद्यापनं कान्तिद्वितीयाव्रतम्—हे.
3 हे. व्र. I., ४७४-४७७.
4 Comment reproduced by हेमाद्रि.

सा वै गृह्णातु वै भक्त्या व्रतमामरणान्तिकम् ॥
गौरी ददाति संतुष्टा रूपं सौभाग्यमेव च ।
[1]लावण्यं ललितं हृद्यं श्लाघ्यं पुंसां मनोनुगम् ॥
पुंसां मनोरमा नारी भर्ता भार्यामनोरमः ।
गौरीव्रतेन लभते राजन् लवणवर्जनात् ॥
उमया च पुरा प्रोक्तं [2]यद्वाक्यं तन्निबोध मे ।
इदं व्रतं[3] प्रति विभो धर्मराजस्य शृण्वतः ॥
मम व्रतमिदं श्रेष्ठं[4] सौभाग्यकरणं नृणाम् ।
भर्त्रा[5] तु नियता नारी व्रतमेतच्चरिष्यति ॥
सा च[6] मोदिष्यते भर्त्रा यावद्भर्ता हरो मम ।
या च कल्याणभर्तारं विन्दते शोभना सती ॥
सा त्विदं व्रतमुद्दिश्य भवेदक्षारभोजना ।
मच्चित्ता मन्मनाः कुर्यान्मद्भक्ता मत्परिग्रहा ॥
गौरीं संस्थाप्य सौवर्णीं गन्धालङ्कारभूषिताम् ।
वस्त्रैः सुसूक्ष्मैः संवीतां पुष्पमण्डनमण्डिताम् ॥
[7]लवणं सगुडं तैलं दद्याच्छुक्ले निवेदयेत् ।[8]
कटुकन्दं जीरकं च शङ्खं पत्रं च भारत ॥

'शुक्ले' पक्ष इति शेषः । 'कटुकन्दम्' आर्द्रकम् ॥

गुडपूपास्तथा पूपाः खण्डवेष्टास्तथा नृप ।

1 लावण्यलवणं—हे.
2 यद्वा तच्च—हे.
3 इतिव्रतं—हे.
4 मयानन्तमिदं सृष्टं—हे.
5 मर्त्यैं—हे.
6 सह—हे.
7 लवणामृतं गुडं—हे.
8 इतः परमर्धद्वयं व्याख्यानं च नागपुरकोशे न स्तः ।

ब्राह्मणे व्रतसंपन्ने प्रदेयाः सुबहुश्रुते ॥
[1]भुक्ते त्वर्चा सदा देया यथाशक्त्या हिरण्मयी ।
धनहीनैस्तु भक्त्या वै मधुक्षीरमयी नृप ॥
अक्षारलवणं रात्रौ भुङ्क्ते वीर स्ववाग्यतः ।
गौरी सन्निहिता नित्यं भूमौ संस्तरशायिनी ॥
भर्तारं लभते कन्या यद्वाञ्छति मनोनुगम् ।
सुचिरं सह भर्तारं क्रीडयित्वा त्विहैव सा ॥
सन्ततिं च प्रतिष्ठाप्य सह तेनैव गच्छति ।
इह लोकात् परे लोके भोगश्चित्रशिखण्डिनाम् ॥
विधवा तु यदा राजन् देव्या व्रतपरायणा ।
भर्तारं नियता नित्यं सदार्चनपरायणा ॥
इहैवोत्सृज्य देहं स्वं दृष्ट्वा हरपुरे प्रियम्[2] ।
आकृष्य [3]मम भूतेभ्यः सह भर्त्रा रमेद्दिवि ॥
वर्षकोटिं दशगुणं रमित्वा सा इहागता ।
भर्त्रा सहैव पूर्वोक्तं लभते [4]फलमीहितम् ॥
इत्येषा तिथिरित्येवं तृतीया लोकपूजिता ।
सदा विशेषतः पुण्या वैशाखे मासि या भवेत् ॥
पुण्या भाद्रपदे मासि माघस्यैव न संशयः ।
माघे भाद्रपदे चापि स्त्रीणां धन्या [5]प्रशस्यते ॥
साधारणा तु वै पूर्वा सर्वलोकस्य भारत ।
माघे मासे तृतीयायां गुडस्य लवणस्य च ॥
दानं श्रेयस्करं राजन् स्त्रीणां च पुरुषस्य च ।

1 शुक्रे शुक्रे सदा देया यथाशक्त्या हिरण्मयी—हे.
2 हरपुरश्चियम्—उ; हरं प्रियं सदा—ना.
3 यमदूतेभ्यः सा भर्तारं रमेद्दिवि—हे.
4 फलमीप्सितम्—हे.
5 प्रचक्षते—हे.

गुडेन तुष्यते देवी [1]लवणेन तु शंकरः ॥
गुडपूपास्तु दातव्या मासि भाद्रपदे तु सा ।
[2]तृतीया पायसं चापि वामदेवस्य प्रीतये ॥[3]
वारिदानं प्रशस्तं च मोदकानां च भारत ।
वैशाखे मासि राजेन्द्र तृतीया चन्दनस्य च ॥
वारिणा तुष्यते देवी मोदकैर्भव एव हि ।
दानात्तु चन्दनस्येह [4]कञ्जजो नात्र संशयः ॥
या त्वेषा कुरुशार्दूल वैशाखे मासि वै तिथिः ।
तृतीया साक्षया लोके गीर्वाणैरिह शस्यते ॥
योऽस्यां ददाति करकान् वारिधान्यसमन्वितान् ।
स याति पुरुषो धीमान् लोकं वै [5]हेममालिनः ॥
इत्येषा कथिता वीर तृतीया तिथिरुत्तमा ।
यामुपोष्य नरो राजन् बुद्धिवृद्धिं श्रियं व्रजेत् ॥

[6]इत्यलवणतृतीयाव्रतम्

## [आर्द्रानन्दकरीतृतीयाव्रतम ]

[7]पद्मपुराण

पुलस्त्य उवाच—

तथैवान्यां प्रवक्ष्यामि तृतीयां पापनाशिनीम् ।

1 लवणेन स्वयंभुवः—ना, उ.
2 तृतीया याक्षया लोके गीर्वाणैरुपशब्द्यते ।—हे.
3 इतः परमयं श्लोकोऽधिको हेमाद्रिव्रतखण्डे—
योऽस्यां ददाति करकान् वारिधारासमन्वितान् ।
स याति पुरुषो वीर लोकान्वै हेतिमालिनः ॥
4 नरयोनावसंभवः—हे.
5 हेतिमालिनः—हे.
6 इति भविष्यत्पुराणोक्तम् अलवणतृतीयाव्रतम् —हे.
7 हे. व्र. I., ४७१–४७४.

नाम्ना च लोके विख्याता आर्द्रानन्दकरीति या ॥
यदा शुक्लतृतीयायामाषाढर्क्षं भवेत् क्वचित् ।
ब्राह्मर्क्षं वा तथाप्यं वा हस्तं मूलमथापि वा ॥

'आषाढर्क्षम्' उत्तराषाढा। 'ब्राह्मर्क्षम्' अभिजित्। 'आप्यं', पूर्वाषाढा ॥[1]

दर्भगन्धोदकैः स्नानं तदा सम्यक् समाचरेत् ।
शुक्लमाल्याम्बरधरः शुक्लगन्धानुलेपनः ॥
भवानीमर्चयेद्भक्त्या शुक्लपुष्पैः सुगन्धिभिः ।
[2]महादेवं तथैकस्मिन्नुपविष्टं तथासने ॥
वासुदेव्यै नमः पादौ शंकराय ततो हरम् ।

'वासुदेव्यै नमः पादौ' इति, वासुदेव्यै नम इति देव्याः पादौ पूजयेत्। 'ओं शंकराय नमः' इति हरस्य पादौ पूजयेत्। एवमग्रेऽपि बोद्धव्यम् ॥

जङ्घे शोकविनाशिन्यै आनन्दाय नमः प्रभो ॥
रम्भायै पूजयेदूरू शिवाय च पिनाकिनः ।
आनन्दिन्यै कटिं देव्याः शूलिनः शूलपाणये ॥
माधव्यै च तथा नाभिमथ शम्भोर्भवाय वै ।
स्तनावानन्दकारिण्यै शंकरायेन्दुधारिणे ॥
उत्कण्ठिन्यै नमः कण्ठं नीलकण्ठाय वै हरे ।
करावुत्पलधारिण्यै रुद्राय [3]जगतां पतौ ॥
बाहू च परिरम्भिण्यै [illegible]लाय वै हरे ।

1 Comment reproduced by Hemādri.
2 भवेन सहितां राजन्नुपविष्टाम्बरासने—हे.
3 यजतां पतौ—हे.

देव्या मुखं विलासिन्यै वृषाङ्काय[1] पुनर्विभोः ॥
[2]स्मितं च स्मरशीलायै विश्ववक्त्राय तत्परे ।
नेत्रे [3]मन्दनिवासिन्यै [4]विश्वधाम्न्यै त्रिशूलिनः ॥
भ्रुवौ [5]नृत्यप्रियायै च ताण्डवेशाय [6]शूलिनः ।
देव्या ललाटमिन्द्राण्यै हव्यवाहाय वै विभोः ॥
स्वाहायै मुकुटं देव्या [7]विभोर्गङ्गाधराय वै ।
विश्वमुख्यौ विश्वकायौ विश्वपादकरौ शिवौ ॥
प्रसन्नवदनौ वन्दे पार्वतीपरमेश्वरौ ।
एवं संपूज्य विधिवदग्रतः शिवयोः पुनः ॥
पद्मोत्पलानि रजसा नानावर्णानि [8]कारयेत् ।
[9]शङ्खं चक्रं च मकुटं स्वस्तिकं स्वभटामरम् ॥
यावन्तः पांसवस्तत्र रजसः पतिता भुवि ।
तावद्वर्षसहस्राणि [10]रुद्रलोके महीयते ॥
चत्वारि घृतपात्राणि सहिरण्यानि [11]शक्तितः
दद्याद्द्विजाय [12]करकमुदकान्नसमन्वितम् ॥
प्रतिपक्षं चतुर्मासं [13]यवान्नेन निवेदयेत् ।

1 वृषेशाय—हे.
2 श्लोकार्धमिदमधिकतया पठ्यते—हे. व्र. I., ४७२.
3 दमनवासिन्यै—हे.
4 विश्वधात्र्यै—हे.
5 नेतृप्रियायै—हे.
6 वै विभो—हे.
7 शम्भोः—हे.
8 वा लिखेत्—हे.
9 शङ्खं चक्रं स्वस्तिकं च तथा चैवार्धनाणकम्—हे.
10 रुद्रलोके—हे.
11 भक्तितः—हे.
12 करकमुदकेन समन्वितम्—हे.
13 यावदेतान्—हे.

ततस्तु चतुरो मासान् पूर्ववत् करकोपरि ॥
[1]दत्वा च सक्तुपात्राणि तिलपात्राण्यनन्तरम् ।[2]
[3]गन्धोदके पुष्पवारि चन्दनं कुङ्कुमोदकम् ॥
अपक्वं दधि दुग्धं च गोशृङ्गोदकमेव च ।
पिष्टोदकं[4] तथा वारि [5]कुष्ठचूर्णान्वितं पुनः ॥
उशीरसलिलं तद्वद्यवपूर्णोदकं[6] तथा ।
तिलोदकं तु संप्राप्य स्वपेन्मार्गशिरादिषु ॥
मासेषु पक्षद्वितयं प्राशनं समुदाहृतम् ।
सर्वाणि शुक्लपुष्पाणि प्रशस्तानि [7]सदार्चने ॥
दानकाले च सर्वत्र मन्त्रमेतमुदीरयेत् ।
"गौरी मे प्रीयतां नित्यमनिन्द्या सर्वमङ्गला ॥
सौभाग्यायास्तु ललिता[8] भवानी सर्वसिद्धये ।"
संवत्सरान्ते लवणं गुडकुम्भसमन्वितम् ॥
चन्दनं नेत्रपट्टं च सहिरण्याम्बुजं ततः ।
उमामहेश्वरं हैमं तद्वदिक्षुफलैर्युतम् ॥
वरां स्वास्तरणां शय्यां सविश्रामां[9] निवेदयेत् ।
सपत्नीकाय विप्राय गौरी मे प्रीयतामिति ॥
आर्द्रानन्दकरी नाम तृतीयैषा सनातनी ।

1 चत्वारिंशत्तु पात्राणि—हे.
2 Hemādri adds :—
पूर्ववत्सहिरण्यानि करकोपरिधाय दद्यात्—हे.
3 गन्धोदके—हे; शन्नोदके—ना, उ.
4 पुष्पोदकं—ना, उ.
5 कृष्णपूर्णान्वितं—ना, उ.
6 तद्वद्यववल्ल्युदकं—हे.
7 शिवार्चने—हे.
8 सौभाग्याय सुललिता—हे.
9 सुशुक्लामास्तृतां शय्यां सोपधानां—हे.

यामुपोष्य नरो याति शम्भोर्यत् परमं पदम् ॥
[1]इह लोके सदानन्दं प्राप्नोति च न संशयः ।
आयुरारोग्यसन्तत्या न कश्चिच्छोकमाप्नुयात् ॥
नारी वा कुरुते या तु कुमारी विधवापि वा ।
सापि तत्फलमाप्नोति [2]देव्यनुग्रहलालिता ॥
प्रतिपक्षमुपोष्यैवं मन्त्रार्चनविधानवित् ।
रुद्राणीलोकमाप्नोति पुनरावृत्तिदुर्लभम् ॥[3]

[4]इत्यार्द्रानन्दकरीतृतीयाव्रतम्

## [नामतृतीयाव्रतम्]

[5]देवीपुराणे

[6]ब्रह्मोवाच—

गौरीं कालीमुमां भद्रां दुर्गां कान्तिं सरस्वतीम् ।
मङ्गलां वैष्णवीं लक्ष्मीं शिवां नारायणीं क्रमात् ॥
मार्गे तृतीयामारभ्य पूजयेत् स्वर्गभाग्भवेत्[7] ।
[8][अर्धनारीश्वरं रुद्रमथवा उमाशङ्करम् ॥

1 Line omitted by हेमाद्रि.

2 प्रसादाच्छूलपाणिनः—हे.

3 Hemādri adds two verses at the end :

य इदं शृणुयान्नित्यं श्रावयेद्वापि मानवः ।
शक्रलोके सगन्धर्वैः पूज्यतेऽब्दायुतावधि ॥
आनन्ददां सकलदुःखहरां तृतीयां या स्त्री करोति विधवा सधवाथवा वा ।
सा स्वे गृहे सुखसुखान्यनुभूय भूयो गौरीपुरं सदयिता मुदिता प्रयाति ॥

4 इति पद्मपुराणोक्तमार्द्रादानव्रतम्—हे.

5 भविष्यपुराणादिति हेमाद्रिः ।

6 हे. व्र. I., ४७७–४७८.

7 मार्गशीर्षतृतीयामारभ्य प्रतिमासमेकैकेन नाम्ना पूजयेदित्यर्थः—हे.

8 The following two lines are not found in ना and उ MSS; Supplied by हेमाद्रि.

पूजयेद्विधिवन्नारी सावियोगमवाप्नुयात् ।]
अथवा विष्णुरूपेण पूजयेच्चेश्वरं सदा ।
शङ्करं वामभागेन सर्वान् कामानवाप्नुयात्[1] ॥

[2]इति नामतृतीयाव्रतम् ॥

## [सौभाग्यशयनव्रतम्]

मत्स्यपुराणे

[3]मत्स्य उवाच—

वसन्तमासमासाद्य तृतीयायां जनप्रियाम् ।
शुक्लपक्षस्य पूर्वाह्णे तिलैः स्नानं समाचरेत् ॥
तस्मिन्नहनि सा देवी [4]किल विश्वात्मना सती ।
पाणिग्रहणकैर्मन्त्रैरुदूढा वरवर्णिनी[5] ॥
तथा सहैव देवेशं तृतीयायामथार्चयेत् ।
फलैर्नानाविधैर्धूपैर्दीपैर्नैवेद्यसंयुतैः ॥
प्रतिमां[6] पञ्चगव्येन तथा गन्धोदकेन च ।
स्नापयित्वार्चयेद्गौरीं चन्द्रशेखरसंयुताम् ॥
नमोऽस्तु पाटलायै तु पादौ देव्याः शिवस्य तु ।
शिवायेति च संकीर्त्य जयायै गुल्फयोर्द्वयोः ॥

1 अर्धनारीश्वरमूर्तिं उमामहेश्वरं वा सुवर्णादिमयं विधाय वामभागस्थां देवीं गौर्यादिभिः पूजयेत् । अथवा 'विष्णुरूपेण' संयुतं 'ईश्वरम्' इति, हरिहरमूर्तिं कृत्वा वामार्धस्थकेशवादिनामभिः प्रत्येकं पूजयेत् ।—हे.

2 इति भविष्यपुराणोक्तं नामतृतीयाव्रतम्—हे.

3 हे. व्र. I., ४४५–४५०.

4 विश्वात्मा नाम्ना सा सती—ना, उ.

5 अभूत् सा वरवर्णिनी—ना, उ.

6 'प्रतिमाम्' इत्यविशेषोक्तावपि गौरीशयोः सौवर्णमेव प्रतिमाद्वयं कर्तव्यम् । 'सौवर्णप्रतिमाद्वयं प्रतिपादयेद्' इत्यग्रे वक्ष्यमाणत्वात् ।—हे.

त्रिगुणायेति रुद्रस्य भवान्यै जङ्घयोर्युगम् ।
[1]रुद्रेश्वराय रुद्रस्य विजयायै तु जानुनी ॥
संकीर्त्य हरिकेशाय तथोरू वरदे नमः ।
ईशायै सत्कटिं रत्यै शंकरायेति [2]शंकरम् ॥
कुक्षिद्वये च कोटव्यै शूलिनं शूलपाणये ।
मङ्गलायै नमस्तुभ्यमुदरं चाभिपूजयेत् ॥ ,
[3][सर्वात्मने नमो रुद्रमीशान्यै च कुचद्वयम् ।
शिवं वेदात्मने तद्वद्रुद्राण्यै कण्ठमर्चयेत् ॥]
त्रिपुरघ्नाय विश्वेशमनन्तायै करद्वयम् ।
त्रिलोचनायेति हरं बाहू कालानलप्रिये ॥
सौभाग्यभवनायेति [4]भूषणार्हिं तु पादयोः ।
स्वाहास्वधायै च मुखं भास्वरायेति शूलिनः[5] ॥
अशोकमधुवासिन्यै [6]पूज्यावोष्ठौ च कामदौ ।
स्थाणवे च हरं तद्वदास्यं चन्द्रमुखप्रिये ॥
[7]नमोऽर्धनारीशहरमसिताङ्गीति नासिकम् ।
नम उग्राय लोकेशं ललितेति पुनर्भ्रुवौ ॥
शर्वाय पुरहन्तारं वासुदेव्यै तथालकम् ।

1 शिवं रुद्रेश्वरायेति जयायै इति—हे.

2 शङ्करे—हे.

3 The following verse is not found in ना and उ MSS: Supplied by Hemādri.

4 'भूषणार्हिं समर्चयेत्', 'भूषणार्हिं' शिवम्—हे.

5 इतः परं नागपुरकोशे 'असौ तत्फलमाप्नोति' इत्यारभ्य 'स्वर्गलोके वसेच्चिरम्' इत्यन्तमेतद्व्रतान्ते विद्यमानश्लोकार्धत्रयं, 'इति सौभाग्यशयनव्रतम्' इति पुष्पिका (colophon) च दृश्यते । तदनन्तरं 'अशोकमधुवासिन्यै' इत्यादि 'कुमारी वा नरेश्वर' इत्यन्तो भागश्च दृश्यते लेखकप्रमादात् ।

6 ना, उ, and हेमाद्रि read: पूज्या चोष्ठौ च.

7 'अर्धनारीशाय नम' इति हरं पूजयेदित्यर्थः—हे.

[1]श्री[illegible]ण्ठनाथाय हरं स्निग्धकेशांस्तथार्चयेत्[2] ॥
भीमाय सौम्यरूपिण्यै शिरः सर्वात्मने नमः ।
शिवमभ्यर्च्य विधिवत् सौभाग्याष्टकमग्रतः ॥
स्थापयेद्[illegible]तनिष्पावकुसुम्भक्षीरजीरकम् ।
तवराजेक्षुलवणं कु[illegible]म्बुरुमथाष्टकम् ॥
दत्तं सौभाग्यकृद्यस्मात्सौभाग्याष्टकमित्युत ।

[3]अत्र घृतक्षीरयोरेककोटिता। 'विकारवच्च गोक्षीरम्' इति सौभाग्याष्ट[illegible]मध्ये मत्स्यपुराण एव पूर्वत्राभिधानात्। 'कुस्तुम्बुरुः' [4]धन्याकम्। 'तवराजः' शर्कराविशेषः ॥

एवं निवेद्य तत्सर्वमग्रतः [illegible]ः पुनः ॥
चैत्रे शृङ्गोदकं प्राश्य स्वपेद्भूमावरिन्दम ।
पुनः प्रभात उत्थाय कृतस्नानजपः शुचिः ॥
संपूज्य द्विजदाम्पत्यं माल्यवस्त्रविभूषणैः ।
सौभाग्याष्टकसं[illegible]क्तं [5]सुवर्णप्रतिमाद्वयम् ॥
प्रीयतामत्र ललिता ब्राह्मणाय निवेदयेत् ।
एवं संवत्सरं यावत् तृतीयायां [6]सदा मनो ॥
प्राशने दानमन्त्रे च विशेषो यन्निबोध मे ।
गोशृङ्गोदकमात्रं स्याद्वैशाखे गोमयं पुनः ॥
ज्येष्ठे मन्दारकुसुमं बिल्वपत्रं शुचौ स्मृतम् ।
श्रावणे दधि संप्राश्य नभस्ये च कुशोदकम् ॥

1 नमः श्रीकण्ठनाथाय शिवं केशांस्तथार्चयेत् —हे.
2 तथा अलकपूजामन्त्राभ्यामुमेशयोः केशानर्चयेदित्यर्थः—हे.
3 Comment reproduced by हेमाद्रि.
4 धान्यकम् —हे.
5 सुवर्णचरणद्वयम्—ना.
6 सदानघोः—ना.

क्षीरमाश्वयुजे [1]मासि कार्तिके पृषदाज्यकम् ।

'पृषदाज्यं' दधिमिश्रं घृतम् ॥[2]

मार्गशीर्षे तु गोमूत्रं पौषे संप्राशयेद्घृतम् ॥
माघे कृष्णतिलांस्तद्वत् पञ्चगव्यं च फाल्गुने ।
ललिता विजया भद्रा भवानी कुमुदा शिवा ॥
वासुदेवी तथा गौरी मङ्गला कमला सती ।
उमा च दानकाले तु प्रीयतामिति कीर्तयेत् ॥
मल्लिकाशोककमलं कदम्बोत्पलमालतीम् ।
कुलुत्थं करवीरं च [3]वाणमन्दारपङ्कजम् ॥
सिन्दुवारं च सर्वेषु मासेषु क्रमतः स्मृतम् ।
जपाकुसुम्भकुसुमं मालतीशतपत्रकम् ॥
यथालाभं प्रशस्तानि करवीरं च सर्वदा ।
एवं संवत्सरं यावदुपोष्य विधिवन्नरः ॥
स्त्री वा भक्त्या कुमारी वा शिवावभ्यर्च्य शा
व्रतान्ते शयनं दद्यात् सर्वोपस्करसंयुतम् ॥
उमामहेश्वरं हैमं वृषभं च गवा सह ।
स्थापयित्वा च शयने ब्राह्मणाय निवेदयेत् ॥

'उपस्करम्' उपधानादि । गोमिथुनमपि हैममेव । मुख्यस्य शयने स्थापनासंभवात् ॥[4]

अन्यान्यपि यथाशक्त्या मिथुनान्यम्बरादिभिः ।
धान्यालङ्कारगोदानैरभ्यर्च्य धनसंचयैः ॥

1 माषं—ना.

2 Comment reproduced by हेमाद्रि.

3 Hemādri reads : 'वाणमम्लानकुङ्कुमम्' and comments : 'वाणं' नीलकुरण्टकम्, 'अम्लानं' महासहापुष्पम्, 'सिन्दुवारं' निर्गुण्डीपुष्पम् ।

4 Comment reproduced by हेमाद्रि.

वित्तशाठ्येन रहितः पूजयेद्गतविस्मयः ।
एवं करोति यः सम्यक् सौभाग्यशयनव्रतम् ॥
सर्वान् कामानवाप्नोति [1]परमानन्दमश्नुते ।
फलस्यैकस्य च [2]त्यागमेतत्कुर्वन् समाचरेत् ॥
यन्नात्[3] कीर्तिमवाप्नोति [4]मासं मासं नराधिप ।
सौभाग्यारोग्यरूपायुर्वस्त्रालङ्कारभूषणैः ॥
न विमुक्ता भवेद्राजन्नब्दार्बुदशतत्रयम् ।
यस्तु द्वादशवर्षाणि सौभाग्यशयनव्रतम् ॥
करोति सप्त चाष्टौ च श्रीकण्ठभवनेऽमरैः ।
पूज्यमानो भवेत्सम्यग्यावत्कल्पशतत्रयम् ॥
नारी वा कुरुते चापि कुमारी वा नरेश्वर ।
[5]असौ तत्फलमाप्नोति[6] देव्यनुग्रहलालिता ॥
शृणुयादपि यश्चैव प्रदद्यादथवा मतिम् ।
सोऽपि विद्याधरो भूत्वा स्वर्गलोके वसेच्चिरम् ॥

[7]इति सौभाग्यशयनव्रतम् ॥

## [अनन्ततृतीयाव्रतम्]

मत्स्यपुराणे[8]

[9]ईश्वर उवाच—

शृणुष्वावहिता देवि तथैवानन्तपुण्यकृत् ।

1 परमानन्त्यमश्नुते—हे.
2 त्यागमेतद्वर्षं—हे.
3 यत्र—हे.
4 प्रतिमासं—हे.
5 See footnote 5 page 57.
6 'सोऽपि तत्फलमाप्नोति' इति—उ.
7 इति मत्स्यपुराणोक्तं सौभाग्यशयनव्रतम्—हे.
8 हेमाद्रिस्तु पद्मपुराणप्रोक्तमनन्ततृतीयाव्रतं पठति ।
9 हे. व्र. I., ४२२–४२६.

नराणामथ नारीणामाराधनमनुत्तमम् ॥
नभस्ये वाथ वैशाखे [1]पुष्ये मार्गशिरस्यथ ।
शुक्लपक्षे तृतीयायां स्नातः सन् गौरसर्षपैः ॥
[2]गोरोचनं सगोमूत्रं मुस्तागोः शकृतं [3]तथा ।
[4]दधिचन्दनसंमिश्रं ललाटे तिलकं न्यसेत् ॥
सौभाग्यारोग्यकृत्तस्मात् सदा च ललिताप्रियम् ।[5]
प्रतिपक्षं तृतीयासु पुमानापीतवाससी ॥
धारयेदथ रक्तानि नारी चेत् पतिसंयुता ।
विधवा धातुरक्तानि कुमारी शुक्लवाससी ॥
देव्यर्चां पञ्चगव्येन ततः क्षीरेण केवलम् ।
स्नापयेन्मधुना तद्वत् पुष्पगन्धोदकेन तु ॥
पूजये[illegible]ष्पैस्तु[6] फलैर्नानाविधैरपि ।
धान्यकाजाजिलवणगुडक्षीरघृतान्वितैः[7] ॥
शुक्लाक्षततिलैरर्चां तां च देवीं सदार्चयेत् ।

'शुक्लाक्षताः' सिततण्डुलाः । 'अर्चा' प्रतिमा ॥

1 मार्गशीर्षेऽथवा पुनः—हे.

2 गोरोचनाथ गोमूत्रं—हे.

3 दधि—हे.

4 चन्दनेन च संमिश्रं—हे.

5 Hemādri adds after this :

"इति पुरुषस्य रक्तवस्त्रधारणमुक्तम् । मत्स्यपुराणे—प्रतिपक्षतृतीयायां पुमान्वै पीतवाससी । इत्यनेन यत्तु पुरुषस्य पीतवस्त्रधारणमुक्तम् । अतस्तयोः पुरुषे विकल्पः ।"

Hemādri's version of the citation from पद्मपुराण reads thus :—प्रतिपक्षतृतीयासु पुमान्वाथ सुवासिनी । धारयेद्रक्तवस्त्राणि कुसुमानि सितानि च । विधवा शुक्लवसनमेकमेव हि धारयेत् । कुमारी सूक्ष्मसूक्ते(शुक्ले) च वाससी परिधाय वै । देव्यर्चां पञ्चगव्येन etc.—हे. व्र. I., ४२२–४२३.

6 शुक्लवस्त्रैस्तु—हे.

7 धनान्वितैः—हे.

तत्पादाभ्यर्चनं कुर्यात् प्रतिपक्षं वरानने ॥
वरदायै नमः पादौ[1] तथा गुल्फौ नमः श्रियै[2] ।
अशोकायै नमो जङ्घे [3]पार्वत्यै जानुनी तथा ॥
ऊरू[4] मांङ्गल्यकारिण्यै वामदेव्यै [5]तथा कटिम् ।
पद्मोदरायै जठरमुरः कामश्रियै नमः ॥
करौ सौभाग्यदायिन्यै बाहू [6]हरमुखश्रियै ।
मुखं दर्पणवासिन्यै [7]स्मरदायै स्मितं नमः ॥
गौर्यै नमस्तथा नासामुत्पलायै[8] च लोचने ।
तुष्ट्यै ललाटफलकं कात्यायिन्यै [9]शिरस्तथा ॥
नमो गौर्यै नमस्तुष्ट्यै[10] नमः कान्त्यै नमः श्रियै ।
रम्भायै ललितायै च वासुदेव्यै नमो नमः ॥[11]
एवं संपूज्य विधिवदग्रतः पद्ममालिखेत् ।
पत्रैर्द्वादशभिर्युक्तं कुङ्कुमेन सकर्णिकम् ॥
पूर्वेण विन्यसेद्गौरीमपर्णां च ततः परम् ।
भवानीं दक्षिणे तद्वद्रुद्राणीं च ततः परम् ॥
विन्यसेत् पश्चिमे सौम्यां सदा मदनवासिनीम् ।

1 नमस्तुभ्यं—ना.
2 शिवायै गुल्फयो नमः—हे ; तथा गुल्फौ नमः श्रियै—ना.
3 भवान्यै—हे.
4 गुह्यं—हे.
5 तथाकृतिम्—ना.
6 शशिमुखश्रियै—हे.
7 पार्वत्यै तु—हे.
8 सुनेत्रायै—हे.
9 नमस्तथा—ना.
10 पुष्ट्यै—उ.
11 Hemādri comments : इति सर्वाङ्गपूजामन्त्रः ।

वायव्ये पाटलामुग्रामुत्तरेण ततोऽप्युमाम् ॥
मध्ये तथा उमां शान्तां मङ्गलां कुमुदासनाम्[1] ।
भद्रां च मध्ये संस्थाप्य[2] ललितां कर्णिकोपरि ॥[3]
कुसुमैरक्षतैरर्चां नमस्कारेण विन्यसेत् ।
गीतमङ्गलघोषं च कारयित्वा सुवासिनीम्[4] ॥
पूजयेद्रक्तवासोभी रक्तमाल्यानुलेपनैः ।
[5]सिन्दूरस्नानचूर्णं च तासां शिरसि पातयेत् ॥

‘स्नानचूर्णं’ स्नानीयद्रव्यचूर्णम् ॥

सिन्दूरं कुङ्कुमं स्नानमतीवेष्टं यतस्ततः ।
[6]तथोपदेष्टारमपि पूजयेद्यत्नतो गुरुम् ॥
न पूज्यते गुरुर्यत्र सर्वा तत्राफलाः क्रियाः ।
नभस्ये पूजयेद्गौरीमुत्पलैरसितैः सदा ॥
बन्धुजीवैराश्वयुज्यां कार्तिके शतपत्रकैः ।
जातीपुष्पैर्मार्गशीर्षे पौषे[7] पीतैः कुरण्टकैः ॥
[8]कुन्दपुष्पैः सुवर्णाभैर्देवीं माघेऽभिपूजयेत् ।
[9]सिन्दुवारेण वा जात्या फाल्गुनेऽप्यर्चयेदुमाम् ॥

1 लक्ष्मीं स्वाहा स्वधा तुष्टिं मङ्गलां कमलां सतीम्—हे.

2 रुद्राणीं मध्यतः स्थाप्य—हे.

3 Hemādri adds a verse after this:

अतर्दनचतुष्कोणे गौर्याद्यष्टदिशो लिखेत् ।
बहिर्दलाष्टके उमामेवमेकैकशो लिखेत् ॥

4 सुवासिनी—हे.

5 सिन्दूरमालिकां श्रेष्ठं वासः शिरसि दापयेत्—हे.

6 The following two lines are omitted by Hemādri.

7 पुष्पैः—हे.

8 माघे तु पूजयेद्देवीं कुन्दपुष्पैः सुभक्तितः—हे.

9 ‘सिन्दुवाराणि’ गुण्डिमल्लिका मुहुवकः—हे.

चैत्रे तु [1]मल्लिकाशोकैर्वैशाखे गन्धपाटलैः ।
ज्येष्ठे कमलमन्दारैराषाढे च [2]जपाङ्कुरैः ॥
कदम्बैरथ मालत्या श्रावणे पूजयेत् [3]सदा ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
बिल्वपत्रार्कपुष्पं च यवगोशृङ्गवारि च ।
पञ्चगव्यं च बिल्वं च[4] प्राशयेत् क्रमशस्तथा ॥
एतद्भाद्रपदाद्यन्नप्राशनं समुदाहृतम् ।
[5]प्रतिपक्षं च मिथुनं तृतीयायां वरानने ॥
[6][ब्राह्मणं ब्राह्मणीं चैव शिवां गौरीं प्रकल्पयेत् ।]
भोजयित्वा ततो भक्त्या[7] वस्त्रमाल्यानुलेपनैः ॥
पुंसः पीताम्बरे दद्यात स्त्रियः कौसुम्भवाससी ।
निष्पावाजाजिलवणमिक्षुदण्डगुडान्वितम् ॥
तस्मै[8] दद्यात्फलं पुंसः सुवर्णोत्पलसंयुतम् ।
यथा न देवि देवेशस्त्वां परित्यज्य गच्छति ॥
[6][तथा मां संपरित्यज्य पतिर्नान्यत्र गच्छतु ।]
[9]तथा समुद्धराशेषदुःखसंसारसागरात् ॥
कुमुदा [10]विमला नन्दा भवानी वसुधा शिवा ।
ललिता कमला [11]गौरी सती रम्भा च पार्वती ॥

1 मल्लिकाशोकैः—हे ; मालिकाशाकैः—हे.
2 जवार्चनम्—हे.
3 उमाम्—हे.
4 तिलोदकं पञ्चगव्यं—हे.
5 प्रतिपक्षं तृतीयायां कर्तव्यं चारुलोचने—हे.
6 Line not found in ना and उ MSS ; Supplied by हेमाद्रि.
7 भोजयित्वार्चयेद्भक्त्या—हे.
8 स्त्रियै—हे.
9 Line not found in हे. म.
10 मुकुला वेता—ना, उ.
11 देवी गौरी सती च पार्वती—ना, उ.

नभस्यादिषु मासेषु प्रीयतामित्युदीरयेत् ।
व्रतान्ते शयनं दद्यात् सुवर्णकमलान्वितम् ॥
मिथुनानि [1]चतुर्विंशद्द्वादशैवाथ वार्चयेत् ।
अष्टावष्टौ च मासान्ते चातुर्मास्येऽथवार्चयेत् ॥
[2]सर्वं दत्वा च गुरवे शेषानभ्यर्चयेद्बुधः ।
उक्तानन्ततृतीयैषा [3]सदानन्तफलप्रदा ॥
सर्वपापहरा देवी सौभाग्यारोग्यवर्धनी ।
न चैनां वित्तशाठ्येन कदाचिदपि लङ्घयेत् ॥
नरो वा यदि वा नारी यतः शापात्[4] पतत्यधः ।
गर्भिणी सूतिका नक्तं कुमारी वाथ रोगिणी ॥
यदाऽशुद्धा तदान्येन कारयेत् प्रयता स्वयम् ।
इमामनन्तफलदां [5]यस्तृतीयां समाचरेत् ॥
कल्पकोटिशतं [6]साग्रं शिवलोके महीयते ।
वित्तहीनोऽपि[7] कुर्वीत [8]वर्षं वर्षमुपोषणैः ॥
पुष्पमन्त्रविधानेन [9]सोऽपि तत्फलमाप्नुयात् ।

1 चतुर्विंशत्तदर्धं वाथ शक्तितः—हे.

2 Hemādri reads two lines in the place of this half verse:

तथोपदेष्टारमपि पूजयेच्च ततो गुरुम् ।
न पूज्यते गुरुर्यत्र सर्वास्तत्राफलाः क्रियाः ॥

3 सदानन्दफलप्रदा—हे.

4 यतः शाम्यात्—उ, हे.

5 या तृतीया—हे.

6 सेयं शिवलोके—हे.

7 वित्तहीनापि—हे.

8 वर्षत्रयमुपोषणैः—हे.

9 सापि तत्फलमश्नुते—हे.

[1]नारी वा कुरुते या तु कुमारी विधवाथवा ॥
सापि तत्फलमाप्नोति गौर्यनुग्रहलालिता ।

[2]इत्यनन्ततृतीयाव्रतम् ॥

## [रसकल्याणिनीव्रतम्]

[3]ईश्वर उवाच—

अन्यामपि प्रवक्ष्यामि तृतीयां पापनाशिनीम् ।
रसकल्याणिनीमेनां पुराकल्पविदो विदुः ॥
माघमासे तु संप्राप्य तृतीयां शुक्लपक्षतः ।
प्रातर्गव्येन पयसा तिलैः स्नानं समाचरेत् ॥
स्नापयेन्मधुना देवीं तथैवेक्षुरसेन तु ।
गन्धोदकेन [4]मधुना पूजनं कुङ्कुमेन वै[5] ॥
दक्षिणाङ्गानि संपूज्य ततो वामानि पूजयेत् ।
ललितायै नमो देव्याः पादौ गुल्फौ[6] तथार्चयेत् ॥
जङ्घां जानुं तथा शान्त्यै तथा चोरुं श्रियै नमः ।
मदालसायै तु कटिममलायै[7] तथोदरम् ॥

1 Hemādri omits this verse but adds another at the end:
इति पठति शृणोति वा य इत्थं गिरितनयाव्रतमिन्दुलोकसंस्थः ।
मतिमपि च ददाति सोऽपि देवीममरवधूजनकिन्नरैश्च पूज्यः ॥

2 इति पद्मपुराणोक्तमनन्ततृतीयाव्रतम्; But there is a footnote भविष्योत्तरोक्तमिति पुस्तकान्तरे पाठः—हे; See पद्मपुराण, सृष्टिखण्ड, अध्याय २२, श्लोक. ६४–१०४.

3 'पुलस्त्य उवाच' इति, पद्मपुराणोक्तमिदमिति च हेमाद्रिः—See हे. व्र. I., ४६१–४६५; See पद्म. पु., सृष्टिखण्ड, अ. २२, श्लो. १०५–१३५.

4 च पुनः—हे.

5 कुसुमेन वै—उ.

6 शुक्लौ—ना, उ.

7 कटिं मङ्गलायै—हे.

स्तनं मदनवासिन्यै कुमुदायै च कन्धराम् ।
भुजं भुजाग्रं माधव्यै कमलायै मुखस्मिते ॥
भ्रूललाटं च शान्तायै[1] शङ्करायै तथालकम् ।
मुकुटं विन्ध्यवासिन्यै पुनः [2]कान्त्यै तथालकम् ॥
मदनायै ललाटं तु मोहनायै पुनर्भ्रुवम् ।
नेत्रे [3]चन्द्रार्धधारिण्यै तुष्ट्यै च वदनं पुनः ॥
उत्कण्ठिन्यै नमः कण्ठममृतायै[4] नमः स्तनम् ।
रम्भायै[5] वामबाहुं च विशोकायै नमः करम् ॥
हृदयं [6]मन्दगामिन्यै पाटलायै तथोदरम् ।
कटिं सुरतवासिन्यै तथोरू चम्पकश्रियै ॥
जानुजङ्घे नमो गौर्यै गुल्फं गायत्रियै नमः ।
धराधरायै पादं च [7]विश्वकायै नमः शिरः ॥
नमो भवान्यै कामिन्यै कामदेव्यै जगच्छ्रियै ।
आनन्दायै सुनन्दायै सुभद्रायै नमो नमः ॥
एवं संपूज्य [8]विधिवद्द्विजदाम्पत्यमर्चयेत् ।
भोजयित्वान्नपानेन[9] मधुरेण विमत्सरः ॥
सलड्डुकं वारिकुम्भं [10]शुक्लाम्बरयुगद्वयम् ।
दत्वा सुवर्णकमलं गन्धमाल्यैरथार्चयेत् ॥

1 रुद्राण्यै—हे.
2 काल्यै—हे.
3 चन्द्रार्कधारिण्यै—ना, उ.
4 अभयायै—हे.
5 वज्रायै—उ.
6 मदनगामिन्यै—हे.
7 विशोकायै—हे.
8 विधिवद्द्विजयां पद्ममर्चयेत्.
9 भोजयित्वा तु पानेन—ना.
10 सुरासुरयुगद्वयम्—ना.

प्रीयतामत्र कुमुदा गृह्णीयाल्लवणव्रतम् ।[1]
अनेन विधिना देवीं मासि मासि समर्चयेत् ॥
लवणं वर्जयेन्माघे फाल्गुने च गुडं पुनः ।
तवराजं तथा चैत्रे वर्ज्यं[2] च मधु माधवे ॥
पाटलं[3] ज्येष्ठमासे तु तथाषाढे च जीरकम् ।
श्रावणे वर्जयेत् क्षीरं दधि भाद्रपदे तथा ॥
घृतमाश्वयुजे तद्वदूर्जे वर्ज्याथ मर्जिका ।

[4]'ऊर्जे' कार्तिके । 'मर्जिका' रसाला, लोके शिखरिणीति प्रसिद्धा ।

धान्यकं मार्गशीर्षे तु पौषे वर्ज्या तु शर्करा ॥
व्रतान्ते करकं पूर्णमेतेषां मासि मासि च ।
दद्याद्विकालवेलायां भक्ष्यं पात्रेण संयुतम् ॥

[5]'व्रतान्ते करकम्' इत्यादि, 'एतेषां' लवणगुडादीनां मध्ये यस्मिन् मासे यत् त्यक्तं तन्मासव्रतान्ते तेन लवणादिना 'पूर्णं करकं' वक्ष्यमाणलड्डुकादि 'भक्ष्यं' पात्रयुक्तं दद्यादित्यर्थः ॥

लड्डुकान् श्वेतवर्तीश्च संयावमथ पूरिकाः ।
घार्तिका घृतपूरांश्च पिष्टापूपांश्च मण्डकान् ॥
क्षीरशाकं च दध्यन्नं पिण्डशाकं तथैव च[6] ।

1 'कुमुदा प्रीयताम्' इति मन्त्रेण कुम्भत्रयं सुवर्णकमलं दत्वा मासं लवणं न भक्षयामीति व्रतं गृह्णीयात्—हे.

2 वस्त्रं—ना.

3 पानकं—हे.

4 Comment reproduced by Hemādri.

5 Comment reproduced by Hemādri.

6 ईन्दुर्थोशोकवर्तिकम्—ना, उ, हे; पिण्डशाकविवर्जितम्—पद्म. पु; पिण्डशाकं तथैव च, कठशाकोकवर्तिका—footnotes in पद्म. पु.

माघादिक्रमशो दद्यादेतानि करकोपरि ॥
कुमुदा माधवी गौरी रम्भा भद्रा जया शिवा ।
उमा रतिः सती तद्वन्मङ्गला[1] रतिलालसा ॥
क्रमान्माघादिषु त्वत्र प्रीयतामिति कीर्तयेत् ।
सर्वत्र पञ्चगव्यं च प्राशनं समुदाहृतम् ॥
उपवासी च यो नित्यमशक्तौ नक्तमिष्यते ।
पुनर्माघे तु संप्राप्ते शर्करां करकोपरि ॥
कृत्वा तु काञ्चनीं गौरीं पञ्चरत्नसमन्विताम् ।
हैमीमङ्गुष्ठमात्रां च साक्षसूत्रकमण्डलुम् ॥
चतुर्भुजामिन्दुयुतां सितनेत्रपटावृताम् ।
तद्वद्गोमिथुनं शुक्लं सुवर्णाढ्यं सिताम्बरम् ॥
सवस्त्रभाजनं[2] दद्याद्भवानी प्रीयतामिति ।
अनेन विधिना यस्तु रसकल्याणिनीव्रतम् ॥
कुर्यात् स सर्वपापेभ्यस्तत्क्षणादेव मुच्यते ।
[3]भवार्बुदसहस्रं तु न दुःखी जायते क्वचित् ॥
अग्निष्टोमसहस्रेण यत्फलं तदवाप्नुयात् ।
नारी वा कुरुते या तु कुमारी वा वरानने ॥
विधवा वा वराकी वा सापि तत्फलभागिनी ।
सौभाग्यारोग्यसंपन्ना गौरीलोके महीयते ॥

[4]इति रसकल्याणिनीव्रतम् ॥

1 ललिता कमलानङ्गा मङ्गला—पद्म. पु.
2 सवस्त्रं भोजनं—हे.
3 नरोऽर्बुदसहस्राणि—उ.
4 इति पद्मपुराणोक्तं रसकल्याणिनीव्रतम्—हे; व्र. I., ४६५.

# [अवियोगतृतीयाव्रतम्]

[1]कालिकापुराणे

अनिलाद उवाच[2]—

[3]मासि मार्गशिरे प्राप्ते चन्द्रे शुद्धे शुचिस्मिता।
द्वितीयां तु समासाद्य नक्तं भुञ्जीत पायसम्॥
आचम्य च शुचिर्भूत्वा दण्डवच्छंकरं नमेत्।
मुदान्विता नमस्कृत्य [4]विज्ञाप्य संस्पृशेद्गुरुम्॥
[5]उदुम्बरं ततो गृह्य भक्षयेद्दन्तधावनम्।
उत्तराशागतं साग्रं सत्वचं निर्व्रणं शुभम्॥
[6]तृतीयायां परे चाह्नि गौरीं शम्भुं प्रपूजयेत्।

1 हे. व्र. I., ४४०–४४४.

2 Hemādri adds these verses after अनिलाद उवाच—

उमया चरितं यच्च भवान्या ललिताव्रतम्।
बाल्ये हिमवतो जन्म दक्षकोपाद्विमुच्य या॥
महासौभाग्यसन्दोहं दृष्ट्वा देव्या महात्मना।
अरुन्धत्या वसिष्ठेन कथितं तद्व्रतं शृणु॥

वसिष्ठ उवाच—

अरुन्धति शृणुष्वेदं व्रतं सौभाग्यवर्धनम्।
अवैधव्यपदं स्त्रीणामवियोगव्रतं त्विदम्॥

3 Hemādri reads this verse thus:

मार्गशीर्षे सिते पक्षे स्नाता शुक्लाम्बरप्रिया।
दृष्ट्वा चन्द्रं द्वितीयायां नक्तं भुञ्जीत पायसम्॥

4 विज्ञाय परमेश्वरम्—हे.

5 Hemādri omits the next two lines but adds the following

उदुम्बरमयं वृक्षं प्राह्यमष्टाङ्गुलं शुभम्।
उत्तराशागतं साग्रं सत्वचं निर्व्रणं दृढम्॥
वाग्यता प्राङ्मुखी भूत्वा भक्षयेद्दन्तधावनम्।

6 Hemādri omits the next two lines but adds the following

द्वितीययां ततः स्वप्याद्भूमौ तद्व्रतमानसा॥
तृतीयायां समुत्थाय मुहूर्ते ब्रह्मणः शुभे।
कृतकार्या च सुस्नाता शुक्लमाल्याम्बरा ततः॥

पूजयित्वा निराहारा शंकरं कीर्तयन् स्वपेत् ॥
शालिपिष्टमये कृत्वा रूपे [1]स्त्रीपुंसयोः शुभे ।
[2]पात्रे संस्थाप्य ते पूज्ये जागरं निशि कारयेत् ॥
[3]विधिवत् पूजयित्वा तु हरं स्नाप्य घृतादिभिः ।
प्रभाते तं गृहीत्वा तु पुष्पं तस्य निवेदयेत् ॥
आचार्यं पूजयेद्भक्त्या मिष्टान्नेन तथा द्विजान् ।
दाम्पत्यानि च तत्रैव शक्त्या तां चापि दापयेत् ॥
प्रतिमासं च कुर्वीत [4]विधिनानेन सर्वतः ।
[5]कार्तिकान्ते ततो मासि मार्गशीर्षे स युज्यते ॥
नामान्यतः[6] प्रवक्ष्यामि प्रतिमासं [7]क्रमाच्छृणु ।

'अतः' मार्गशिरात् परम् । मार्गशीर्षे तु शम्भुः गौरी चेति नामनी प्रथमत एव कथिते ॥

1 स्त्रीपुंसः प्रतिमे शुभे—हे.

2 Hemādri reads this line thus: वेणुपात्रे च संस्थाप्य पूजयेद्भक्तितत्परा and adds the following:

उपवासं च कुर्वीत सर्वभोगविवर्जितम् ।
पाषण्डादिभिरालापं कृत्वा स्नाता विवर्जयेत् ॥
ततो निशायां सुश्रोणि कृतपूजां कृतोत्सवाम् ।
कृतवादित्रनिर्घोषां जागरं तत्र कल्पयेत् ॥

3 Hemādri reads this line thus: विधिवत् पूजयित्वा तत्पैष्टिकं पुत्रिकाद्वयम् and omits the next three lines but adds the following:

सुप्रभाते द्विजाग्राय सहिरण्यं प्रदापयेत् ।
यथाशक्त्या महाभागे वित्तशाठ्यं विवर्जयेत् ॥
उमामहेश्वरं ह्येतत् कल्पयित्वा तु चेतसि ।
ब्राह्मणोऽपि जलेऽगाधे पैष्टं तन्मिथुनं क्षिपेत् ॥
एवं कृते स्वस्त्ययना मिथुनानि तु भोजयेत् ।
शिवभक्तान् द्विजान् भोज्य मिष्टान्नेन स्वशक्तितः ॥

4 विधिनान्नेन संयुतम्—हे.

5 मार्गशीर्षे पुनर्मासि कार्तिकान्ते समुद्यते—हे.

6 नामानि ते—हे.

7 क्रमेण तु—हे.

[1]पूजायज्ञनिमित्तत्वसिद्ध्यर्थं चिन्तितस्य च ॥[2]
[3]एवं पौषे तु संप्राप्ते गिरीशं पार्वतीं तथा ।
[4]अर्चां जप्य चतुर्थ्यां च पञ्चगव्यं ततः पिबेत् ॥
भवं चैवं भवानीं च [5]माघे नित्यं प्रपूजयेत् ।
फाल्गुने च महादेवमुमया सहितं [6]विभुम् ॥
[7]ललितां शंकरं देवं चैत्रे संपूजयेद्बुधः ।
स्थाणुं [8]चैव हि वैशाखे लोकजायासमं जपेत् ॥
रुद्राण्या सह रुद्रं तु ज्येष्ठे मासि प्रपूजयेत् ।
आषाढे पशुनाथं च [9]सत्या सह सुलोचनम् ॥
श्रीकण्ठं श्रावणे [10]मासि सुनन्दां च समर्चयेत् ।
भीमं भाद्रपदे [11]मासि कालरात्र्या समं प्रभुम् ॥
शिवमाश्वयुजे [12]देवं दुर्गासार्धं समर्चयेत् ।
ईशानं कार्तिके मासि [13]शिवादेवीयुतं विभुम् ॥
[14]जपध्यानार्चनादौ च नामान्येतानि सुव्रत ।

1 पूजाजपनिमित्तं च सिध्यर्थं चिन्तितस्य च—हे.

2 Hemādri adds a line after this :
शङ्करं मार्गशीर्षे तु नाम गौरीसमन्वितम् ।

3 गौरीं वा पार्वतीं चैव पुष्यमासे तु पूजयेत्—हे.

4 Line omitted by Hemādri.

5 माघमासे—हे.

6 यजेत्—हे.

7 चैत्रे त्रिलोचनं देवं ललितां च प्रपूजयेत्—हे.

8 वैशाखमासे तु लोलनेत्रासमन्वितम्—हे.

9 सत्या सार्धं शुचिस्मिते—हे.

10 देवं सुभद्रां परमेश्वरीम्—हे.

11 तद्वत्कालरात्रिसमन्वितम्—हे.

12 भक्त्या गङ्गया सहितं यजेत्—हे.

13 शिवां देवीं प्रपूजयेत्—हे.

14 Line omitted by—हे.

[1]एतानि नामरूपाणि विनैभिर्न हि सिद्धिभाक् ॥
प्रतिमासं तु पुष्पाणि [2]त्वर्चनाय निवेदयेत् ।
[3]तानि क्रमात् प्रवक्ष्यामि सद्यस्तुष्टिकराणि तु ॥
आद्ये नीलोत्पलं योग्यं तदभावेऽपराणि वै ।
पत्राणि च[4] सुगन्धीनि योजयेद्भक्तितोऽर्चयेत् ॥
करवीरं [5]निम्बपत्रं किंशुकं कुन्दमालिकम्[6] ।
पाटलं च कदम्बं च तगरं द्रोणमालतीम् ॥
[7][एतान्युक्तक्रमेणैव मासेषु द्वादशस्वपि ।
भक्त्या योज्यानि रम्भोरु देवस्य प्रियकाम्यया ॥
तथा च पञ्चगव्यस्य प्राशनं प्रतिमासिकम् ।
नान्यद्धि पावनं किञ्चित् पञ्चगव्यात् परं स्मृतम् ॥
एवं व्रते कृते भद्रे शिवभक्तिसमन्विता ।]
वत्सरान्ते वितानं च ध्वजं [8]घण्टां च दीपिकाम् ॥
[9]धूपोत्क्षेपयुतं सूक्ष्मं शंकराय निवेदयेत् ।
[10]स्नापयित्वार्चयित्वा तु सौवर्णं पुष्पकं[11] न्यसेत् ॥

1 प्रतिमासे विना नाम्ना व्रतसिद्धिर्न विद्यते—हे.

2 यानि पूजासु योजयेत्—हे; आचार्याय निवेदयेत्—ना.

3 तानि ते संप्रवक्ष्यामि सद्यः प्रीतिकराणि वै—हे.

4 पवित्राणि—हे.

5 बिल्वपत्रं—हे.

6 कुब्जमल्लिकाम्—हे.

7 The following five lines are not found in ना and उ MSS; Supplied by हेमाद्रि.

8 किङ्किणिमालिकाम्—हे.

9 घण्टां दीपं वस्त्रयुग्मं शिवभक्त्या—हे.

10 Hemādri reads two lines for this line:
स्नापयित्वानुलिप्ता च सौवर्णं विद्धि पङ्कजम् ।
यथाविभवतो देयं देवदेवस्य तुष्टये ॥—हे.

11 पुष्करं—उ.

[1]रूपयुग्मं ततो दद्याच्छालिपिष्टमयं च तत् ।
[2]नैवेद्यं च बलिं चैव संयोज्य विधिवद्गुरे ॥
कुर्यान्नीराजनं शम्भोस्ततो गच्छेत्[3] स्वकं गृहम् ।
चतुरस्रं महादेवमुमां चैव त्रिकोणिकाम् ॥
[4]ध्यात्वाऽऽचार्याय तद्युग्मं मौक्तिकादियुतं ददेत् ।
[5]प्रतिमां पूजयेद्भक्त्या द्वादशैव द्विजोत्तमान् ॥
मिथुनानि [6]तथा ब्रह्मन् [7]भोक्ष्य शक्त्यानुदक्षयेत् ।
कर्षैकैकप्रमाणेन शातकुम्भमयं शुभम् ॥
[8][उमामहेश्वरं चैव कारयित्वा सुशोभनम् ।]
मौक्तिकानि चतुःषष्टि [9]प्रवालकचतुष्टयम् ॥
तावन्ति[10] पुष्पपात्राणि [11]ताम्ररूपाणि चैव हि ।
[12]एतान् समग्रान् संभारान् वस्त्रयुग्मोपरि न्यसेत्

1 रौप्यं च रूपयुगलं देवस्य पुरतो न्यसेत्—हे.
2 बहुप्रकारं नैवेद्यं गीतवाद्यसमन्वितम्—हे.
3 स्नात्वा गच्छेत्—हे.
4 स्नात्वा—हे.
5 व्रतिनो भोजयेत्पश्चात्—हे.
6 च यावन्ति —हे.
7 भक्त्या शक्त्या च दक्षयेत्—हे ; क्षोभशक्त्यामुदीरयेत्—ना.
8 Line omitted by ना and उ ; Supplied by Hemādri.
9 तावन्तोऽपि प्रवालकाः—हे.
10 भवन्ति—ना.
11 ताम्रपात्रोपरि न्यसेत्—हे.
12 Hemādri omits this line but adds the following five lines :
वस्त्रेण वेष्टयित्वा च गन्धपुष्पैः समर्चयेत् ।
एतत् सर्वं सारयुक्तमाचार्याय निवेदयेत् ॥
व्रतिनां ब्राह्मणानां वा मिथुनानामथापि वा ।
अशक्तो निष्क्रयं दद्याद्वित्तशाठ्यविवर्जितः ॥
दत्वा हिरण्यं वासांसि प्रणिपत्य क्षमापयेत् ।

चत्वारि शतमष्टौ च[1] कुम्भांश्चोपानहौ तथा[2] ।
सहिरण्याक्षतान् सर्वान् [3]दद्यात् पुष्पोदकान्वितान् ॥
दीनानां दुःखितानां च तद्दिने चानिवारितम् ।
कल्पयेदन्नदानं चाप्यानक्तं [4]शक्तितोऽर्चयेत् ॥
न्यूनाधिकं न कर्तव्यं स्ववित्तपरिमाणतः ।
[5]पूजयेत् कल्पनायैव वित्तशाठ्यं न कारयेत् ॥
अवियोगकरं चैव [6]रूपसौभाग्यपुत्रदम् ।
[7]वित्तदं चान्नदं नूनं भवेदेवेति योजयेत् ॥

इत्यवियोगव्रतम्[8] ॥

## [सौभाग्यतृतीयाव्रतम्]

वराहपुराण

[9]अगस्त्य उवाच—

अतः परं महाभाग सौभाग्यकरणं व्रतम् ।
शृणु येनास्य सौभाग्यं स्त्रीपुंसामभिजायते ॥
फाल्गुनस्य तु मासस्य तृतीया शुक्लपक्षतः ।
उपोषितव्या[10] नक्तेन शुचिना सत्यभाषिणा ।

1 चत्वारिंशत्तथाष्टौ च—हे.
2 कुम्भान् छत्रमुपानहौ—हे.
3 दधिपुण्योदकार्चितान्—हे.
4 शक्तितो बुधः—उ; सुमृष्टं स्व्यमात्मनः—हे.
5 संपूरयेत् कल्पनया यदि वित्तं न विद्यते—हे.
6 रूपसौभाग्यवित्तदम्—हे.
7 आयुःपुत्रप्रदं काम्यं शिवलोकप्रदायकम्—हे.
8 इति कालिकापुराणोक्तं अवियोगतृतीयाव्रतम्—हे.
9 हे. व्र. I., ४७९-४८०; वराहपुराण, अ. ५८, श्लो. १-१९.
10 उपोषितेन—हे.

सश्रीकं च हरिं[1] पूज्य रुद्रं वाप्युमया सह ।
[2]गम्भीरायेति पादौ तु सुभगायेति वै कटिम् ॥
उदरं देवदेवेति शितिकण्ठेति[3] [4]वै उरः ।
त्रिलोचनायेति शिरो रुद्रायेति समन्ततः ॥
एवमभ्यर्च्य मेधावी विष्णुं लक्ष्म्या समन्वितम्[5] ।
हरं गौरीसमायुक्तं गन्धपुष्पादिभिः क्रमात् ॥
ततस्तस्याग्रतो होमं कारयेन्मधुसर्पिषा ।
तिलैः सह महाराज सौभाग्यपतयेति च ॥
ततस्त्वक्षारसंयुक्तं निःस्नेहं धरणीतले ।
गोधूमान्नं तु भुञ्जीत [6]कृष्णेऽप्येवं विधिः स्मृतः ॥
आषाढादिद्वितीयायां पायसं तत्र भोजयेत् ।
यवान्नं तु ततः पश्चात् कार्तिकादिषु पार्थिव ॥
श्यामाकान्नं हविर्वापि यथाशक्त्या प्रसन्नधीः ।
[7]ततस्तु ब्राह्मणे दद्यात् पात्रभूते विचक्षणः ॥
अनङ्गहीने वेदानां पारगे साधुवर्तिनि ।
सदाचारयुते दद्यादल्पवित्तेऽपि [8]भूतले ॥
[9]षड्भिः पात्रैरुपेतं च ब्राह्मणाय निवेदयेत् ।
एकं मधुघृतं पात्रं द्वितीयं घृतपूरितम् ॥
तृतीयं तिलतैलस्य चतुर्थं गुडसंयुतम् ।

1 सश्रीकण्ठं हरिं—ना.
2 गभीरायेति—हे; वरा. पु., adds nine lines before this.
3 श्रीकण्ठेति—हे.
4 चैव तत्—ना.
5 Hemādri comments: विष्णुपूजायां तु वैष्णवमन्त्रप्रयोगः ।
6 कृत्वाप्येवं—हे.
7 वरा. पु., adds three lines before this.
8 भूपते—हे.
9 षड्गैः—हे.

पञ्चमं लवणापूर्णं षष्ठं गोक्षीरपूरितम् ॥
एतान् दत्वा रसान् राजन् सदा[1] जन्मान्तरे भवेत् ।
सुभगो दर्शनीयश्च नारी वा पुरुषोऽपि वा ॥

[2]इति सौभाग्यव्रतम् ॥

[इति श्रीमहाराजाधिराजगोविन्दचन्द्र (महासान्धिविग्रहिक श्रीमल्लक्ष्मीधर-विरचिते) कृत्यकल्पतरौ व्रतकाण्डे तृतीयाव्रतानि]

## अथ चतुर्थीव्रतानि

### [अङ्गारकचतुर्थी]

तत्र मत्स्यपुराणे

[3]चतुर्थ्यङ्गारकदिने यदा भवति [4]दानव ।
मृदा स्नानं तदा कुर्यात् पद्मरागविभूषितः ॥
[5]अग्निर्मूर्धा दिवो मन्त्रं जपन् तिष्ठेदुदङ्मुखः ।
शूद्रस्तूष्णीं स्मरन्[6] भौममास्ते भोगविवर्जितः ॥
[7]अर्धास्तमित आदित्ये गोमयेनोपलिप्य च ।
प्राङ्गणं पुष्पमालाभिरक्षताभिः समन्ततः ॥
अभ्यर्च्याभिलिखेत्पद्मं कुङ्कुमेनाष्टपत्रकम् ।
कुङ्कुमस्याप्यभावे तु रक्तचन्दनमिष्यते ॥
चत्वारः करकाः कार्या भक्ष्यभोज्यसमन्विताः ।
तण्डुलै रक्तशालीयैः[8] पद्मरागैश्च संयुताः ॥

1 सप्त—हे.

2 इति श्रीवराहपुराणोक्तं सौभाग्यतृतीयाव्रतम्—हे.

3 हे. व्र. I., ५०८–५१०; मत्स्यपुराण, अ. ७२, श्लो. २७–४३; Both add 'शुक्र उवाच' before this.

4 भारत—हे.

5 ऋ. सं., ८. ४४. १६; तै. सं., १. ५. ५. १; ७. १; ४. ४. ४. १.

6 शूद्रस्तूष्णीजपं—हे.

7 अथास्तमित—हे.

8 रक्तसलिलैः—ना; रक्तशालेयैः—हे.

चतुष्कोणेषु तान् कृत्वा फलानि विविधानि च ।
गन्धमाल्यादिकं सर्वं तथैव विनिवेदयेत् ॥

सुवर्णशृङ्गीं कपिलामथार्च्य
रौप्यैः खुरैः कांस्यदोहां सवत्साम् ।
धुरंधरं रक्तमतीव सौम्यं
धान्यानि सप्तावरसंयुतानि ॥

['सप्तधान्यानि'] यवगोधूमधान्यक[1]तिलकङ्गुश्यामाकचीनकानि ॥

अङ्गुष्ठमात्रं पुरुषं तथैव
सौवर्णमत्यायतबाहुदण्डम् ।
चतुर्भुजं हेममये निविष्टं
पात्रे गुडस्योपरि सर्पियुक्तम् ॥
सामस्वरज्ञाय जितेन्द्रियाय
पात्राय [2]शीलान्वयसंयुताय ।
दातव्यमेतत् [3]कनकं द्विजाय
कुटुम्बिने नैव च दम्भयुक्ते ॥
"भूमिपुत्र महातेजाः स्वेदोद्भव पिनाकिनः ।
रूपार्थी त्वां प्रपन्नोऽहं गृहाणार्घ्यं नमोऽस्तुते ॥"
मन्त्रेणानेन दत्वार्घ्यं रक्तचन्दनवारिणा ।
ततोऽर्चयेद्द्विप्रवरं रक्तमाल्याम्बरादिभिः ॥
दद्यान्मन्त्रेण तेनैव भौमं गोमिथुनान्वितम् ।
शय्यां च शक्तितो दद्यात् सर्वोपस्करसंयुताम् ॥

1 Hemādri omits तिल but adds चणक in his comment.

2 शीलत्रयसंभवाय—हे.

3 सकलं—हे.

यद्यदिष्टतमं लोके यच्चास्य दयितं गृहे ।
तत्तद्गुणवते देयं तदेवाक्षयमिच्छता ॥
प्रदक्षिणं ततः कृत्वा विसर्ज्य द्विजपुङ्गवम् ।
नक्तमक्षारलवणमश्नीयाद्घृतसंयुतम् ॥
शक्त्या यस्तु पुमान् कुर्यादेवमङ्गारकाष्टकम् ।[1]
चतुरो वाथ वा तस्य यत्पुण्यं तद्वदामि ते ॥
रूपसौभाग्यसंपन्नः पुनर्जन्मनि जन्मनि ।
वैष्णवेऽथ शिवे भक्तः सप्तद्वीपाधिपो भवेत् ॥
सप्त कल्पसहस्राणि रुद्रलोके महीयते ।

[2]इत्यङ्गारकचतुर्थी ॥

## [विनायकचतुर्थी]

भविष्यपुराणे

[3]चतुर्थ्यां तु सदा राजन् निराहारो व्रतान्वितः ।
दत्वा तिलान्नं [4]विप्राय स्वयं भुङ्क्ते तिलोदकम्[5]
वर्षद्वये समाप्तिर्हि व्रतस्य तु यदा भवेत् ।
विनायकस्तस्य तुष्टो ददाति फलमीप्सितम् ॥

[6]इति विनायकचतुर्थी ॥

1 एवमङ्गारकं तथा—ना.
2 इति मत्स्यपुराणोक्तम् अङ्गारकचतुर्थीव्रतम्—हे. व्र. I., ५१०.
3 हे. व्र. I., ५१९–५२० ; भवि. पु., ब्राह्मपर्व, अ. २२, श्लो. १–२.
4 भुङ्क्ते यः—हे.
5 Hemādri comments :
दिवा निराहारो रात्रौ भुङ्क्ते इति विरोधपरिहारः ।
6 इति भविष्यत्पुराणोक्तं गणपतिचतुर्थीव्रतम्—हे. व्र. I., ५२०.

## [अङ्गारकचतुर्थी]

[1]चतुर्थी च चतुर्थी च यदाङ्गारकसंयुता।
उपोष्य तत्र तत्रैव विधेयो [2]विधिवत् कुजः॥

[3]'चतुर्थी तु' इति वीप्सायाम्, अङ्गारकयुतचतुर्थीत्यवगम्यते॥

उपोष्य नक्तेन विभो चतस्रः कुजसंयुताः।
चतुर्थ्यां तु चतुर्थ्यां तु विधानं शृणु यादृशम्॥
[4]सौवर्णं तु कुजं कृत्वा सविनायकमादरात्।
दशसौवर्णिकं मुख्यं दशार्धं वार्धमेव च॥
सौवर्णपात्रे रौप्ये वा भक्त्या ताम्रमयेऽपि वा।
विंशत्पलानि पात्राणि विंशत्यर्धपलानि वा॥
विंशत्कर्षाण्यथो वीर [5]विंशदर्धार्धमेव च।
[6]रौप्यसंख्यं पलं कार्यं पलार्धं पादमेव च॥
शक्त्या वित्तस्य भक्त्या वा पात्रे ताम्रमयेऽपि वा।
प्रतिष्ठाप्य गृहेशं तु वस्त्रैः संपरिवेष्टितम्[7]॥

1 हे. व्र. I., ५१८–५१९; भवि. पु., ब्राह्मपर्व, अ. ३१, श्लो. ५०–६०; Both add सुमन्तुरुवाच before this.

2 प्रदेयो विधिवद्बुधः—भवि. पु.

3 Hemādri comments: एकश्चतुर्थीशब्दस्तिथिविशेषवचनः, अपरस्तत्संख्यापर इति।

4 Line omitted by Hemādri.

5 अतो हीनं न कारयेत्—हे.

6 Line omitted by Hemādri.

7 Hemādri adds the following five lines after this:
पुष्पमण्डपिकां कृत्वा दिव्यैर्धूपैस्तु धूपितान्।
तत्रस्थमर्चयेद्देवं पूर्वमन्त्रैः क्रमेण तु॥
भक्ष्यभोज्यैरनेकैश्च फलैरन्यैश्च संमतैः।
वस्त्रैः प्रावरणैः पात्रैः शय्योपानद्वरासनैः॥
छत्रैः पुष्पैर्गन्धवरैः शक्त्या वित्तानुसारतः।

[1]विविधैः सैन्धवैर्वर्णै रक्तैर्वस्त्रैः समन्वितम् ।

'गृहेशो'ऽत्र कुजः । 'सैन्धवैः' इति वस्त्रविशेषणम् । तेनैव सैन्धवैर्वर्णैर्वस्त्रैरित्यर्थः ॥

ब्राह्मणाय सदा दद्याद्दक्षिणासहितं नृप ॥
वाचकाय महाबाहो गुणिने श्रेयसे नृप[2] ।
इत्येषा कथिता पुण्या तिथीनामुत्तमा तिथिः ॥
यामुपोष्य नरो रूपं दिव्यमाप्नोति भारत ।
कान्त्यात्रेयसमो वीर तेजसा हरिसन्निभः[3] ॥
ईदृग्रूपं[4] समाप्येह याति भीमसदो नृप ।

'आत्रेयः' चन्द्रः । 'हरिः' सूर्यः । 'भीमस्य' महेश्वरस्य ॥

प्रसादाद्विघ्ननाथस्य [5]गणेशस्य [6]जगत्पतेः ॥
पठतां शृण्वतां राजन् कुर्वतां च विशेषतः ।
ब्रह्महत्यादिपापानि क्षीयन्ते नात्र संशयः ॥

[7]इत्यङ्गारकचतुर्थी ॥

1 Line omitted by Hemādri ; विविधैः साधकै रक्तैः पुष्पै रक्तैः—भवि. पु.

2 Hemādri adds two lines after this :

अङ्गारकेन संयुक्तां धेनुं शीलसमन्विताम् ।
अनेन विधिना दत्वा यथोक्तफलभाग्भवेत् ॥

3 Hemādri adds a line after this :

प्रभया हरितुल्यश्च सर्वतो बलसंमितः ।

4 इन्द्ररूपं—ना.

5 प्राणेशस्य—ना.

6 गणायते—हे.

7 इति भविष्यपुराणीयाङ्गारकचतुर्थी—उ ; इति भविष्यत्पुराणोक्तं सुखव्रतम्—हे. व्र. I., ५१९ ; सुखावहाङ्गारकचतुर्थीव्रतम्—इति भवि. पु.

# [अविघ्नचतुर्थीव्रतम्]

**वराहपुराणे**

[1]अगस्त्य उवाच—

तथाऽविघ्नव्रतं राजन् कथयामि शृणुष्व तत्।
[2][येन सम्यक् कृतेनेह न विघ्नमुपजायते ॥]
चतुर्थ्यां फाल्गुने मासि गृहीतव्यं व्रतं त्विदम्।
नक्ताहारेण राजेन्द्र तिलान्नं पारणं स्मृतम् ॥[3]
[4]तदेवाग्नौ च होतव्यं तद्देयं ब्राह्मणाय च।[5]
चातुर्मास्यं व्रतं दैवं कृत्वा वै पञ्चमे तथा ॥
सौवर्णं [6]गजवक्त्रं च कृत्वा विप्राय दापयेत्।
[7]पायसैः पञ्चभिः पात्रैर्व्यपेतसलिलैस्तथा ॥[8]
[9]एवं तस्य व्रतं [10]कृत्वा सर्वविघ्नैः स मुच्यते।
हयमेधस्य विघ्ने तु कृतवान् सगरः पुरा ॥
[11][एतदेव चरित्वा तु हयमेधं स आप्तवान्।
तथा रुद्रेण देवेन त्रिपुरं निघ्नता पुरा ॥]

1 हे. व्र. I., ५२४–५२५; वराहपुराण, अ. ५९, श्लो. १–१०.

2 Line omitted by ना and उ; Supplied by Hemādri.

3 Hemādri comments: 'पारणं' नक्तभोजनम्।

4 तदेव वह्नौ होतव्यं ब्राह्मणाय च तद्भवेत्—हे.

5 Hemādri adds after this, the verse marked as footnote No. 5 of page 83.

6 राजतं वापि—हे.

7 ताम्रपात्रे पायसाद्यैश्चतुर्भिः सहितं नृप—हे.

8 Hemādri adds the following three lines after this:
पञ्चमेन तिलैः सार्धं गणशान्तिकरेण च।
मृण्मयानि हरिद्रैस्तु विधिनानेन कारयेत् ॥
होमं च राजतं शक्त्या विधिनानेन दापयेत्।

9 इत्थं व्रतमिदं—हे.

10 चैतत्—ना.

11 The following two lines are omitted by ना, उ and हे; supplied by printed वराहपुराण.

एतदेव [1]कृतं यस्मात् त्रिपुरं तेन पातितम् ।
तथा तु गच्छता स्वर्गं[2] त्वेतदेव व्रतं कृतम् ॥
अन्यैरपि महीपालैः [3]पृथिवीविजिगीषुभिः ।
तपोर्थिभिर्यज्ञकृते[4] विघ्नोपशमनं परम् ॥
[5]दिव्याय शूराय गजाननाय
लम्बोदरायैकरदासुराय[6] ।
नगात्मजादेहमलोद्भवाय
कुठारहस्ताय नभश्चराय ॥
[7]एवं प्रपूज्य स्तुतिभिः पुनश्च
होमं कुर्याद्विघ्नविनाशहेतोः ।
एवं कृते यान्ति विनाशमाशु
विघ्नाश्च कार्याणि च यान्ति सिद्धिम् ॥

[8]इत्यविघ्नव्रतम् ॥

## [कुन्दचतुर्थी]

देवीपुराणे—

[9]माघमासे तु संप्राप्ते चतुर्थी कुन्दसंज्ञिता ।

1 हरश्चक्रे—हे.
2 मया समुद्रमथने—हे.
3 एतदेव पुरा कृतम्—हे.
4 ततो निर्विघ्नसिध्यर्थं—हे.
5 Hemādri omits this verse here but reads it before. See foot-note 5 in page 82.
6 रदाम्बराय—उ ; दंष्ट्राकरालाय नमः शिवाय—हे ; लम्बोदरायैकदंष्ट्राय चैव—वरा.पु.
7 Hemādri omits this verse but adds the following two verses at the end ; वरा. पु., adds the first one only.
अनेन कृतमात्रेण सर्वविघ्नैः प्रमुच्यते ।
ततो रुद्रपुरं याति वाराहवचनं तथा ॥
विघ्नानि तस्य न भवन्ति गृहे कदाचिद्धर्मार्थकामसुखसिद्धिविघातकानि ।
यः सप्तमीन्दुशकलाकृतिकान्तदन्तं विघ्नेशमर्चयति नक्तकृती चतुर्थ्याम् ॥
8 इति वराहपुराणोक्तम् अविघ्नविनायकव्रतम्—हे. व्र. I., ५२५.
9 हे. व्र. I., ५२५–५२६ ; Hemādri adds 'ब्रह्मोवाच' at the beginning.

सोपोष्या तु सुरश्रेष्ठ ततो राज्यं भविष्यति ॥
सर्वोपहारसंपन्नं सर्वोपस्करमाहरेत् ।
[1]कुन्दपत्रफलं शाकं लवणं गुडशर्करा ॥
[2]खण्डजीरककुस्तुम्बुधान्यानि विविधानि च ।
दातव्यानि सुरश्रेष्ठ कन्यकानां तु भक्तितः ॥
सूर्यपात्रं तथा भाण्डं मृन्मयानि विशेषतः ।
उद्दिश्य दापयेद्देव्यै प्रीयतां मे सदा इति ॥
अनेन विधिना शक्र सौभाग्यं पुत्रसन्ततिः ।
वर्धते नात्र संदेहो नान्यथा मम भाषितम् ॥

[3]इति कुन्दचतुर्थीव्रतम् ॥

## [गणेशचतुर्थी]

नरसिंहपुराणे

[4]सूत उवाच—

[5]चतुर्थ्यां तु न भुञ्जीत स्नात्वा नद्यां नरोत्तम ।
रक्ताम्बरधरो भूत्वा रक्तगन्धानुलेपनः ॥
रक्तचित्तो[6] गणाधीशं विनायकमथार्चयेत् ।
रक्तचन्दनतोयेन स्नानपूर्वं विधानतः ॥
विलिप्य रक्तगन्धेन रक्तपुष्पैः प्रपूजयेत् ।
ततोऽसौ दत्तवान् धूपमाज्ययुक्तं सचन्दनम् ॥

1 कन्दुपक्वं फलं—हे.
2 खण्डं कुस्तुम्बरी जीरं धान्यानि—हे.
3 इति देवीपुराणोक्तं कुन्दचतुर्थीव्रतम्—हे.
4 हे. व्र. I., ५१०–५१२; नरसिंहपुराण, अ. २६, श्लो. २–२०.
5 चतुर्थ्यां दिने न भुञ्जीत—ना; चतुर्थीदिवसे राजा स्नात्वा त्रिषवणं द्विज—नर. पु.
6 रक्तातीतो—ना; सुरक्तकुसुमैर्हृद्यैः—नर. पु.

नैवेद्यं चैव हारिद्रं गुडखण्डं घृतप्लुतम् ।
एवं संवत्सरं पूज्य विनायकमथास्तुवीत ॥

इक्ष्वाकुरुवाच[1]—

नमस्कृत्य महादेवं स्तोष्येऽहं [2]तं विनायकम् ।
[3]अभिषेके यथा तेन स्तुतः स्कन्देन वै पुरा ॥
वंशः क्लेशेन पुण्येन यशसा ब्रह्मचारिणा ।
कार्यार्थसिद्धये पूर्वं तं नमामि विनायकम् ॥
महागणपतिं शूरमूर्जितं[4] जयवर्धनम् ।
एकदन्तं द्विदन्तं च चतुर्दन्तं चतुर्भुजम् ॥
त्र्यक्षं त्रिशूलहस्तं च रक्तनेत्रं वरप्रदम् ।
त्र्यम्बकेयं[5] शङ्कुकर्णं प्रचण्डं दण्डनायकम् ॥
आरक्तं दण्डिनं चैव वह्निवक्त्रं हुतप्रियम् ।
अनर्चितो विघ्नकरः सर्वकार्येषु यो नृणाम् ॥
तं नमामि गणाध्यक्षं भीममुग्रमुमासुतम् ।
मदमत्तं विरूपाक्षं [6]भववक्त्रसमुद्भवम् ॥
सूर्यकोटिप्रतीकाशं [7]भिन्नाञ्जनसमप्रभम् ।
[8]ध्रुवं सुनिश्चलं शान्तं नमस्यामि विनायकम् ॥[9]

1 Line omitted by Hemādri.

2 त्वां—हे.

3 The following three lines are omitted by उ MS., नर. पु., and Hemādri.

4 अर्चितं—हे.

5 आविकेयं—हे; आम्बिकेयं—नर. पु.

6 'भक्तविघ्ननिवारकम्', 'मधूककुसुमप्रभम्'—इति च मुद्रितनरसिंहपुराणपाठौ.

7 रक्ताञ्जनसमप्रभम्—हे.

8 बुधं—हे; बुद्धं सुनिर्मलं—नर. पु.

9 Hemādri adds a line after this :
नमोऽस्तु ब्रह्मरूपाय विष्णुरूपाय ते नमः ।

नमोऽस्तु गजरूपाय गणानां पतये नमः ।
मेरुमन्दररूपाय नमः कैलासवासिने ॥
विरूपाय स्वरूपाय[1] नमस्ते ब्रह्मचारिणे ।
भक्तस्तुताय देवाय नमस्तुभ्यं विनायक ॥
त्वया पुराणं सर्वेषां देवानां कार्यसिद्धये ।
गजरूपं समास्थाय [2]त्रासिताः सर्वदानवाः ॥
ऋषीणां देवतानां च [3]नायकत्वं प्रकाशितम् ।
यतस्ततः सुरैरग्रैः पूज्यसे त्वं विनायक ॥
त्वामाराध्य गणाध्यक्षं सर्वज्ञं कामरूपिणम् ।
कार्यार्थं रक्तकुसुमै रक्तचन्दनवारिभिः ॥
रक्ताम्बरधरो भूत्वा चतुर्थ्यामर्चयेज्जपेत् ।
त्रिकालमेककालं वा नियतो नियताशनः ॥
राजानं राजपुत्रं वा राजमन्त्रिणमेव वा ।
राज्यं वा सर्वविघ्नेशो [4]वशीकुर्यात् सराष्ट्रकम् ॥
अविघ्नं [5]तपसो मह्यं कुरु विघ्नविनायक ।
मया त्वं संस्तुतो भक्त्या पूजितश्च विशेषतः ॥
यत्फलं सर्वतीर्थेषु सर्वयज्ञेषु यत्फलम् ।
तत्फलं [6]समवाप्नोति [7]स्तुत्वा देवं विनायकम् ॥
विषमं न भवेत्तस्य न च गच्छेत् पराभवम् ।
न च विघ्नो भवेत्तस्य जातो जातिस्मरो भवेत् ॥

1 नमो विघ्नविनाशाय—हे; विरूपाय नमस्तेऽस्तु—नर. पु.
2 शंसिताः सर्वसिद्धिदाः—ना.
3 कृताः सर्वे मनोरथाः—हे.
4 वसेत् कुर्यात्—हे.
5 कुरु मे नित्यं—हे.
6 सर्वमाप्नोति—हे.
7 सदा—ना.

य इदं पठति स्तोत्रं षड्भिर्मासैर्वरं लभेत् ।
संवत्सरेण सिद्धिं च लभते नात्र संशयः ॥

[1][इति गणेशचतुर्थीव्रतम्]

इति चतुर्थीव्रतानि ॥

## अथ पञ्चमीव्रतानि

### [नागपञ्चमी]

भविष्यपुराणे

[2]पञ्चमी दयिता राजन् नागानां नन्दवर्धनी ।
पञ्चम्यां[3] किल नागानां भवतीत्युत्सवो महान् ॥
वासुकिस्तक्षकश्चैव [4]कालियो मणिभद्रकः ।
ऐरावतो धृतराष्ट्रः[5] कार्कोटकधनञ्जयौ ॥
एते प्रयच्छन्त्यभयं [6]तथा च प्राणिजीवनम् ।
पञ्चम्यां स्नपयन्तीह नागान् क्षीरेण ये नराः ॥
तेषां कुले प्रयच्छन्ति तेऽभयं प्राणदक्षिणाम् ।
[7]शप्तान्नागान् सदा मात्रा दह्यमानानहर्निशम् ॥

1 इति नरसिंहपुराणोक्तं गणेशचतुर्थीव्रतम्—हे. व्र. I., ५१२.

2 हे. व्र. I., ५५७–५६० ; भविष्यपुराण, ब्राह्मपर्व, अध्याय ३२, श्लोक १–३९ ; Hemādri and भवि. पु., add "सुमन्तुरुवाच" before this.

3 पञ्चम्याः—हे ; पञ्चमी—ना.

4 कालिक इति पुस्तकान्तरे पाठः—a footnote in हे. व्र. I., ५५७.

5 धृतराष्ट्रश्चैरावतः—हे.

6 प्राणिनां प्राणदाः सदा—हे ; प्राणिनां प्राणजीविताम्—भवि. पु.

7 Hemādri reads only two lines for the following four lines :

शप्ता नागा यदा मात्रा दह्यमाना दिवानिशम् ।
निर्वापयन्ति स्नपनैस्तेषां क्षीरं तु दुर्लभम् ॥

निर्वापयन्ति स्नपनैर्गवां क्षीराज्यमिश्रितैः ।
ये स्नापयन्ति तान्नागान् श्रद्धाभक्तिसमन्विताः
[1][तेषां कुले सर्पभयं न भवेदिति निश्चयः ।]
[2]कृत्वा तु भोजनं पूर्वं ब्राह्मणानां तु कामतः ॥

1 Omitted by ना, उ and हे; Supplied by भवि. पु.

2 Hemādri and भवि. पु., add the following before this line:

शतानीक उवाच—

मात्रा शप्ताः कथं नागाः किमुद्दिश्य च कारणम् ।
कथं शापस्य शावस्य विनाशो वै महामुने ॥

सुमन्तुरुवाच—

उच्चैःश्रवोऽश्वराजा च श्वेतपर्णोऽमृतोद्भवः ।
तं दृष्ट्वा धवलं कद्रुर्नागानां जननी स्वसाम् ॥

'उवाच' इति शेषः ।

अश्वरत्नमिदं श्वेतं पश्य पश्यामृतोद्भवम् ।
कृष्णाश्च यस्य ते वालाः सर्वश्वेतयुतास्तथा ॥
सर्वश्वेताकृतिवरो नायं कृष्णो न लोहितः ।
कथं पश्यसि कृष्णं त्वं विनतोवाच तत्स्वसाम् ॥

कद्रुरुवाच—

यस्याहमेकनयना कृष्णत्वचसमन्वितम् ।
द्विनेत्रा त्वं तु विनते यदि पश्य पणं कुरु ॥

विनतोवाच—

अहं दासी भवित्री ते कृष्णे केशे प्रदर्शिते ।
न चेद्दर्शयसे कद्रु मम दासी भविष्यसि ॥
एवं ते च पणं कृत्वा गते क्रोधसमन्विते ।
विनता शयने सुप्ता कद्रुर्जिह्ममचिन्तयत् ॥
आहूय पुत्रान् प्रोवाच वालो भूत्वा हयोत्तमे ।
तिष्ठध्वं विपणं ज्येष्ठां विनतां जयवर्धिनीम् ॥
प्रोचुस्ते जिह्मबुद्धिं तां नागमातां विगृह्य च ।
स्वधर्मपृष्ठः सुमहान् न करिष्याम ते वचः ॥
एवं पुत्रवचः श्रुत्वा कद्रूः क्रोधसमाकुला ।
शशाप पुत्रान् सकलान् पावको वः प्रधक्ष्यति ॥
गते बहुतिथे काले पाण्डवो जनमेजयः ।
सर्पसत्रं च कर्ता वै यदन्यैर्भुवि दुष्करम् ॥

**विसृज्य नागाः प्रीयन्तां ये केचित् पृथिवीतले ।**
**ये च हेलिसदोऽधस्था[1] येऽन्तरिक्षे दिवि स्थिताः ॥**
**ये नदीषु तथा नागा ये [2]सरःस्वपि भोगिनः ।**
**ये वापीषु तडागेषु [3]तेषु सर्वेषु वै नमः ॥**
**[4]नागान् विप्रांश्च संपूज्य विसृज्य च यथार्हतः ।**
**ततः पश्चात्तु[5] भुञ्जीत सह भृत्यैर्नराधिप ॥**
**[6]प्रथमं मधुरमश्नीयाद्द्वितीयं कामतस्ततः ।**

तस्मिन्यज्ञे पावको वै दहिष्यति न संशयः ।
एवमुक्त्वाभवत्तूष्णीं कद्रूः क्रोधपरायणा ॥
तानुवाच तदा सर्वान् ब्रह्मलोकपितामहः ।
पञ्चम्यां शुक्लपक्षे तु सत्रं चोपरमिष्यते ॥
तत्र वो भविता नन्दस्तेनानन्दो भविष्यति ।
इत्युक्त्वा पन्नगान् सर्वान् देवदेवपितामहः ॥
जगाम त्रिदिवं भूयो नागाः स्वस्थानमास्थिताः ।
तस्मादियं महाराज पञ्चमी दयिता सताम् ॥
नागानां हर्षजननी दत्ता वै ब्रह्मणा पुरा ।
अपरं ते प्रवक्ष्यामि नियमं पञ्चमीं प्रति ॥
यं कृत्वा न बिभेति स्म नरो नागकुलात् क्वचित् ।
नागान् सौवर्णरौप्यान् वाप्यथवा मृन्मयान् नृप ॥
'नागान्' "वासुकिस्तक्षकश्चैव" इत्यादिप्रथमश्लोकपठितान् ॥
करवीरैः शतपत्रैर्जातीपत्रैश्च सुव्रत ।
तथा गन्धप्रधूपैश्च पन्नगान् पूज्य चोत्तमान् ॥
ब्राह्मणान् भोजयेत्पश्चाद्घृतपायसमोदकैः ।
कृत्वा तु भोजनं etc. हे. व्र. I., ५६०–५६१.

The version found in the printed text of Hemādri is corrupt; Corrected by the help of printed Bhaviṣyapurāṇa.

1 हिमाचले तु ये विन्ध्ये—हे; ये च हेतिसदोधस्ताः—ना; ये च हेलिमरीचिस्थाः—भवि. पु.

2 ये सर्वेष्वपि भोगिनः—ना; ह्रदेषु च सरःसु च—हे; ये सरस्वतिगामिनः—भवि. पु.

3 तेभ्यः सर्वेषु वै नमः—हे; तेषु सर्वेषु वै नरः—ना.

4 नागानिति नमस्कृत्य विप्रान् पूज्य विसर्जयेत्—हे.

5 स्वयं च—हे.

6 प्रथमं मधुरं भोज्यं स्वेच्छया तदनन्तरम्—हे; पूर्वं मधुरमश्नीयात्ततो भुञ्जीत कामतः—भवि. पु.

एवं तु नियमं कृत्वा[1] यत्फलं तन्निबोध मे ।
मृतो नागपुरं याति पूज्यमानोऽप्सरोगणैः ॥
विमानवरमारूढो रमते [2]कालमीप्सितम् ।
तत आगत्य राजासौ [3]सायुधानां वरो भवेत् ॥
सर्वरत्नसमृद्धश्च वाहनाढ्यश्च जायते ।
पञ्च जन्मान्यसौ राजा[4] द्वापरे द्वापरे भवेत् ॥
आधिव्याधिविनिर्मुक्तः[5]पत्नीपुत्रसहायवान् ।
तस्मात् पूज्याश्च मान्याश्च घृतपायसगुग्गुलैः ॥

[6]इति नागपञ्चमी ॥

## [नागदष्टोद्धरणपञ्चमी]

[7]सुमन्तुरुवाच—

नागदष्टो नरो राजन् प्राप्य मृत्युं व्रजत्यधः ।
अधो गत्वा भवेत् [8]सद्यो निर्विषो नात्र संशयः ॥

शतानीक उवाच—

नागदष्टः पिता यस्य भ्राता वा दुहितापि वा ।
माता पुत्रोऽथ भार्या [9]वा कर्तव्यं तद्वदस्व मे ॥

1 एवं नियमयुक्तस्य—हे.
2 सूर्यपर्ययम्—हे.
3 मण्डलाधिपतिर्भवेत्—हे.
4 पञ्च जन्मानि भूपालो—हे.
5 पुत्रपौत्रसहायवान्—हे.
6 इति भविष्यत्पुराणोक्तमानन्दपञ्चमीव्रतम्—हे.
7 हे. व्र. I., ५६०–५६३ ; भवि. पु., ब्राह्मपर्व, अ. ३२, श्लो. ४१–५८.
8 सर्पो—हे.
9 किं कर्तव्यं वदस्व मे—भवि. पु.

मोक्षाय[1] तस्य विप्रेन्द्र दानं व्रतमुपोषितम् ।
ब्रूहि मे द्विजशार्दूल येन तद्वै करोम्यहम् ॥

सुमन्तुरुवाच—

उपोष्या पञ्चमी [2]राजन् नागानां [3]पुष्टिवर्धिनी ।
स्वमेकमेकं[4] राजेन्द्र विधानं शृणु भारत ॥[5]
मासि भाद्रपदे [6]या तु शुक्लपक्षस्य पञ्चमी ।
[7]सा तु पुण्यमया प्रोक्ता [8]ग्राह्या सा च महीपते ॥
[9]ज्ञेया द्वादशमासस्य जपन् जप्यं च भारत ।
चतुर्थ्यामेकभक्तं तु तस्यां नक्तं प्रकीर्तितम् ॥[10]
भूरिभारमयं[11] नागमथापि कलधौतकम् ।
[12]कृत्वा दारुमयं वापि अथवा मृन्मयं नृप ॥[13]

'भूरिभारमयं' कनकभारमयम् । 'कलधौतकं' रूप्यमयम् ॥

[13][पञ्चम्यामर्चयेद्भक्त्या नागानां पञ्चकं तथा ।]

1 मौनाय—हे.
2 सम्यक्—हे.
3 बलवर्धनम्—हे.
4 त्वमेकमेकं—भवि. पु.
5 Hemādri comments : 'स्वमेकं' संवत्सरम् .
6 राजन्—हे ; या तु कृष्णपक्षे महीपते—भवि. पु.
7 सा तु पुण्यतमा प्रोक्ता—हे ; महापुण्या तु सा प्रोक्ता—भवि. पु.
8 प्राह्यसौ गतिकाम्यया—हे ; प्राह्यापि च महीपते—भवि. पु.
9 ज्ञेया द्वादशपञ्चम्यो हायने भरतर्षभ—भवि. पु ; Line omitted by Hemādri.
10 Hemādri comments : तस्यां पञ्चम्यामुपोष्येति दिवाभोजनवर्जनात् ।
11 Hemādri reads 'कुर्याच्चान्द्रमासं नागमथवा कलधौतजम्' and comments : 'चान्द्रमसं' सौवर्णम् ; 'कलधौतजं' रूप्यमयम् ; भुवि चित्रमयं नागमथवा—भवि. पु.
12 अथ दारुमयं भव्यं मृन्मयं वाप्यशक्तितः—हे.
13 Line omitted by ना and उ MSS ; Supplied by Hemādri and भवि. पु ; Hemādri reads : पञ्चम्यामर्चयेद्भक्त्या नागं पञ्चफणं तथा ।

करवीरैः [1]शपत्रैर्जातीपुष्पैश्च सुव्रत[2] ॥
[3]तथा गन्धप्रभूतैश्च पूजयेन्नागमुत्तमम् ।
ब्राह्मणान् भोजयेत् पश्चाद् घृतपायसमोदकैः ॥
अनन्तं वासुकिं शङ्खं [4]पद्मं कम्बलमेव च ।
तथा कार्कोटकं नागं नागमश्वतरं तथा ॥
धृतराष्ट्रं शङ्खपालं कालियं तक्षकं तथा ।
पिङ्गलं च महानागं मासि मासि [5]प्रकीर्तयेत् ॥[6]

1 तथा पद्मैः—हे; शतपत्रैः—भवि. पु; पतत्रैश्च—ना.

2 सुगन्धिभिः—हे.

3 गन्धधूपैः सनैवेद्यैः स्नाप्य क्षीरादिभिर्नृप—हे; तथा गन्धैश्च धूपैश्च—भवि. पु.

4 पद्मकं बलमेव च—ना.

5 क्रमाद्यजेत्—हे.

6 Here after Hemādri's version reads thus:

पूजयित्वा प्रयत्नेन पञ्चम्यां नक्तभुग्भवेत् ।
एवं द्वादश कृत्वा वै मासि भाद्रपदे नृप ॥
वत्सरान्ते यथाशक्त्या महाभोज्यं तु कारयेत् ।
ब्राह्मणानां यतीनां च नागानुद्दिश्य भक्तितः ॥
इतिहासविदे नागं काञ्चनं रत्नचित्रितम् ।
गां च दद्यात् सवत्सां वै सर्वोपस्करसंयुताम् ॥
दानकाले पठेदेतत् स्मरन्नारायणं विभुम् ।
सर्वगं सर्वधातारमनन्तमपराजितम् ॥
ये केचिन्मे कुले सर्पैर्दष्टाः प्राप्ता ह्यधोगतिम् ।
व्रतदानेन गोविन्द मुक्तिभाजो भवन्तु ते ॥
इत्युच्चार्याक्षतैर्युक्तं तिलचन्दनमिश्रितम् ।
वासुदेवाग्रतो भूयस्तोयं तोये विनिक्षिपेत् ॥
अनेन विधिना सर्वे येऽर्चयिष्यन्ति चामृताः ।
सर्पतस्तेऽपि यास्यन्ति स्वर्गतिं नृपसत्तम ॥
कृत्वा सर्वान् समुद्धृत्य कुलजान् कुलनन्दन ।
प्रयाति विष्णुसान्निध्यं सेव्यमानोऽप्सरोगणैः ॥
वित्तशाठ्यविहीनो यः सर्वमेतत्फलं लभेत् ।
नक्तेन भक्तिसहिताः सितपञ्चमीषु
ये पूजयन्ति भुजगान् कुसुमोपहारैः ।
तेषां गृहेष्वभयदा हि भवन्ति सर्पा-
दर्थान्विता मणिमयूखविभूषिताङ्गाः ॥

वत्सरान्ते पारणं स्यान्महाब्राह्मणभोजनम् ।
इतिहासविदे नागं गैरिकेण कृतं नृप ॥
तथार्जुनी प्रदातव्या वाचकाय महीपते ।

'अर्जुनी' गौः ॥

एष पारणके वापि विधिः प्रोक्तो बुधैर्नृप ॥
[1]सुवर्णभारनिष्पन्नं नागं दत्वा [तथा च गाम् ।
व्यासाय कुरुशार्दूल पितुरानृण्यमाप्नुयाः ॥
तव पित्रा कृता ह्येवं पञ्चम्युपासना नृप ।
उत्सृज्य नागतां वीर तव पूर्वपितामहः ॥
पुष्पोत्तरं सदो गत्वा तथा पुष्पसदो नृप ।
शुनासीरसदो गत्वा] तथा भाग्यसदो नृप ॥
सर्वदेवसदो गत्वा कञ्जजस्य सदो गतः ।

'शुनासीरसदः' इन्द्रसभा । 'भाग्यसदः' आदित्यसभा । 'कञ्जो' ब्रह्मा ॥

अन्येऽपि ये करिष्यन्ति [2]चेदं व्रतमनुत्तमम् ॥
दष्टको मोक्षमेतेषां शुभं स्थानमवाप्स्यति ।

[3]इति नागदष्टोद्धरणपञ्चमी ॥

1 ना reads: सुवर्णभारनिष्पन्नं नागं दत्वा तथा भाग्यसदो नृप । सर्वदेवसदो गत्वा etc. The portion in brackets is supplied by भवि. g.

2 इन्द्रव्रतमनुत्तमम् —ना.

3 इति भविष्यत्पुराणोक्तं नागदष्टोद्धरणपञ्चमीव्रतम्—हे.

## [सर्पाभयपञ्चमी]

[1]तथा,

श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्बणाः ॥[2]
पूजयेद्विधिवद्वारं दधिदूर्वाङ्कुरैः कुशैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ॥
[3]ये तस्यां पूजयन्तीह नागान् भक्तिपुरःसरम् ।
न तेषां सर्पतो वीर भयं भवति कुत्रचित् ॥

इति सर्पाभयपञ्चमी ॥

## [आलेख्यसर्पपञ्चमी]

तथा

[4]तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।
यस्त्वालेख्य नरो नागान् कृष्णवर्णादिवर्णकैः ॥
पूजयेद्गन्धपुष्पैश्च सर्पिःपायसगुग्गुलैः ।
[[5]पायसेन घृताढ्येन पूजयित्वा द्विजोत्तमः ॥
नक्तं स्वयं तदश्नीयाद्यतवाग्वीतमत्सरः ।]

1 भवि. पु., ब्राह्मपर्व, अ. ३२, श्लो. ६२–६४; हेमाद्रिः (व्र. I., ५६४–५६५) स्कान्दप्रभासखण्डोक्तं सर्पविषापहपञ्चमीव्रतमेकं पठति व्रतयोरनयोः स्थाने । पाठान्तरादन्यत्र नास्य तयोश्च भेदः । भविष्यत्पुराणोक्तमालेख्यसर्पपञ्चमीव्रतमपि पठति, व्र. I., ५६७ पृष्ठे ।

2 Hemādri adds after this:

कृत्वा तु कौस्तुभान्नागाभिन्द्राणीं च प्रपूजयेत् ।
घृतोदकाभ्यां पयसा स्नापयित्वा वरानने ।
गोधूमैः पयसा पूज्य लाजभिर्विविधैस्तथा ॥

3 The following two lines and the colophon are omitted by हेमाद्रि.

4 हे. व्र. I., ५६७; भवि. पु., ब्राह्मपर्व अ. ३७, श्लो. १–३.

5 The following two lines are omitted by ना, उ and printed भवि. पु; Supplied by Hemādri.

तस्य तुष्टिं समायान्ति पन्नगास्तक्षकादयः ॥
आसप्तमात् कुलात्तस्य न भयं नागतो भवेत् ।

इत्यालेख्यसर्पपञ्चमी ॥

## [शान्तिपञ्चमी]

तथा

[1]तथा चाश्वयुजे मासि पञ्चम्यां कुरुनन्दन ।
कृत्वा कुशमयान्नागानिन्द्राण्या[2] सह पूजयेत् ॥[3]
[4]घृतोदकाभ्यां पयसा स्नापयित्वा विशांपते ।
गोधूमैः पयसा स्विन्नैर्भक्ष्यैश्च विविधैस्तथा ॥
यस्तस्यां विधिवन्नागाञ्छुचिर्भक्त्या समन्वितः ।
पूजयेत् कुरुशार्दूल तस्य शेषादयो नृप ॥
नागाः प्रीता भवन्तीह शान्तिमाप्नोति वै विभो ।
स शान्तिलोकमासाद्य मोदते शाश्वतीः समाः[5] ॥

[6]इति शान्तिपञ्चमी ॥

1 भवि. पु., ब्राह्मपर्व, अ. ३८, श्लो. १–५ ; हे. व्र. I., ५६३–५६४ ; हेमाद्रिरितः पूर्वम् आलेख्यसर्पपञ्चमीव्रतपठितान् श्लोकानेतद्व्रताङ्गतयापि पठति ।

2 गन्धाद्यैः—भवि. पु.

3 Hemādri comments : 'नागान्' पूर्वव्रतोक्ताननन्तादीन् ।

4 Hemādri adds a line before this :

शची द्विबाहुः सन्तानमालाहस्ता गजस्थिता ।

5 Hemādri adds : यत्रायं कथ्यते मन्त्रः सदा विषनिषेधतः ।

'ॐ कुरुकुल्ले हुं फट् स्वाहा'

नक्तेन भक्तिसहितं सितपञ्चमीषु ये पूजयन्ति भुजगान् कुसुमोपहारैः ।
तेषां गृहेष्वभयदा हि भवन्ति नागाः सर्वे फणामणिमरीचिरुचो भवन्ति ॥

The printed भवि. पु., omits the last verse.

6 इति भविष्यत्पुराणोक्तं शान्तिपञ्चमीव्रतम्—हे.

## [नागमैत्रीपञ्चमी]

[1]पद्मपुराणे

[2]पञ्चमी सा तिथिर्धन्या सर्वपापहरा शुभा।
एतस्यां सर्वतो यस्तु [3]कट्वम्लं परिवर्जयेत्॥
क्षीरेण स्नापयेन्नागान् ते तु यास्यन्ति मित्रताम्।

[4]इति नागमैत्रेयपञ्चमी॥

## [शान्तिपञ्चमी]

वराहपुराणे

[5]अगस्त्य उवाच—

शान्तिव्रतं प्रवक्ष्यामि [6]तव राजन् शृणुष्व तत्।
येन चीर्णेन शान्तिः स्यात् सर्वदा गृहमेधिनाम्॥
पञ्चम्यां शुक्लपक्षस्य कार्तिके मासि पार्थिव।
आरभ्य वर्षमेकं तु [7]भुञ्जीताम्बुविवर्जितम्॥
नक्तं देवं तु संपूज्य हरिं शेषोपरि स्थितम्।
अनन्तायेति पादौ तु [8]कटिं वासुकये तथा॥
तक्षकायेति जठरमुरः कर्कोटकाय च।

1 पद्म. पु., सृष्टिखण्ड, अ. २६, श्लो. ५६–५७; भविष्यत्पुराणोक्तमिति हेमाद्रिः—हे. व्र. I., ५६६–५६७; वरा. पु., अ. १४, श्लो. ३२–३३.

2 Hemādri adds 'सुमन्तुरुवाच' before this.

3 कर्माणि—हे.

4 इति भविष्यत्पुराणे नागमैत्रीव्रतम्—हे.

5 हे. व्र. I., ५५६–५५७; वरा. पु., अ. ६०, श्लो. १–८.

6 शृणुष्वैकमना नृप—हे.

7 भुञ्जीयादम्लवर्जितम्—हे; भुञ्जीयादुष्णवर्जितम्—वरा. पु.

8 धृतराष्ट्राय वै कटिम्—हे.

पद्माय कण्ठं संपूज्य महापद्माय वै भुजौ[1] ॥
शङ्खपालाय वक्त्रं तु कुटिलायेति वै शिरः ।
पूर्वं विष्णुगतं पूज्य[2] पृथक् चैव प्रपूजयेत् ॥

'पृथक् चैव' इति, अनन्ताद्यानष्टनागान् पृथक् पूजयेदित्यर्थः ॥

क्षीरेण स्नपनं कुर्यात् [3]तानुद्दिश्य हरेः पुनः ।
[4]तदग्रे होमयेत् क्षीरं तिलैः सह विचक्षणः ॥
एवं संवत्सरान्ते तु कुर्याद्ब्राह्मणभोजनम्[5] ।
नागांश्च काञ्चनान् कृत्वा [6]ब्राह्मणेभ्यो निवेदयेत् ॥[7]
एवं यः कुरुते भक्त्या व्रतमेतन्नराधिप ।
तस्य शान्तिर्भवेन्नित्यं न नागेभ्यो भयं[8] भवेत् ॥

[9]इति शान्तिपञ्चमीव्रतम् ॥

1 दोर्युगम्—हे, वरा. पु.

2 विष्णुं सर्वाङ्गमप्येवं—हे ; पूर्वं विष्णुतरौ पूज्य—ना.

3 Hemādri reads : 'हरिमुद्दिश्य वाग्यतः' and adds a comment : 'नागानपि हरिबुध्या स्नापयेत् ।'

4 तदग्नौ—हे.

5 कुर्याद्ब्राह्मणतर्पणम्—हे ; ब्राह्मणान् भोजयेत्ततः—वरा. पु.

6 स्वकर्णेन विधारयेत्—हे.

7 Hemādri adds a verse after this :

गां सवत्सां वस्त्रयुगां कांस्यपात्रां पयस्विनीम् ।
हिरण्यं च यथाशक्त्या ब्राह्मणाय निवेदयेत् ॥

8 नागेभ्यश्चाभयं तथा—हे.

9 इति वराहपुराणोक्तं शान्तिव्रतम्—हे.

## अथ षष्ठीव्रतानि

### [कामषष्ठी]

तत्र वराहपुराणे[1]

अगस्त्य उवाच—

कामव्रतं महाराज शृणु मे गदतोऽधुना ।
येन कामाः [2]सुसिद्धाः स्युर्मनसा चिन्तिता अपि ॥
षष्ठ्यां फलाशनो यस्तु वर्षमेकं व्रतं चरेत् ।
माघमासे सिते पक्षे पञ्चम्यां नक्तभोजनः ॥
षष्ठ्यां तु प्राशयेद्धीमान् फलमेकं तु पार्थिवः ।
ततो भुञ्जीत यत्नेन वाग्यतः शुद्धमोदनम् ॥
ब्राह्मणैः सह राजेन्द्र अथवा केवलैः फलैः ।
तमेकं दिवसं स्थित्वा सप्तम्यां पारयेन्नृप ॥
अग्निकार्यं तु कुर्वीत गुहरूपेण केशवम् ।[3]
पूजयित्वा विधानेन वर्षमेकं व्रतं चरेत् ॥
षड्वक्त्रः कार्तिको गुहः सेनानीः पावकात्मजः ।
कुमारः स्कन्द इत्येवं पूज्यो विष्णुश्च नामभिः ॥
समाप्तौ तु व्रतस्यास्य कुर्याद्ब्राह्मणभोजनम् ।
षण्मुखं सर्वसौवर्णं ब्राह्मणाय निवेदयेत् ॥
सर्वे कामाः समृद्ध्यन्तां मम देव षडानन ।
त्वत्प्रसादादिमं भक्त्या गृह्यतां विप्र मा चिरम् ॥

1 हे. व्र. I., ६१५–६१६ ; वरा. पु., अ. ६१, श्लो. १–१२.

2 समृध्यन्ति—हे ; समृध्यन्ते—वरा. पु.

3 Hemādri comments :

'गुहरूपेण केशवम्' इति, कार्तिकेयरूपं विष्णुं पूजयेदित्यर्थः । वैष्णवपुराणेषु सर्वे देवा विष्णोरेकरूपा इति निरूपणादियमुक्तिः ।

अनेन दत्वा मन्त्रेण ब्राह्मणाय सयुग्मकम् ।

[1]'सयुग्मकं' वस्त्रयुग्मसहितम् ॥

ततः कामाः समृध्यन्ति सर्व एवेह जन्मनि ॥
अपुत्रो लभते पुत्रमधनो लभते धनम् ।
भ्रष्टराज्यो लभेद्राज्यं नात्र कार्या विचारणा ॥

[2]इति कामव्रतम् ॥

## [स्कन्दषष्ठी]

भविष्यपुराणे[3]

सुमन्तुरुवाच—

षष्ठ्यां फलाशनो राजन् विशेषात् कार्तिके नृप ।
राज्यच्युतो विशेषेण स्वं राज्यं लभतेऽचिरात् ॥
षष्ठी तिथिर्महाराज सर्वदा सर्वकामदा ।
उपोष्या सा प्रयत्नेन सर्वकालं जयार्थिना ॥
कार्तिकेयस्य दयिता [4]चैषा षष्ठी महातिथिः ।
देवसेनाधिपत्यं हि प्राप्तं यस्यां महात्मना ॥
[5]अस्यां श्रीसमायुक्तो यस्मात् स्कन्दोऽभवत्पुरा ।
[6]तस्मात् षष्ठ्यां न भुञ्जीत प्राप्नुयाद्भार्गवीं तथा ॥[7]

1 Comment reproduced by Hemādri.

2 इति वराहपुराणोक्तं कामषष्ठीव्रतम्—हे.

3 हे. व्र. I., ६०४–६०५; भवि. पु., ब्राह्मपर्व, अ. ३९, श्लो. १–१३

4 एका—हे.

5 अस्यां हि श्रेयसा युक्तो यस्मात्स्कन्दो भवाग्रणीः—भवि. पु.

6 तस्मात्षष्ठ्यां नक्तभोजी प्राप्नुयादीप्सितं सदा—भवि. पु.

7 Hemādri comments: 'भार्गवी' लक्ष्मीः ।

दत्वार्घ्यं[1] कार्तिकेयाय स्थित्वा वै दक्षिणामुखः ।
दध्ना घृतोदकैः पुष्पैर्मन्त्रेणानेन सुव्रत ॥
[2]सप्तर्षिदारज स्कन्द [3]महासेन महाबल ।
[4]रुद्रोमाजात षड्वक्त्र गङ्गागर्भ नमोऽस्तु ते ॥
प्रीयतां देवसेनानीः [5]संपादयतु मद्व्रतम् ।
दत्वा विप्राय चाप्यन्नं [6]यच्चान्यदपि वर्तते ॥
पश्चाद्भुक्त्वा त्वसौ रात्र्यां भूमिं कृत्वा तु भाजनम् ।
[7]एवं षष्ठीव्रतस्यास्य चोक्तं स्कन्देन यत्फलम् ॥
तन्निबोध महाराज प्रोच्यमानं मयाखिलम् ।
षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति ॥
शुक्लायामथ कृष्णायां[8] ब्रह्मचारी समाहितः ।
तस्य सिद्धिं धृतिं पुष्टिं राज्यमायुर्निरामयम् ॥
पारत्रिकं चैहिकं च दद्यात्स्कन्दो न संशयः ।
अशक्तो ह्युपवासस्य[9] स नक्तेन व्रती भवेत् ॥[10]
[11]तैलं षष्ठ्यां न भुञ्जीत न दिवा कुरुनन्दन ।

1 यद्दत्वा—ना.
2 सप्तर्षिराज श्रीस्कन्द—ना.
3 स्वाहापतिसमुद्भव—भवि. पु.
4 रुद्रोमाग्निज—हे; रुद्रार्यमाग्निज विभो—भवि. पु.
5 संपादय सुहृद्व्रतम्—हे; संपादयतु हृद्व्रतम्—भवि. पु.
6 तथान्यदपि—ना.
7 एवं षष्ठीव्रतस्थस्य—हे; एवं षष्ठ्यां व्रतं स्नेहात्प्रोक्तं स्कन्देन यत्नतः—भवि. पु.
8 शुक्लकृष्णासु नियतो—भवि. पु.
9 यो हि नक्तोपवासः स्यात्—भवि. पु.
10 भवि. पु., adds a line after this:
इह वामुत्र सोऽत्यन्तं लभते ख्यातिमुत्तमाम् ।
11 The following three half-verses are not found in the printed भवि. पु.

यस्तु षष्ठ्यां नरो नक्तं कुर्याद्भरतसत्तम ॥
सर्वपापैर्विनिर्मुक्तो गाङ्गेयसदनं व्रजेत् ।

'गाङ्गेयो' ऽत्र [1]कार्तिकेयः ॥

स्वर्गे च नियतं वासो [2]भवेन्नैवात्र संशयः ॥
इह चागत्य कालान्ते यथोक्तफलभाग्भवेत् ।
देवानामपि वन्द्योऽसौ [3]राजराजो भविष्यति ॥

[4]इति स्कन्दषष्ठी ॥

## [कृष्णषष्ठी]

[5]आदित्य उवाच—

कृष्णषष्ठ्यां प्रयत्नेन कृत्वा नक्तं विधानतः ।
मासि मार्गशिरस्यादावंशुमानिति पूजयेत् ॥
विधिवत् प्राश्य गोमूत्रमनाहारो निशि स्वपेत् ।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोति मानवः ॥
पुष्येऽप्येवं सहस्रांशुं भानुमन्तमुशन्ति वै ।

'उशन्ति' इच्छन्ति ॥

वाजपेयफलं तत्र [6]घृतं प्राश्य लभेन्नरः ॥
माघे दिवाकरं नाम कृष्णषष्ठ्यां निवेदयेत् ।

1 स्वामिकार्तिकेयः—हे.

2 भवते नात्र संशयः—हे; वासं लभते नात्र संशयः—भवि. पु.

3 राज्ञां राजा—भवि. पु.

4 इति भविष्यत्पुराणोक्तं स्कन्दषष्ठीव्रतम्—हे.

5 हे. व्र. I., ६२४–६२६.

6 प्राप्तव्रते—हे.

[1]निशि पीत्वा तु गोमूत्रं गोमेधफलमश्नुते ॥
मार्तण्डं[2] फाल्गुने मासि पूजयेद्भक्षयेत्तिलान् ।
राजसूयस्य यज्ञस्य [3]फलं पुण्यमवाप्नुयात् ॥
चैत्रे च हंसनामानं कृष्णषष्ठ्यां प्रपूजयेत् ।
शुक्लपुष्पं नरः प्राश्य चाश्वमेधफलं लभेत् ॥
[4][वैशाखे सूर्यनामानं कृष्णषष्ठ्यां प्रपूजयेत् ।]
पीत्वा कुशोदकं पुण्यं जितक्रोधो जितेन्द्रियः ॥
महामेधस्य यज्ञस्य वैनतेय फलं लभेत् ।

वैशाखे इति शेषः ॥

ज्येष्ठे दिवस्पतिं पूज्य गवां शृङ्गोदकं पिबेत् ॥
गवां कोटिप्रदानस्य निखिलं फलमश्नुते ।
आषाढे त्वर्कनामानमिष्ट्वा[5] प्राश्य च गोमयम् ॥
प्रयात्यर्कसलोकत्वं वर्षाणां द्विशतं विभो ।
श्रावणेऽर्यमनामानं पूजयित्वा पयः पिबेत् ॥
वर्षाणाम[?]तं साग्रं मोदते भास्करालये ।
मासि भाद्रपदे षष्ठ्यां भास्करं नाम पूजयेत् ॥
[6]प्राशनं पञ्चगव्यस्य सर्वमेधफलं लभेत् ।
[7]मासि चाश्वयुजे षष्ठ्यां भगाख्यं नाम पूजयेत् ॥
[8]दूर्वाङ्कुरं सकृत् प्राश्य राजसूयफलं लभेत् ।

1 निशीथे चाप्ति गोमूत्रं—हे.
2 तिलैस्तु—हे.
3 तुल्यं फलम्—हे.
4 Line omitted in ना and उ MSS; Supplied by Hemādri.
5 दृष्ट्वा—ना.
6 दूर्वाङ्कुरं सकृत्प्राश्य राजसूयफलं लभेत्—हे.
7 आश्विने देवदेवस्य सप्ताश्वमिति पूजयेत्—हे.
8 दधि संप्राश्य विधिवत्पुण्डरीकफलं लभेत्—हे.

मासे च कार्तिके षष्ठ्यां शक्राख्यं नाम पूजयेत् ॥
गोमूत्रफलमश्नीयादश्वमेधफलं लभेत् ।[1]
वर्षान्ते भोजयेद्विप्रान् सूर्यभक्तिपरायणान् ॥
पायसं मधुसंयुक्तमाज्येन सुपरिप्लुतम् ।
शक्त्या हिरण्यवासांसि भक्त्या तेभ्यो निवेदयेत् ॥
निवेदयेत्तु सूर्याय गां कृष्णां तु पयस्विनीम् ।
वर्षमेकं चरेदेवं नैरन्तर्येण यो नरः ॥
कृष्णषष्ठीव्रतं भक्त्या तस्य पुण्यफलं शृणु ।
सर्वपापविनिर्मुक्तः सर्वकामसमन्वितः ॥
मोदते सूर्यलोके तु स नरः शाश्वतीः समाः ।

[2]इति कृष्णषष्ठीव्रतम् ॥

## अथ सप्तमीव्रतानि

### [शाकसप्तमी]

तत्र भविष्यपुराणे

[3]क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
सूर्यपूजाग्निहवनं संतोषस्तेयवर्जनम् ॥
सर्वव्रतेष्वयं धर्मः सामान्येन सदा स्थितः ।

1 Hemādri comments : गोमूत्रभावितफलं 'गोमूत्रफलम्' ।

2 इति भविष्योत्तरोक्तकृष्णषष्ठीव्रतम्—हे.

3 हे. व्र. I., ७६०–७६२ ; Hemādri adds 'सुमन्तुरुवाच' before this ; भवि पु., ब्राह्मपर्व, अ. ४७, श्लो. ४६–७२ ; The five lines begining with 'क्षमा सत्यं दया दानं' and ending with 'स ज्ञेयः पतितो बुधैः' are not found in the printed भवि. पु.

तथा

गृहीत्वा सप्तमीकल्पं [1]मानवो यस्तु तामसः ॥
त्यजेत् कामाद्भयाद्वापि स ज्ञेयः पतितो बुधैः ।
[2]सप्तम्यां सोपवासस्तु रात्रौ [3]भुङ्क्ते तु यो नरः ॥
कृत्वोपवासं षष्ठ्यां तु पञ्चम्यामेकवारभुक् ।
दत्वा तु संस्कृतं[4] शाकं भक्ष्यभोज्यैः समन्वितम् ॥
देवाय ब्राह्मणेभ्यश्च रात्रौ भुञ्जीत वाग्यतः ।
यावज्जीवं नरः कश्चिद्व्रतमेतत् करिष्यति ॥
तस्य श्रीर्विजयश्चैव[5] त्रिवर्गश्च विवर्धते ।
मृतश्च स्वर्गमाप्नोति विमानवरमास्थितः ॥
सूर्यलोके स रमते [6]मन्वन्तरगणान् बहून् ।
इह चागत्य कालान्ते [7]रिपून् शास्ति समंततः ॥
पुत्रपौत्रैः परिवृतो दाता स्यान्नृपतिश्चिरम् ।
[8]स भुनक्त्यपरान् राजन् विग्रहे वाजितः परैः ॥
गयेन[9] राजशार्दूल शाकाहारेण सप्तमीम् ।
उपोष्य लब्धं तत्तीर्थं [10]पैत्रं वै गयसंज्ञितम् ॥
कुरुणा इह[11] पूर्वेण शाकाहारेण [12]वै ततः ।

1 ज्ञानतो यस्तु तामसः—हे ; मानवो यस्तु मानसः—ना.

2 स षष्ठ्यां—ना.

3 भुञ्जीत—भवि. पु.

4 सुसंस्कृतम्—हे.

5 यस्तस्य विजयश्चैव—ना.

6 मन्वन्तरबहूनथ, मन्वन्तरशतान्यथ—इति हेमाद्रिपाठौ.

7 नृपः शान्तिसमन्वितः—भवि. पु.

8 भुनक्ति हि धरां राजन् विग्रहश्चाजितः परैः—भवि. पु ; स भुनक्ति परान् राजन् विग्रहेरजितः परैः—हे.

9 यानेन—हे ; ये नरा—भवि. पु ; गजेन—ना.

10 पित्र्यं वे राजसंज्ञिकम्—भवि. पु.

11 तत्र—हे ; तव—भवि. पु.

12 सप्तमीम्—भवि. पु.

धर्मक्षेत्रं कुरुक्षेत्रं कृतं तेन[1] विवस्वता ॥
सप्तमी नवमी षष्ठी तृतीया पञ्चमी तथा ।
कामदास्तिथयो ह्येता [2]इहैव नरयोषिताम् ॥
सप्तमी माघमासस्य नवम्याश्वयुजे तथा ।
षष्ठी भाद्रपदे धन्या वैशाखे तु तृतीयका ॥
पुण्या भाद्रपदे ज्ञेया पञ्चमी नागपञ्चमी ।
इत्येता ह्येषु मासेषु विशेषास्तिथयः शुभाः ॥
शाकं सुसंस्कृतं कृत्वा [3]पेयभक्ष्यसमन्वितम् ।
दत्वा विप्रे यथाशक्त्या पञ्च[illegible]ो निशि व्रती ॥
कार्तिके शुक्लपक्षस्य प्राश्येयं [illegible]रुनन्दन ।
चतुर्भिस्त्वपि मासैस्तु पारणं प्रथमं स्मृतम् ॥
अगस्तिकुसुमैश्चात्र पूजा कार्या विभावसोः ।
[4]विलेपनं कुङ्कुमं च धूपैश्चैवापराजितैः ॥
स्नानं तु पञ्चगव्येन तदेव प्राशयेत्तथा ।

[5]'विभावसोः' सूर्यस्य ॥

[6]नैवेद्यं चात्र देवस्य पायसं परिकीर्तितम् ॥
तदेव देयं विप्राणां शाकं भक्ष्यमथात्मना ।
शुभ[illegible]ाकसमायुक्तं भक्ष्यपेयसमन्वितः ॥[7]

1 तस्य—भवि. पु.

2 इतरत्र न योषिताम्—हे.

3 भक्ष्यभोज्यसमन्वितम्—हे; यश्च भक्त्या समन्वितः, परभक्ष्यसमन्वितम्—इति भवि. पु. पाठौ.

4 The following three half-verses are omitted by Hemādri.

5 Comment reproduced by Hemādri.

6 नैवेद्यं पायसं चात्र देवदेवस्य कीर्तयेत्—भवि. पु.

7 Hemādri comments : 'शुभं शाकः' अनिषिद्धशाकः ।

[1][द्वितीये पारणे राजञ्छुभगन्धानि यानि वै ।
पुष्पाणि तानि देवस्य तथा श्वेतं च चन्दनम् ॥
अगुरुश्चापि धूपोऽथ नैवेद्यं गुडपूपकाः ।
स्नानं कुशोदकेनात्र प्राशनं गोमयस्य तु ॥
तृतीये करवीराणि तथा रक्तं च चन्दनम् ।
धूपानां गुग्गुलुश्चात्र प्रियो देवस्य सर्वदा ॥
शाल्योदनं च नैवेद्यं प्रियो देवस्य सर्वदा ।
तमेव ब्राह्मणानां तु भक्ष्यलेह्यसमन्वितम् ॥]
कालशाकेन च विभो युक्तं दद्याद्विचक्षणः ।
गौरसर्षपकल्केन स्नानं चात्र विदुर्बुधाः ॥
तस्यैव प्राशनं धन्यं सर्वपापहरं शुभम् ।
तृतीयपारणस्यान्ते [2]महद्ब्राह्मणभोजनम् ॥
श्रवणं च पुराणस्य वाचनं चास्य शस्यते ।
देवस्य पुरतः [3]स्थित्वा ब्राह्मणानां तथाग्रतः ॥
ब्राह्मणाद्वाचकाच्छ्राव्यं नान्यवर्णसमुद्भवात् ।
[4]तथा तान्ब्राह्मणान्सर्वान् शक्त्या भक्त्या च पूजयेत् ॥
वाचकस्यामले राजन् वाससी सन्निवेदयेत् ।
वाचके पूजिते देवः सदा तुष्यति [5]भास्करः ॥
[6][करवीरं यथेष्टं तु तथा रक्तं च चन्दनम् ।

1 The following eight lines are omitted by ना and उ MSS; supplied by Hemādri and printed भवि. पु.

2 ब्राह्मणानां च भोजनम्—हे.

3 स्नातः—हे; तात—भवि. पु.

4 श्रावयेद्ब्राह्मणान्—हे.

5 भास्वरः—ना.

6 The following three lines except the word 'करवीरं' are not found in ना and उ MSS; Supplied by the printed भवि. पु. and हेमाद्रि.

यथेष्टं गुग्गुलं तस्य [1]यथेष्टं पायसं सदा ॥
[2]यथेष्टा मोदकास्तस्य यथा वै ताम्रभाजनम् ।]
यथेष्टं च घृतं तस्य यथेष्टो वाचकः सदा ॥
[3]पुराणं च यथेष्टं वै सवितुः कुरुनन्दन ।
इत्येषा सप्तमी [4]पूर्णा स्वप्रिया गोपतेः सदा ॥
यामुपोष्येह पुरुषो [5]दौर्गत्येन न युज्यते ।

[6]इदं शाकसप्तमीव्रतं कार्तिके शुक्लसप्तम्यामुपक्रम्य प्रतिमासं कुर्वता पुनर्मासचतुष्टये या शुक्लसप्तमी तस्यां पारणं कार्यम् । एवमेकस्मिन् वर्षे वारत्रयं पारणं भवति । एवमेव [7]वर्षान्तरेष्वेतादृशं [व्रतं यावज्जीवं][8] कर्तव्यम् ॥

[9]इति शाकसप्तमीव्रतम् ॥

## [यज्ञसप्तमी]

[10]वासुदेव उवाच—

नैमित्तिकान् ततो वक्ष्ये [11]यज्ञानथ समासतः ।

1 यथेष्टं चैव भाजनम्—हे.
2 Line omitted by Hemādri.
3 पारणं—हे.
4 पुण्या शाकाह्वा—भवि. पु; पुण्या सुप्रिया—हे.
5 भाग्यवांश्च प्रजायते—भवि. पु.
6 Comment reproduced by Hemādri.
7 वर्षान्तरेषु एतादृशी कर्तव्यम्—ना.
8 यावच्छुक्लसप्तमी तस्यां तस्यां च—हे.
9 इति भविष्यत्पुराणोक्तं शाकसप्तमीव्रतम्—हे.
10 हे. व्र. I., ७५७–७६०; भवि. पु., ब्राह्मपर्व, अ. ५०, श्लो. १–४२.
11 यज्ञात्वा च समासतः—भवि. पु.

सप्तम्यां ग्रहणे चैव सङ्क्रान्तिषु विशेषतः ॥[1]
शुक्लपक्षस्य सप्तम्यां हविर्भुक्त्वैकदा दिवा ।
सम्यगाचम्य संध्यायां [2]वरुणं प्रणिपत्य च ॥
इन्द्रियाणि च संयम्य स तं ध्यात्वा स्वपेदधः ।
दर्भशय्यागतो रात्रौ प्रातः स्नातः सुसंयतः ॥
[3]सर्वस्यादौ तथैवान्ते पूर्ववद्वरुणं यजेत् ।
जुहुयाद्वह्वचो[4] ह्यग्निं [5]सूर्याग्निं परिकल्प्य वै ॥
[6]सूर्याग्निकरणं वक्ष्ये तर्पणं च समासतः ।
[7]अस्त्रेणोङ्कारमुल्लिख्य सावित्र्याभ्युक्ष्य वानलम् ॥

[8]'अस्त्रेण' अस्त्रमन्त्रेण। 'सावित्र्या' सूर्यगायत्र्या॥

प्रक्षिप्यास्तीर्य दर्भांस्तु [9]देशे काले यथेप्सिते ।
प्रागग्रैरुदगग्रैश्च[10] पात्राण्यालभ्य [11]चक्रवत् ॥
पवित्रं द्विकुशं कृत्वा साग्रं प्रादेशसंमितम् ।
तेन पात्राणि संप्रोक्ष्य [12]संशोध्याज्यं विलोप्य च ॥
उदग्भागस्थिते पात्रे [13]प्रज्वाल्याथोल्मुकेन च ।

1 Hemādri comments : 'नैमित्तिकान् ततो वक्ष्ये' इत्यनेन श्लोकेन ग्रहणसंक्रान्तिषु साधारण्येन यज्ञप्रतिज्ञा कृता । सत्रसप्तमीयज्ञं तावदाह 'शुक्लपक्षस्ये'त्यादिना ।

2 Hemādri comments : वरुणोऽत्र सूर्यः; वारुणं—भवि. पु.

3 ततः संध्यामुपास्याथ पूर्वोक्तं च मनुं जपेत्—भवि. पु.

4 युगपद्वा ऋचो—ना; जुहुयाच्च तदा—भवि. पु.

5 सूर्याग्नी—भवि. पु.

6 पर्यग्निकरणं—ना.

7 अस्त्रेणाङ्गारमुल्लिख्य—ना; अर्चनागारमुल्लिख्य प्रविश्याचर्य जनैर्जनम्—भवि. पु.

8 Comment reproduced by Hemādri.

9-10 Omitted by printed भवि. पु.

11 च क्रमात्—भवि. पु.

12 संशोध्य च विलोप्य च—हे; संशोध्याथ विलोक्य च—भवि. पु.

13 पर्यन्तोन्मुखेन च—ना; साग्निना चोल्मुकेन च—हे.

पर्यग्निकरणं कृत्वा तथाज्योत्पवनं त्रिधा ॥
परिमृज्य स्रुवादींश्च दर्भैः [1]संप्रोक्षितैश्च तैः ।
जुहुयात्प्रोक्षिते वह्नौ तत्रार्कं [2]पूजयेज्जपेत् ॥
[3]भूमौ स्थितेन पात्रेण [4]विष्टरेण च पाणिना ।
वामेन[5] [6]नृपशार्दूल नान्तरिक्षे [7]तु हूयते ॥

'अन्तरिक्षे' [8]पर्णिकादौ ॥

दक्षिणेन [9]स्रुवं गृह्य [10]जुहुयात्पावकं पुनः ।
हृदयेन क्रियाः सर्वाः कर्तव्याः पूर्वचोदिताः ॥

'हृदयेन' हृदयमन्त्रेण ॥

अर्कादारभ्य[11] [12]संतर्प्य दद्यात् पूर्णाहुतिं ततः ।
[13]वरुणायादरान्माघे सप्तम्यां वरुणं यजेत् ॥
यथाशक्त्या तु विप्रेभ्यः प्रदद्यात् खण्डवेष्टकान् ।
दद्याच्च दक्षिणां शक्त्या प्राप्यते [14]यागजं फलम् ॥
एवं च फाल्गुने सूर्यं [15]चैत्रे चाप्यंशुमालिनम् ।

1 संप्रोक्षयेत्ततः—भवि. पु.
2 पूर्ववद्यजेत्—हे ; पूर्ववद्व्रजेत्—भवि. पु.
3 अभूमौ स्थितपात्रेण—भवि. पु.
4 बिस्तरेण—ना, उ, हे.
5 दानेन—भवि. पु.
6 यदुशार्दूल—हे, भवि. पु.
7 स्थले क्वचित्—भवि. पु ; तु पूयते—हे.
8 त्रिकादौ—हे.
9 शुचौ—हे.
10 जुहुयाद्यावकं—ना.
11 अनेन हुत्वा—हे.
12 संज्ञार्थं दद्यात्पूर्णां हुतिं स्थितः—भवि. पु.
13 वरुणाय शतैर्माघे—भवि. पु.
14 यावकं—ना ; याचितं—भवि. पु.
15 चैत्रे वैशाख एव च—भवि. पु ; चैत्रेऽप्यंशुमानपि—ना ; चैत्रेटे वांशुमालिनम्—हे.

वैशाखे मासि धातारमिन्द्रं[1] ज्येष्ठे यजेद्रविम् ॥
आषाढे श्रावणे मासि [2]भगं भाद्रपदे तथा ।
आश्विने चापि पर्जन्यं त्वष्टारं कार्तिके यजेत् ॥
मार्गशीर्षे तु मित्रं च पौषे [3]विष्णुं यजेद्रविम् ।
संवत्सरेण यत्प्रोक्तं [4]फलमिष्टं दिने दिने ॥
तत्सर्वं प्राप्नुयात्क्षिप्रं भक्त्या श्रद्धासमन्वितः ।
एवं संवत्सरे पूर्णे कृत्वा वै काञ्चनं [5]रथम् ॥
सप्तभिर्वाजिभिर्युक्तं नानारत्नोपशोभितम् ।
आदित्यप्रतिमां मध्ये शुद्धहेम्ना कृतां शुभाम् ॥
रत्नैरलङ्कृतां कृत्वा हेमपद्मोपरि स्थिताम् ।
तस्मिन्रथवरे कृत्वा सारथिं चाग्रतः स्थितम् ॥
वृतं[6] द्वादशभिर्विप्रैः [7]क्रमान्मासधिपात्मभिः ।[8]
[9]सर्वकल्प[illegible]माचार्यं पूजयित्वा रथाग्रतः ॥
संचिन्त्यादित्यवत्तं[10] वै स्तुवन् [11]रत्नादिनार्चयेत् ।
एवं मासाधिपान् विप्रान् संपूज्याथ निवेदयेत् ॥
आचार्याय रथं छत्रं[12] ग्रामं गावो महीं शुभाम् ।

1 रुद्रं—ना.
2 नभं भाद्रपदे यमम्—भवि. पु.
3 विश्वं—ना.
4 फलमिष्टा—हे.
5 वरम्—ना.
6 धृत—ना.
7 क्रमान्मासाधिपात्मभिः—हे, भवि. पु; क्रमान्मासादिनामभिः—ना, ड.
8 Hemādri comments: 'मासाधिपाः' प्रतिमासोक्ताः सूर्याः । अतस्तद्भक्तिभावितैर्द्वादशभिर्विप्रैर्वृतमाचार्यं पूजयेदित्यर्थः ।
9 मध्ये कृत्वा स्वमाचार्यं पूजयित्वा यथाश्रुति—भवि. पु; सर्वकल्पकमाचार्यं—ना.
10 संचिन्त्यादित्यवर्णं—भवि. पु; संचिन्त्यादित्यवत्तं—हे.
11 वसु—हे; वस्त्र—भवि. पु.
12 चक्रं—हे.

आश्वान्मासाधिपेभ्यश्च[1] द्वादशभ्यो निवेदयेत् ॥
एवं भक्त्या [यथाशक्त्या][2] हेमरत्नादिभूषणम् ।
दत्वा तस्य नमस्कृत्य व्रतं पूर्णं निवेदयेत् ॥
अत ऊर्ध्वं न दोषोऽस्ति [3]व्रतस्याकरणेऽपि मे ।
एवमस्त्विति विप्रेन्द्रैः सहाचार्यैः पुनः पुनः ॥
षष्ठीश्चैवाशिषो[4] दत्वा प्रवदेत् प्रीयतामिति ।
आदित्यो येन कामेन त्वया चाराधितो व्रतैः ॥
तुभ्यं ददातु तं कामं संपूर्णं भवतु व्रतम् ।
[5]विप्रेभ्यो गुणवद्भ्यश्च [6]शिष्टेभ्यश्च विशेषतः ॥
दीनेभ्यः कृपणेभ्यश्च[7] शक्त्या दत्वा च दक्षिणाम् ।
ब्राह्मणान् भोजयित्वा च व्रतमेतत् समापयेत् ॥
कृत्वैवं सप्तमीमब्दं राजा भवति धार्मिकः ।
[8]एवं तु स भवेद्राजन् भास्करस्यातिवल्लभः ॥
शतयोजनविस्तीर्णं निःसपत्नमकण्टकम् ।
निष्पन्नं[9] मण्डलं भुङ्क्ते साग्रं वर्षशतं सुखी ॥
वित्तहीनोऽपि यो भक्त्या कृत्वा ताम्रमयं रथम् ।

1 माघान्मासाधिपेभ्यश्च—हे.

2 Word omitted by ना and उ; supplied by Hemādri and भवि. पु.

3 व्रतस्य करणादिह—हे; व्रतस्याकरणेष्वपि—भवि. पु.

4 बह्वृचैराशिषो—हे.

5 The printed भवि. पु., adds a verse before this:

आचार्यान् विप्ररूपैस्तु प्रविष्टो भास्करः स्वयम् ।
दास्यत्येव परं कर्तुमित्युक्तं भानुना स्वयम् ॥

6 निःस्वेभ्यश्च—हे, भवि. पु.

7 दीनान्धकृपणेभ्यश्च—हे, भवि. पु.

8 पुरुषश्च भवेद्दाता—हे; पुरुषः स्त्री भवेद्राज्ञां तादृशामथ वल्लभा—भवि. पु.

9 त्रिःशतं—हे.

दद्याद्व्रतावसाने तु[1] कृत्वा सर्वं यथोदितम् ॥
सोऽशीतियोजनं भुङ्क्ते विस्तीर्णं मण्डलं [2]बुधः ।
एवं पिष्टमयं [3]सोऽपि वित्तहीनो ददेद्रथम् ॥
आषष्टियोजनं भुङ्क्ते [4]दीर्घायुर्नीरजः सुखी ।
[5]सूर्यलोकं स कल्पान्ते सकृत्कृत्वा समाप्नुयात् ॥

[6]इति यज्ञसप्तमीव्रतम् ॥

## [रथाङ्गसप्तमी]

[7]वासुदेव उवाच—

माघस्य शुक्लपक्षे तु पञ्चम्यां [8]मत्कुलोद्वह ।
एकभक्तं समाख्यातं षष्ठ्यां नक्तमुदाहृतम् ॥
सप्तम्यामुपवासं तु केचिदिच्छन्ति सुव्रतम् ।
षष्ठ्यां केचिदुशन्तीह[9] सप्तम्यां राधनं[10] किल ॥
कृत्वोपवासः षष्ठ्यां तु पूजयेद्भास्करं बुधः ।
रक्तचन्दनमिश्रैस्तु करवीरैः समाहृतैः ॥
गुग्गुलेन महाबाहो [11]सुगन्धेन च सुव्रत ।

1 दद्याद्व्रतोपवासं च—हे.
2 भुवः—हे ; नृपः—भवि. पु.
3 योऽपि वित्तहीनः करोति ना—भवि. पु.
4 साग्रं वर्षशतं सुखी—हे.
5 सूर्यलोके च कल्पान्तं यावत्स्थित्वेदमाप्नुयात्—भवि. पु.
6 इति भविष्यत्पुराणोक्तं विजयायज्ञसप्तमीव्रतम्—हे.
7 हे. व्र. I., ६५९–६६० ; भवि. पु., ब्राह्मपर्व, अ. ५१, श्लो. १–१६.
8 च कुरूद्वह—हे.
9 केचिद्वदन्तीह—भवि. पु.
10 पारणं—भवि. पु.
11 संधावेन—भवि. पु.

पूजयेद्देवदेवेशं [1]ग्रहेशं शंकरं रविम् ॥[2]
एवं हि चतुरो मासान् माघादीन् पूजयेद्रविम् ।
आत्मनश्चापि शुद्ध्यर्थं प्राशनं गोमयस्य च ॥
स्नानं च गोमयेनेह कर्तव्यं चात्मशुद्धये ।
ब्राह्मणान् दिव्यभौमांश्च भोजयेच्चापि [3]भक्तितः ॥[4]
ज्येष्ठादिष्वपि मासेषु श्वेतचन्दनमुच्यते ।
श्वेतानि चापि पुष्पाणि शुभगन्धान्वितानि वै ॥
कृष्णागरुस्तथा धूपो नैवेद्यं पायसं परम् ।
तेनैव [5]ब्राह्मणांस्तांस्तु भोजयेच्च महामते ॥
प्राशयेत् पञ्चगव्यं तु स्नानं तेनैव पुत्रक ।
कार्तिकादिषु मासेषु अगस्तिकुसुमैः स्मृतम् ॥
[6]पूजनं यदुशार्दूल धूपश्चैवापराजितः ।
नैवेद्यं गुडपूपाश्च तथा चेक्षुरसं स्मृतम् ॥
तेनैव [7]ब्राह्मणांस्तांस्तु भोजयेच्च स्वशक्तितः ।
कुशोदकं प्राशयेच्च स्नानं च कुरु [8]सिद्धये ॥
तृतीयपारणस्यान्ते माघे मासि महामते ।
भोजनं [9]पायसं चैव द्विगुणं समुदाहृतम् ॥
देवदेवस्य पूजा च कर्तव्या शक्तितो बुधैः ।

1 शंकरं भास्करं रविम्—भवि. पु.

2 Hemādri comments : 'शंकरं' सुखकरमित्यर्थः ।

3 शक्तितः—हे, भवि. पु.

4 Hemādri comments : दिवि देवकुले भवाः 'दिव्याः', इतरे भौमाः ।

5 ब्राह्मणान् साधून्—हे ; ब्राह्मणान् तुष्टान्—भवि. पु.

6 पूजयेन्नरशार्दूल धूपैश्चैवापराजितैः—भवि. पु.

7 ब्राह्मणान् स्नातो—हे ; ब्राह्मणांस्तात—भवि. पु.

8 शुद्धये—भवि. पु.

9 तत्र दानं च—हे, भवि. पु.

रथस्य [1]चाधियानं तु रथयात्रा च सुव्रत ॥
व्रतस्य[2] प्राप्तिहेतोर्वै कर्तव्या विभवे सति ।
दानं [3]स्वर्णरथस्येह यथोक्तं विभवे सति ॥
इत्येषा कथिता पुत्र रथाङ्गा[4] सप्तमी शुभा ।
महासप्तमीति विख्याता[5] महापुण्या महोदया ॥
यामुपोष्य धनं पुत्रान् कीर्तिं विद्यां समश्नुते ।[6]

[7]इति रथाङ्गसप्तमी ॥

## [रथसप्तमी]

[8]ब्रह्मोवाच—

माघे मासि महादेव सिते पक्षे जितेन्द्रियः ।
षष्ठ्यामुपोषितो भूत्वा गन्धपुष्पोपहारतः[9] ॥
पूजयित्वा दिनकरं रात्रौ तस्याग्रतः स्वपेत् ।
विबुधस्त्वथ सप्तम्यां भक्त्या भानुं समर्चयेत् ॥
ब्राह्मणान् भोजयेद्भक्त्या[10] वित्तशाठ्यं विवर्जयेत् ।
खण्डवेष्टैर्मोदकैश्च[11] तथेक्षुगुडपूपकैः ॥

1 चापि दानं तु—हे, भवि. पु.
2 रथस्य—हे.
3 सूर्यरथस्येह—हे.
4 रथाह्वा—भवि. पु ; रथाङ्का—हे.
5 सप्तमीति महा ख्याता—हे.
6 The printed भवि. पु., adds a line after this :
तथाखिलं कुवलयं चन्द्रेण च समोऽर्चिषा ।
7 इति भविष्यत्पुराणोक्तं महासप्तमीव्रतम्—हे ; महासप्तमीव्रतमिति मुद्रितभविष्यपुराणेऽपि ।
8 हे. व्र. I., ६५६–६५९ ; भवि. पु., ब्राह्मपर्व, अ. ५९, श्लो. १–२६.
9 गन्धपुष्पोपहारकैः—हे.
10 भोजयेत्पश्चात्—भवि. पु.
11 खण्डनेष्टौ मण्डने च—ना ; खण्डनेष्टौ मण्डके वा—उ.

अथ संवत्सरे[1] पूर्णे सप्तम्यां कारयेद्बुधः ।
देवदेवस्य वै यात्रां [2]पूर्वोक्तविधिना चरेत् ॥
[3]कृच्छ्रपादं तु यत्कृत्वा रथारूढं च तं रविम् ।
पश्येद्भक्त्या जगन्नाथं स याति परमां गतिम् ॥
तृतीयायामेकभक्तं[4] चतुर्थ्यां नक्तमुच्यते ।
अयाचितं तु पञ्चम्यां षष्ठ्यां चैवमुपोषितः ॥
सप्तम्यां पारणं कुर्याद्दृष्ट्वा देवं रथे स्थितम् ।
पूजयित्वा च विधिना भक्त्या [5]शक्त्या त्रिलोचन ॥
सौवर्णं तु रथं कृत्वा ताम्रपात्रोपरि स्थितम् ।
रथमध्ये न्यसेद्व्योम[6] पूजितं मणिभिर्नवम्[7] ॥
पद्मरागं न्यसेन्मध्ये मौक्तिकं पूर्वतो न्यसेत् ।
इन्द्रनीलमथो याम्यां वारुण्यां [8]मरकतं न्यसेत् ॥
प्रवालमुत्तरे [9]रुद्र [10]सवज्रं विन्यसेद्बुधः ।
श्वेतं पीतं सितं वापि रक्तं वान्धकसूदन ॥
एतानि [11]भव वस्त्राणि दिक्षु सर्वासु विन्यसेत् ।

1 प्रथमे वत्सरे—हे.

2 Hemādri comments : 'पूर्वोक्तविधिना' इति, नानातिथिप्रकरणस्थितरथयात्राविधिनेत्यर्थः ।

3 कृच्छ्रपादं व्रतं कृत्वा रथारूढं व्रतं रविम्—हे ; कृष्णपक्षे तु यः कृत्वा रथमारोहितं रविम्—भवि. पु.

4 तृतीयामेकभक्तं च—ना, हे.

5 देवं for शक्त्या—हे.

6 रथमध्ये वशे होमं—ना ; रथमध्ये वसेद्व्योम—उ.

7 मणिभिर्हर—भवि. पु.

8 मकरं न्यसेत्—ना ; मकरध्वजम्—हे ; मरकतं हर—भवि. पु.

9 रुद्रं—ना ; रुद्रे—हे.

10 सर्वज्ञं—हे.

11 नववस्त्राणि—हे ; तात वस्त्राणि—भवि. पु.

[1]पताका रथसंस्थाने घण्टाभरणभूषितम् ॥
[2]पुष्पदाम्ना स्वलङ्कृत्य रथं [3]रुद्र समन्ततः ।
यथान्यायं पूजयित्वा भास्कराय निवेदयेत् ॥
भोजयित्वाथवा विप्रानाचार्याय निवेदयेत् ।
योऽधीते सप्तमीकल्पं सोपाख्यानं च [4]शङ्कर ॥
आचार्यः स द्विजो ज्ञेयो वर्णानामनुपूर्वशः ।
सौराणां वैष्णवानां च शैवानां [5]पार्वतीप्रिय ॥
अलाभे तु सुवर्णस्य रथं राजतमादिशेत् ।
तदभावे ताम्रमयं रथं व्योम च कारयेत् ॥
[6]अलाभेन तु ताम्रस्य रथः पिष्टमयः स्मृतः ।
[7]सहिरण्यं महादेव [8][ताम्रभाजनमास्थितम् ॥
कौशेययुग्मसहितं ब्राह्मणाय निवेदयेत् ।
पूर्वोक्ताय महादेव] वाचकाय महात्मने ॥
पञ्चरत्नसमायुक्तं [9]शुभाङ्गं प्रावृतं सितम् ।
स्वशक्त्या तु [illegible] वित्तशाठ्यं विवर्जयेत् ॥
एषा पुण्या पापहरा [10]रथाङ्गा सप्तमी हर ।
कथिता ते मया रुद्र महतीयं प्रकीर्तिता ॥

1 पताकाकारसंस्थानं—भवि. पु.

2 पुष्पैर्दामैरलंकृत्य—भवि. पु.

3 व्योमसमन्वितम्—हे.

4 शाङ्करम्—हे; भारत—भवि. पु.

5 पार्वतीपतिः—हे.

6 अभावे चापि ताम्रस्य—भवि. पु.

7 सहिरण्यो महादेवः—भवि. पु.

8 ना omits the portion in brackets and reads: सहिरण्यं महादेवं वाचकाय महात्मने ।

9 शुभगन्धाधिवासितम्—भवि. पु.

10 रथाङ्का—हे; रथाह्ला—भवि. पु.

स्नानं दानमथो होमः [1]पूजनं ग्रहनायके ।
[2]शतसाहस्रिकं पुण्यं[3] भवेद्भूधर विद्यते ॥
एवमेषा [4]पुण्यतरा माघे [5]प्राप्ते तु सप्तमी ।
यामुपोष्य नरो भक्त्या सूर्यस्यानुचरो भवेत् ॥
ब्राह्मणो याति देवत्वं क्षत्रियो विप्रतां व्रजेत् ।
वैश्यः क्षत्रियतां याति शूद्रो वैश्यत्वमेति वै ॥
विद्याविनयसंपन्नं भर्तारं कन्यका लभेत् ।
अपुत्रा स्त्री सुतं [6]विन्द्यात् सौभाग्यं च गणाधिप ॥
विधवा वाप्युपोष्येमां [7]सप्तमीं त्रिपुरान्तक ।
नान्यजन्मसु वैधव्यं प्राप्नुयात् पार्वतीप्रिय ॥
बहुपुत्रा बहुधना [8]भर्तुर्वल्लभतां व्रजेत् ।
यावद्वै सप्त जन्मानि [9]नारी वा पुरुषस्तथा ॥

[10]इति रथसप्तमी ॥

## [फलसप्तमी]

[11]सुमन्तुरुवाच—

अथ भाद्रपदे मासि शुक्लपक्षे [12]महामते ।

1 पूजा ग्रहपतेर्हर—भवि. पु.
2 शतसाहस्रं भवेदस्यां—भवि. पु.
3 भूत्यै—हे; कृतं—भवि. पु.
4 पुण्यतमा—हे; भवि. पु.
5 प्राप्ता—हे; प्रोक्ता—भवि. पु.
6 विन्देत्—भवि. पु.
7 उत्तमं लोकमश्नुते—हे.
8 पर्युर्वल्लभतां—भवि. पु; भर्तुर्दुर्लभतां—ना, उ.
9 स्त्रियस्तु पुरुषास्तथा—भवि. पु.
10 इति भविष्यत्पुराणोक्तरथाङ्कसप्तमीव्रतम्—हे; रथसप्तमीव्रतमिति—भवि. पु.
11 हे. व्र. I., ७३१–७३४; भवि. पु., ब्राह्मपर्व, अ. ६४, श्लो. ३६–६१.
12 समागते—भवि. पु.

सोपोष्या प्रथमं तत्र विधानं शृणु यद्भवेत् ॥
अयाचितं चतुर्थ्यां तु पञ्चम्यामेकभोजनम् ।
[1][उपवासपरः षष्ठ्यां जितक्रोधो जितेन्द्रियः ॥
अर्चयित्वा दिनकरं गन्धपुष्पनिवेदनैः ।
पुरतः स्थण्डिले रात्रौ स्वप्याद्देवस्य पुत्रक ॥
प्रध्यायन्मनसा देवं सर्वभूतार्तिनाशनम् ।
सर्वदोषप्रशमनं सर्वपातकनाशनम् ॥
विबुद्धस्त्वथ सप्तम्यां कुर्याद्ब्राह्मणभोजनम् ।]
पूजयित्वा दिनकरं पुष्पधूपविलेपनैः ॥
नैवेद्यं तत्र देवस्य फलानि कथयन्ति हि ।
खर्जूरं नारिकेलं च [2]तथा जम्बूफलानि च ॥
मातुलुङ्गफलानीह [3][कथितानि मनीषिभिः ।
भोजयित्वा ततो विप्रानात्मना [4]चैव भोजयेत् ॥
तथैषां चाप्यभावे तु शृणु वान्यानि सुव्रत ।
[5]शालिगोधूमपिष्टानि कारयेद्गणनायक ॥
गुडगर्भकृतानीह] [6]घृतपाकेन पाचयेत् ।
चातुर्यावकमिश्राणि[7] आदित्याय निवेदयेत् ॥
अग्निकार्यमथो कृत्वा ब्राह्मणान् भोजयेत्ततः ।

1 The following six lines are not found in ना and उ MSS; Supplied by Hemādri and printed भवि. पु.

2 तथैवाम्रफलानि च—हे; तथा चाम्रफलानि च—भवि. पु.

3 The portion in brackets is missing in ना and उ MSS; Supplied by Hemādri and printed भवि. पु.

4 च प्रभक्षयेत्—भवि. पु.

5 शालिगोधूमपिष्टेन—हे.

6 घृतगर्भाणि—हे.

7 Hemādri reads: 'जातुर्जीरकमिश्राणि' and comments: 'जातुर्जीरकमिश्राणि' एलापत्रनागकेसराणि ।

इत्थं द्वादश वै मासान् कार्यं व्रतमनुत्तमम् ॥
मासि मासि फलाहारः फलादायी [1]फलाशनः ।
व्रतमेतत्तु[2] कुर्वीत [3]भक्त्या ब्राह्मणभोजनम् ॥
स्नानप्राशनयोश्चापि विधानं श्रृणु सुव्रत ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
तिलसर्षपजः[4] कल्कः श्वेता मृच्चापि सुव्रत ।
[5]दूर्वाकल्कघृतं चापि [6]गोश्रृङ्गक्षालनं जलम् ॥
[7]जातीपुष्पविनिर्यासः प्रशस्तः स्नानकर्मणि ।[8]
प्राशने चाप्यथैतानि सर्वपापहराणि वै ॥
आदौ कृत्वा भाद्रपदं यथासंख्यं विदुर्बुधाः ।
इत्थं वर्षान्तमासाद्य भोजयित्वा द्विजोत्तमान् ॥
दिव्यान् [9]भौमान् महादेव ततस्तेभ्यो निवेदयेत् ।[10]
फलानि तानि हैमानि यथाशक्त्या [11]व्रतानि तु ॥
सवत्सामथवा धेनुं भूमिं [12]सस्यान्वितामथ ।
प्रासादमथवा भौमं सर्वधान्यसमन्वितम् ॥[13]

1 भवेन्नृप—हे ; कदाचन—उ.

2 वर्षान्ते त्वथ—भवि. पु.

3 शक्त्या—भवि. पु.

4 तिलाः सर्षपजं कल्कं—उ, हे ; तिलसर्षपयोः कल्कं—भवि. पु.

5 दूर्वाकल्कं घृतं—ना.

6 गोश्रृङ्गक्षालितं—भवि. पु.

7 जातीगुल्मविनिर्यासः—हे ; भवि. पु.

8 Hemādri comments : 'दूर्वाकल्कघृतं' दूर्वाकल्कघृतयुतम् । 'गोश्रृङ्गक्षालनं' येन गोश्रृङ्गं क्षाल्यते । 'जातीगुल्मविनिर्यासं' समूलशाखजातीपल्लवम् ।

9 भोगान्—भवि. पु.

10 Hemādri comments : देवकुले भवाः 'दिव्याः' । इतरे 'भौमाः' ।

11 व्रतानि तु—ना ; गणाधिप—भवि. पु.

12 शस्यान्वितामथ—ना, उ.

13 Hemādri comments : 'भौमं प्रासादं' राजगृहतुल्यं गृहम् ।

दद्याद्रक्तानि[1] वस्त्राणि ताम्रपात्रं सविद्रुमम् ।
शक्तियुक्तस्य चैतानि दरिद्रस्य तु मे शृणु ॥
फलानि [2]पिष्टजान्येषां तिलचूर्णान्वितानि तु ।
भोजयित्वा द्विजान् दद्याद्राजतानि फलानि तु ॥
धातुरक्तं वस्त्रयुग्ममाचार्याय निवेदयेत् ।
सहिरण्यं महादेवं पञ्चरत्नसमन्वितम् ॥
इत्थं समाप्यते [3]सम्यगाब्दिकं तात पारणम् ।
इत्येषा वै पुण्यतमा सप्तमी दुरितापहा ॥
यामुपोष्य नराः सर्वे यान्ति सूर्यसलोकताम् ।
पूज्यमानाः [4]सदा देवैर्गन्धर्वाप्सरसां गणैः ॥
अनया मानवो यस्तु पूजयेद्भास्करं सदा ।
दारिद्र्यदुःखदुरितैर्मुक्तो याति दिवाकरम् ॥
ब्राह्मणो मोक्षमायाति [5]क्षत्रियो स्वर्गतां व्रजेत् ।
वैश्यो धनदसालोक्यं शूद्रो विप्रत्वमाप्नुयात् ॥[6]
अपुत्रा[7] लभते पुत्रं दुर्भगा सुभगा भवेत् ।
विधवा या सती भक्त्या अनया पूजयेद्रविम् ॥
नान्यजन्मनि वैधव्यं नारी प्राप्नोति [8]मानद ।
चिन्तामणिसमा ह्येषा विज्ञेया फलसप्तमी ॥

1 दद्याद्रक्तानि—ना ; दद्याच्छुक्लानि—भवि. पु.
2 पुष्पाणि च तथा—हे.
3 सम्यगब्दान्ते—हे ; पारणं वार्षिकान्तिकम्—भवि. पु.
4 नित्यं—भवि. पु.
5 क्षत्रियश्चन्द्रतां व्रजेत्—हे; क्षत्रियश्चेन्द्रतां व्रजेत्—भवि. पु.
6 भवि. पु., adds a line after this : यामुपोष्य च नारीमां सप्तमीं लोकपूजिताम् ।
7 अपुत्रो—ना, हे.
8 नारद—ना.

पठतां शृण्वतां [1]डिण्डे सर्वकामप्रदा स्मृता ॥

[2]इति फलसप्तमी ॥

## [नामसप्तमी]

[3]ब्रह्मोवाच—

अतः परं प्रवक्ष्यामि रहस्यां नामसप्तमीम् ।
[4]पवित्रा हि पवित्राणां महापातकनाशिनी ॥
सप्तमी कृतमात्रेयं [5]नरांस्तारयते भवात् ।
सप्तावरान् सप्त पूर्वान् पितॄंश्चापि न संशयः ॥
[6]रोगांश्छिनत्ति दुश्छेद्यान् दुर्जयान् जयते रिपून् ।
अर्थं प्राप्नोति दुष्प्राप्यं यः कुर्यान्नामसप्तमीम्[7] ॥
कन्यार्थी लभते कन्यां धनार्थी लभते धनम् ।
पुत्रार्थी लभते पुत्रान् धर्मार्थी धर्ममाप्नुयात् ॥
समयान् पालयन् सर्वान् कुर्याच्चैवं विचक्षणः ।
समयान् शृणु भूतेश श्रेयसे गदतो मम ॥
आदित्यभक्तः पुरुषः [8]सप्तम्यां गणनायकम् ।
मैत्रं वै सर्वतः कुर्याद्भास्करं चापि चिन्तयेत् ॥
सप्तम्यां न स्पृशेत्तैलं नीलं वस्त्रं न धारयेत् ।
न चाप्यामलकैः स्नानं न कुर्यात् कलहं क्वचित् ॥

1 भक्त्या—हे ; दिण्डे—भवि. पु.
2 इति भविष्यत्पुराणोक्तं फलसप्तमीव्रतम्—हे.
3 हे. व्र. I., ७२६–७२८ ; भवि. पु., ब्राह्मपर्व, अ. ६५, श्लो. १–७, १९–३४.
4 Line not found in भवि. पु.
5 वरांस्तारयते भवान्—ना, उ.
6 रोगांश्छिन्दन्ति—ना.
7 सकृत्कृत्वापि सप्तमीम्—हे.
8 पञ्चम्यां-

तथैवान्नमलं मद्यं [1]न दद्यान्न पिबेद्बुधः ।
न द्रोहं कस्यचित्कुर्यान्न पारुष्यं समाचरेत् ॥
[2]नावभाषेत चण्डालं [3]न स्त्रियं च रजस्वलाम् ।
न चापि संस्पृशेद्धीनं[4] मृतकं नावलोकयेत् ॥
[5]नास्फोटयेन्नापि हसेद्गायेच्चापि न गीतिकाम् ।
न नृत्येदतिरागेण न च वाद्यादि[6] वादयेत् ॥
न शयीत[7] स्त्रिया सार्धं न सेवेत [8]दुरोदरम् ।
न रोदेदश्रुपातेन [9]न वाद्यात् पञ्चशाकिकाम् ॥

[8]'दुरोदरं' द्यूतम् । [10]'पञ्चशाकिका' कन्दमूलफलपुष्पपत्राणि पञ्चशाकिकानि ॥

नाकर्षेच्च [11]शिरोयूका न मृषावादमाचरेत्[12] ।
परस्यानिष्टकथनमतिशोकं विवर्जयेत् ॥
न कञ्चित्ताडयेज्जन्तुं न कुर्यादतिभोजनम् ।[13]
न कुर्याद्धि दिवा स्वप्नं दम्भं शाठ्यं च वर्जयेत् ॥

1 न च दद्यात्पिबेद्बुधः—ना.

2 न च भाषेत—हे; न चैव खादेन्मांसानि मद्यानि न पिबेद्बुधः—भवि. पु.

3 वचनैः स्त्रीं for न स्त्रियं च—हे.

4 स चापि संस्पृशेत्स्थानं—हे; न चापि संस्पृशेच्छागं—ना.

5 Hemādri omits this line here but adds it after the next five lines before न किञ्चित्ताडयेज्जन्तुं etc.

6 वाद्यानि—हे.

7 स्वपेच्च—हे.

8 लवोदरम्—ना.

9 न च वाच्यं च शौकिकम्—भवि. पु.

10 Comment reproduced by हेमाद्रि.

11 शिरो नूनं—ना.

12 न वृथावादमाचरेत्—हे, भवि. पु.

13 Hemādri adds after this a line 'नास्फोटयेन्नापि हसेद्गायेच्चापि न गीतिकाम्' which is omitted previously. See footnote 5.

रथ्यायामटनं चापि यत्नतः परिवर्जयेत् ।
अथापरो विधिश्चात्र श्रूयतां त्रिपुरान्तक ॥
चैत्रात् प्रभृति कर्तव्या सर्वदा नामसप्तमी ।
धातेति चैत्रमासे तु पूजनीयो दिवाकरः ॥
अर्यमेति च वैशाखे ज्येष्ठे मित्रः प्रकीर्तितः ।
आषाढे वारुणो ज्ञेय इन्द्रो नभसि कथ्यते ॥
विवस्वांश्च नभस्ये तु पर्जन्योऽश्वयुजि स्मृतः ।
पूषा कार्तिकमासे तु [1]मार्गशीर्षे तु कथ्यते ॥
भगः पौषे [2]भवेत् पूज्यस्त्वष्टा माघे तु कथ्यते ।
विष्णुस्तु फाल्गुने मासि पूज्यो वन्द्यश्च भास्करः ॥
सप्तम्यां चैव सप्तम्यां भोजयेद्भोजकान् बुधः ।
सघृतं भोजनं देयं भोजयित्वा विधानतः ॥
भोजकायैव दातव्या[3] दक्षिणा स्वर्णमाषकम् ।
सघृतं भोजनं देयं रक्तवस्त्राणि चैव हि ॥
अलाभे भोजकानां तु दक्षिणीया[4] द्विजोत्तमाः ।
तथैव भोजनीयाश्च श्रद्धया [5]परयान्वितैः ॥
[6]विशेषतो वाचकश्च ब्राह्मणः कल्पवित्सदा ।
इत्येषा कथिता तुभ्यं सप्तमी गणनायक ॥
श्रुता सती[7] पापहरा सूर्यलोकप्रदायिनी ।

[8]इति नामसप्तमीव्रतम् ॥

1 मार्गशीर्षेषुरुच्यते—भवि. पु.
2 विवस्वांश्च त्वष्टा—हे; भवो पूज्यस्त्वष्टा—उ.
3 भोजकाय प्रदेया तु—हे; भोजकायैव विप्राय—भवि. पु.
4 दक्षिणाया—ना; दक्षिणीया:—भवि. पु.
5 परयान्वित:—हे.
6 विशेषत: पूजनीया: ब्राह्मणा:—हे.
7 सा सप्तमी for श्रुता सती—ना.
8 इति भविष्यत्पुराणोक्तं नामसप्तमीव्रतम्—हे.

## [जया सप्तमी]

[1]ब्रह्मोवाच—

जया च विजया चैव जयन्ती चापराजिता ।
महाजया च नन्दा च भद्रा वामा प्रकीर्तिता ॥
शुक्लपक्षस्य सप्तम्यां नक्षत्रं [2]पञ्चतारकम् ।
यदा भवेत्तदा ज्ञेया जया नामेति सप्तमी ॥
तस्यां दत्तं हुतं जप्तं तर्पणं देवपूजनम् ।
सर्वं शतगुणं प्रोक्तं [3]पूजा चापि दिवाकरे ॥[4]
[5]हंसे हंससमारूढे शुक्ला या सप्तमी परा ।
स्वमेकमेवं[6] कर्तव्या [7]विधिनानेन [8]भास्कर ॥[9]
पारणं त्रितयं तस्यां प्रथमं गोपते पुरा ।
प्रथमं चतुरो मासान् पारणं कथितं बुधैः ॥
कथितान्यत्र पुष्पाणि करवीरस्य सुव्रत ।
चन्दनं च तथा रक्तं धूपार्थे गुग्गुलुः स्मृतः ॥

1 हे. व्र. I., ६६०–६६३ ; भवि. पु., ब्राह्मपर्व, अ. ९६, श्लो. ३–३१.

2 Hemādri comments : 'पञ्चतारकम्' इति रोहिण्याश्लेषामघाहस्ताश्च ।

3 पूजां चापि दिवाकरीम्—हे.

4 The printed भवि. पु., adds the following two verses after this :

भास्करस्य प्रिया ह्येषा सप्तमी पापनाशिनी ।
धन्या यशस्या पुण्या च कामदा कञ्जजावहा ॥
विधिनानेन कर्तव्या तिथिर्या मम विद्यते ।
तं शृणुष्व विधिं मत्तो येन कृत्वार्थमश्नुते ॥

5 Hemādri comments : 'हंसः' सूर्यः ।

6 स्वमेकमेकं—उ ; वर्षमेकं तु—हे ; समुपोष्य च—भवि. पु.

7 विधिना तेन—उ.

8 शंकर—भवि. पु.

9 Hemādri adds a line after this :
सौवर्णं कारयेद्भक्त्या द्विभुजं पद्मधारिणम् ।

कासारं तु सितासारं नैवेद्यं भास्कराय वै ।

[1]'कासारो' [2]गोधूमचूर्णैक्षवघृतैर्भृष्ट्वा निर्मितो लोकप्रसिद्धः । 'सितासारः' शर्कराबहुलः ॥

अनेन विधिना पूज्य मार्तण्डं विबुधाधिपम् ॥
पूजयेद्ब्राह्मणान् [3]भौमान् भक्ष्यभोज्यैर्यथाविधि ।
कासारं भोजयेद्विप्रान् [4]पारणं फलवद्भवेत् ॥
स्वयमेव तथाश्नीयात् [5]प्रयतो मौनमाश्रितः ।
पञ्चम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्तितम् ॥
कृत्वोपवासं सप्तम्यामष्टम्यां पारणं भवेत् ।[6]
सिद्धार्थकैः स्नानमत्र प्राशनं [7]पायसेन च ॥
भानुर्मे प्रीयतामत्र दन्तकाष्ठं तथार्कजम् ।[8]
[9]द्वितीयं श्रूयतां भीम[10] पारणं गदतो मम ॥
मालतीकुसुमानीह श्रीखण्डं चन्दनं तथा ।

1 Comment reproduced by Hemādri.

2 गोधूमचूर्णैः सुरघृतैर्भृष्ट्वा—उ.

3 भक्त्या—हे; भीम—भवि. पु.

4 पारणं फलदं भवेत्—हे; पारणेऽस्मिन् विचक्षणः—भवि. पु.

5 आदृतो मौनमास्थितः—हे; प्रयतो भौममाश्रितः—ना.

6 भवि. पु., adds the following after this:

षष्ठ्या समेता कर्तव्या नाष्टम्येयं कदाचन ।
यस्योपवासनायैव षष्ठ्यामाहुरुपोषितम् ॥
यथैकादश्यां कुर्वन्ति उपवासं मनीषिणः ।
उपवासनाय द्वादश्यां तथेयं परिकीर्तिता ॥

7 गोमयस्य तु—भवि. पु.

8 भवि. पु., adds a line after this:

इत्येष कथितस्तात प्रथमे पारणे विधिः ।

9 Line omitted by ना.

10 कर्म—हे.

नैवेद्यं पायसं भानोर्धूपं विजयमादिशेत् ॥
ब्राह्मणान् भोजयेच्चापि [1]तथाश्नीयात् स्वयं विभो ।
रविर्मे प्रीयतामत्र नाम देवस्य [2]कीर्तयेत् ॥
प्राशयेत् पञ्चगव्यं तु खादिरं दन्तधावनम् ।
[3]द्वितीये पारणे देव विधिरुक्तो मयाधुना ॥
तृतीये पारणे चैव कथ्यमानं निबोध मे ।
अगस्तिकुसुमैरत्र भास्करं पूजयेद्बुधः ॥
समालम्भनमत्रोक्तं श्रीखण्डं कुङ्कुमं तथा ।
सिल्हको [4]धूप उद्दिष्टः सूर्यप्रीतिकरः परः ॥
शाल्योदनं तु नैवेद्यं [5]रसालोपरि संयुतम् ।
ब्राह्मणानां [6]च दातव्यं [7]भक्षयेच्च तथात्मना ॥
कुशोदकप्राशनं तु बदर्या दन्तधावनम् ।
विकर्तनः प्रीयतां मे नाम देवस्य कीर्तयेत् ॥
वर्षान्ते देवदेवस्य पूजा कार्या विधानतः ।
गन्धपुष्पोपहारैश्च [8]नानाप्रेक्षणकैस्तथा ॥
गोदानैर्भूमिदानैश्च ब्राह्मणानां च तर्पणैः ।
इत्थं संपूज्य देवेशं देवस्य पुरतः [9]स्थितः ॥
कारयेत् परमं पुण्यं [10]धन्यं पुस्तकवाचनम् ।
वस्त्रैर्गन्धैस्तथा धूपैर्वाचकं पूज्य यत्नतः ॥

1 समश्नीयात्—हे.
2 कीर्तनात्—ना.
3 द्वितीयं पारणं—उ.
4 धूपनिर्दिष्टं—हे.
5 Hemādri comments : 'रसालः' शिखण्डिनी ।
6 अथो दानं for च दातव्यं—हे.
7 भोजयेच्च—हे.
8 नानाप्रोक्षणकैस्तथा—हे.
9 स्थितम्—हे.
10 धर्मपुस्तकवाचनम्—हे.

देवस्य पुरतः स्थित्वा ततो मन्त्रमुदीरयेत् ।
देव देव जगन्नाथ [1]सर्वरोगार्तिनाशन ॥
ग्रहेश [2]लोकतपन विकर्तन तमोपह ।
कृतेयं [3]देवदेवस्य जया नामेति सप्तमी ॥
मया तव प्रसादेन धन्या पापहरा शिवा ।
अनेन विधिना वीर यः कुर्यात् [4]सप्तमीमिमाम् ॥
तस्य स्नानादिकं सर्वं भवेच्छतगुणं विभो ।
कृत्वेमां सप्तमीं वीर [5]पुरुषाः प्राप्ततेजसः ॥
धनधान्यं सुवर्णं च पुत्रानायुर्बलं स्मृतम् ।
प्राप्येह [6]देवशार्दूल [7]स्वर्गलोकं च गच्छति ॥
तस्मादेत्य पुनर्भूमौ [8]राजराजो भवेद्बुधः ।
इत्येषा [9]कथिता वीर जया नामेति सप्तमी ॥
कृता श्रुता स्मृता या तु [10]हंसलोकप्रदायिनी ।

[11]इति जया सप्तमी ॥

## [विजया सप्तमी]

[12]शुक्लपक्षस्य सप्तम्यां[13] सूर्यवारो भवेद्यदि ।

1 सर्वव्याधिविनाशन—हे
2 लोकनयन—भवि. पु.
3 देवदेवेश—भवि. पु.
4 सप्तमीव्रतम्—हे.
5 पुरुषः प्राप्नुयाद्यशः—हे, भवि. पु.
6 नरशार्दूल—हे.
7 सूर्यलोकं—भवि. पु.
8 राजा भवति धार्मिकः—हे.
9 The portion from No. 9 to No. 13 is not found in ना MSS.
10 हेलि for हंस—भवि. पु.
11 इति भविष्यत्पुराणोक्तं जयासप्तमीव्रतम्—हे.
12 हे. व्र. I., ६६३–६६४.

सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
स्नानं दानं जपो होम उपवासस्तथैव च ।
सर्वं विजयसप्तम्यां महापातकनाशनम् ॥
पञ्चम्यामेकभक्तं स्यात् षष्ठ्यां नक्तं प्रचक्षते ।
उपवासश्च सप्तम्यामष्टम्यां पारणं भवेत् ॥
उपवासपरः षष्ठ्यामश्वस्थं[1] पूजयेद्रविम् ।

[2]'उपवासपरो' विजयसप्तम्यामुपवासं करिष्यन् ॥

गन्धपुष्पोपहारैश्च भक्त्या श्रद्धासमन्वितः ॥
प्रकल्प्य [3]भूमौ पूजां च देवस्य पुरतः स्वपेत् ।
जपमानस्तु गायत्रीं सौरसूक्तमथापि वा ॥
[4]त्र्यक्षरं वा [5]महाश्वेतां षडक्षरमथापि वा ।
विबुद्धस्त्वथ सप्तम्यां कृत्वा स्नानं गणाधिप ॥
ग्रहेशं पूजयित्वा तु होमं कृत्वा विधानतः ।
ब्राह्मणान् [6]भोजयेद्भक्त्या शक्त्या च गणनायक ॥
शाल्योदनमपूपांश्च खण्डवेष्टान् स्वशक्तितः ।
[7]सघृतं पायसं दद्यात् तथा विप्रेषु शक्तितः ॥
दत्वा तु दक्षिणां भक्त्या ततो विप्रान् विसर्जयेत् ।
इत्येषा कथिता देव पुण्या विजयसप्तमी ॥
यामुपोष्य नरो गच्छेत् पदं वैरोचनं परम् ।

1 अब्जस्थं for अश्वस्थं—हे.
2 Comment reproduced by Hemādri.
3 पूजां भूमौ च—उ, हे.
4 अक्षरं—ना.
5 महाश्वेतां—उ ; महाश्वेतं—हे.
6 भोजयेत्पश्चाद्भक्त्या—हे
7 Line omitted by Hemādri.

करवीराणि रक्तानि कुङ्कुमं च विलेपनम् ॥
विजयं धूपमस्यां तु भानोस्तुष्टिकराणि वै ।
एषा पुण्या पापहरा महापातकनाशिनी॥
अत्र दत्तं हुतं वापि [1]क्षीयते न गणाधिप ।

[2]इति विजया सप्तमी ॥

## [जयन्ती सप्तमी]

ब्रह्मोवाच—

[3]माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचन ।
जयन्ती नाम सा प्रोक्ता पुण्या पापहरा [4]शुभा ॥
उपोष्या[5] येन विधिना शृणु तं पार्वतीप्रिय ।
पारणानि तु चत्वारि कथितानि च पण्डितैः ॥
[6]पञ्चम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्तितम् ।
उपवासस्तु सप्तम्यामष्टम्यां पारणं भवेत् ॥
माघे च फाल्गुने मासि तथा चैत्रे च सुव्रत ।
[7]बकपुष्पाणि [8]धान्यानि कुङ्कुमं च विलेपनम् ॥
नैवेद्यं मोदकांश्चात्र [9]धूप आज्यमुदाहृतः ।
प्राशनं पञ्चगव्यं तु पवित्रीकरणं परम् ॥

1 अक्षयं च गणाधिप—हे.
2 इति भविष्यत्पुराणोक्तं विजयासप्तमीव्रतम्—हे.
3 हे. व्र. I., ६६४–६६७; भवि. पु., ब्राह्मपर्व, अ. ९७, श्लो. १–२८.
4 तथा for शुभा—उ, हे.
5 उपोष्या—उ; उपोष्य—ना, हे; सोपोष्या—भवि. पु.
6 सप्तम्याम्—ना.
7 अर्कपुष्पाणि—हे.
8 धन्यानि—हे; रम्याणि—भवि. पु.
9 धूपमाद्यमुदाहृतम्—ना, उ, हे.

मोदकैर्भोजयेद्विप्रान् यथाशक्त्या गणाधिप ।
शाल्योदनं च भूतेश दद्याद्भक्त्या द्विजेषु वै ॥
इत्थं संपूजयेद्यस्तु भास्करं लोकपूजितम् ।
सर्वेषु पारणेष्वेवं सोऽश्वमेधफलं लभेत् ॥
द्वितीये पारणे पूज्य राजसूयफलं लभेत् ।
[1]वैशाखे त्वथ ज्येष्ठे तु आषाढे मासि सुव्रत ॥
पूजार्थमत्र[2] भानोर्वै शतपत्राणि सुव्रत ।
श्वेतं च चन्दनं भीम धूपो गुग्गुलुरुच्यते ॥
नैवेद्यं गुडपूपाश्च प्राशनं गोमयस्य च ।[3]
[4]श्रावणे मासि देवेश तथा भाद्रपदे विभोः ॥
[5]आश्विने चापि मासे तु रक्तचन्दनमादिशेत् ।
मालतीकुसुमानीह धूपो विजय उच्यते ॥
नैवेद्यं [6]घृतपूर्णं तु [7]भोजनं च द्विजातिषु ।
कुशोदकप्राशनं तु कायशुद्धिकरं परम् ।
तृतीयमपि चाख्यातं पारणं पापनाशनम् ॥
राजसूयाश्वमेधाभ्यां फलदं भास्करप्रियम् ।
चतुर्थमप्यहं वक्ष्ये पारणं श्रेयसे नृप ॥

1 आषाढेष्वथ ज्येष्ठेषु—ना; वैशाखाषाढज्येष्ठेषु श्रावणे मासि—भवि. पु.
2 पूजार्थमन्त्रे—हे; पूजार्थमथ—भवि. पु.
3 Hemādri and भवि. पु., add the following three lines after this:
भोजनं चापि विप्राणां गुडपूपाश्च कीर्तिताः ।
द्वितीयमिदमाख्यातं पारणं पापनाशनम्* ॥
तृतीयं शृणु देवेश पूजार्थं भास्करस्य तु ।
4 मासि भाद्रपदे वीर तथा चाश्वयुजे विभो—भवि. पु.
5 कार्तिके चापि मासे तु—भवि. पु.
6 घृतपूपाश्च—हे; घृतपूपास्तु—भवि. पु.
7 भोजने—उ, हे.

* भवि. पु. adds a line after this: राजसूयाश्वमेधाभ्यां फलदं भास्करप्रियम् ।

मासि वै कार्तिके वीर मार्गशीर्षे तथा शिव ।
[1]पुष्ये च देवशार्दूल शृणु पुष्पाण्यशेषतः ॥[2]
करवीराणि रक्तानि तथा रक्तं च चन्दनम् ।
अमृताख्यस्तथा धूपो नैवेद्यं पायसं परम् ॥
अर्जुनीयं तथा वज्रं[3] प्राशनं परमं मतम् ।

'अमृतधूपो' भविष्यत्पुराण एवोक्तः । तद्यथा—

अगरुं चन्दनं मुस्ता सिल्हकं [4]वृषणं तथा ॥
समभागं तु कर्तव्यं [5]पञ्चामृतसमुद्भवम् ।

'अर्जुनीयं' गव्यम् । 'वज्रं' घृतम् ॥

नामानि [6]कीर्तितान्यत्र भास्करस्य महात्मनः ॥
चित्रभानुस्तथा भानुरादित्यो भास्करस्तथा ।
प्रीयतामिति सर्वेषु [7]पारणेष्वेवमादिषु ॥
अनेन विधिना यस्तु कुर्यात् पूजां विभावसोः ।
अस्यां तिथौ महादेव स याति परमं पदम् ॥
कृत्वैवं सप्तमीं भीम सर्वान् कामानवाप्नुयात् ।
पुत्रार्थी लभते पुत्रं धनार्थी लभते धनम् ॥
सरोगो मुच्यते रोगाच्छुभं प्राप्नोति पुष्कलम् ।
पूर्णे संवत्सरे भीम कार्या पूजा दिवाकरे ॥

1 पुण्ये च नरशार्दूल—ना ; तदद्य देवशार्दूल पारणं श्रेयसे शृणु—भवि. पु.
2 भवि. पु., adds the following two lines after this :
मासि मार्गशिरे वीर पौषे मासि तथा शिव ।
माघे च देवशार्दूल शृणु पुण्यान्यशेषतः ॥
3 वक्रं—उ ; आर्जनीयं तथा तक्रं—भवि. पु.
4 त्र्यूषणं—भवि. पु.
5 इदं चामृतमुच्यते—भवि. पु.
6 कथितान्यत्र—उ, हे, भवि. पु.
7 पारणेष्वेवमादिशेत्—हे ; पारणे विधिमादिशेत्—भवि. पु.

गन्धपुष्पोपहारैश्च ब्राह्मणानां च तर्पणैः ।
नानाविधैः [1]प्रेक्षणकैः पूजया वाचकस्य च ॥
इत्थं संपूज्य देवेशं [2]ब्राह्मणांश्च प्रपूज्य च ।
वाचकं च द्विजं पूज्य इदं वाक्यमुदीरयेत् ॥
धर्मकार्येषु मे देव [3]अर्थकार्येषु नित्यशः ।
कामकार्येषु सर्वेषु जयो भवतु सर्वदा ॥
तदा विसर्जयेद्विप्रान् वाचकं च द्विजोत्तमम् ।
इत्थं [4]कुर्यादिमां यश्च स जयं प्राप्नुयात् सदा ॥
सर्वपापविशुद्धात्मा सूर्यलोकं च गच्छति ।
विमानवरमारूढः [5]कविजोद्भवमुत्तमम् ॥
तेजसा रविसङ्काशः प्रभया पतगोपमः ।

[6]'कविजं' कविः अग्निः, तज्जं सुवर्णम्[7] । 'पतगः' सूर्यः ॥

[8]इति जयन्ती सप्तमी ॥

## [अपराजिता सप्तमी]

[9]ब्रह्मोवाच—

मासि भाद्रपदे शुक्ला सप्तमी या गणाधिप ।
अपराजितेति विख्याता महापातकनाशिनी ॥

1 प्रोक्षणकैः—उ, हे.
2 ब्राह्मणं च प्रपूजयेत्—हे ; ब्राह्मणांश्चाभिपूज्य च—भवि. पु.
3 अन्यकार्येषु—ना.
4 कुर्यादिदं पश्चात्—हे ; कुर्यादिदं यस्तु—भवि. पु.
5 करिजोद्भवमुत्तमम्—उ ; कञ्जजोद्भवमुत्तमम्—भवि. पु.
6 Comment reproduced by Hemādri.
7 'करिजं' करिरग्निस्तज्जं सुवर्णम्—उ.
8 इति भविष्यत्पुराणोक्तं जयन्तीव्रतम्—हे.
9 हे. व्र. I., ६६७–६६९ ; भवि. पु., ब्राह्मपर्व, अ. ९८, श्लो. १–१९.

चतुर्थ्यामेकभक्तं तु पञ्चम्यां नक्तमादिशेत् ।
उपवासस्तथा षष्ठ्यां सप्तम्यां पारणं [1]स्मृतम् ॥
पारणान्यत्र चत्वारि कथितानि मनीषिभिः ।
पुष्पाणि करवीराणि तथा रक्तं च चन्दनम् ॥
[2]धूपक्रिया गुग्गुलुना नैवेद्यं गुडपूपकाः ।
नभस्यादिषु मासेषु विधिरेषः प्रकीर्तितः ॥
[3]श्वेतानि भीम पुष्पाणि तथा श्वेतं च चन्दनम् ।
धूपमाज्यमिहाख्यातं नैवेद्यं पायसं रवेः ॥
मार्गशीर्षादिमासेषु विधिरेषः प्रकीर्तितः ।
[4]ततोऽगस्त्यस्य पुष्पाणि कुङ्कुमं च विलेपनम् ॥
धूपार्थं सिह्लकं प्रोक्तमथवा बिल्वसंभवम् ।
[5]शाल्योदनं च नैवेद्यं रसालाः फाल्गुनादिषु ॥
रक्तोत्पलानि भूतेश [6]मुस्तकं चन्दनं तथा ।
अनन्तधूपमुद्दिष्टं नैवेद्यं गुडपूपकाः ॥
श्रीखण्डं ग्रन्थिसंयुक्तमगरुं सिह्लकं तथा ।
मुस्तां [7]तथेन्दुं भूतेश शर्करां च दहेत्त्यहम् ॥
इत्येषोऽनन्तधूपश्च कथितो देवसत्तम ।

[8]'ग्रन्थी' ग्रन्थिपर्णम् । 'इन्दुः' कर्पूरम् ॥

1 भवेत्—हे.
2 The following three lines are omitted by ना.
3 The following three lines are omitted by उ and हे.
4 तथा शुभकपुष्पाणि—हे.
5 ना omits the following three lines.
6 अगरुः—हे ; सागुरुं—भवि. पु.
7 तथेन्द्रं—भवि. पु.
8 Comment reproduced by Hemādri.

ज्येष्ठादिषु तथा ह्येष विधिरुक्तो मनीषिभिः ॥
शृणु नामानि देवस्य प्राशनानि च सुव्रत ।
[1]भगोंऽशुमानर्यमा च सविता त्रिपुरान्तकः ॥
पारणेषु च सर्वेषु प्रीयतामिति कीर्तयेत् ।
गोमूत्रं पञ्चगव्यं च घृतमुष्णं [2]च वै पयः ॥
यस्त्विमां सप्तमीं कुर्यादनेन विधिना नृप ।
अपराजितो भवेत्सोऽपि सदा शत्रुभिराहवे ॥
[3]हत्वा शत्रून् जयेच्चापि त्रिवर्गं नात्र संशयः ।
त्रिवर्गमथ संप्राप्य भानोः पुरमवाप्नुयात् ॥
[4]पूज्य पूर्णांशुमेकं च पारयेच्छक्तितः खगम् ।
गन्धपुष्पोपहारैश्च पुराणश्रवणेन च ॥
अन्नदानेन[5] च विभोर्ब्राह्मणानां च तर्पणैः ।
वाचकं पूजयित्वा तु भास्करस्य प्रियं सदा ॥
[6]भास्कराय [7]द्विपं दद्यादलङ्कारविभूषितम् ।
यः पूजां कुरुते वीर सप्तम्यां च नरः सदा[8] ॥
स पराजित्य शत्रूंस्तु[9] याति हंससलोकताम् ।
शु[illegible]नेन आपगेयपताकिना ॥
आपगाधिपसङ्काशो आपगानुचरो भवेत् ।

1 भगो—हे ; सुधांशुरर्यमा चैव—भवि. पु.

2 पयो दधि—भवि. पु.

3 हन्याच्छत्रून्—हे ; जित्वा शत्रुं लभेतापि—भवि. पु.

4 Line omitted in the text of हे. व्र. I. ६६८, but noted in the footnote; भवि. पु., reads : ततः पूर्णेषु मासेषु पूजयेच्छक्तितः खगम् ।

5 अश्वदानेन—हे, भवि. पु.

6 The following two lines are omitted by Hemādri.

7 ध्वजान्—भवि. पु.

8 य इत्थं कुरुते वीर सप्तमीं यत्नतः सदा—भवि. पु.

9 स परान् जित्य शक्तस्तु—ना.

[1]'शुक्रजम्' सुवर्णम्। 'आपगेयम्' अपि सुवर्णमेव। 'आपगाधिपो' वरुणः॥

[2]इत्यपराजिता सप्तमी॥

## [महाजया सप्तमी]

[3]ब्रह्मोवाच—

शुक्लपक्षे तु सप्तम्यां यदा संक्रमते रविः।
महाजया तदा स्याद्वै सप्तमी भास्करप्रिया॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनम्।
सर्वं कोटिगुणं प्रोक्तं [4]तपनेन महौजसा॥
यस्तस्यां मानवो भक्त्या घृतेन स्नापयेद्रविम्।
सोऽश्वमेधफलं प्राप्य [5]ततः सूर्यपदं व्रजेत्॥
पयसा स्नापयेद्यस्तु भास्करं भक्तिमान्नरः।
विमुक्तः सर्वपापेभ्यो याति सूर्यसलोकताम्॥[6]
स्थित्वा तत्र चिरं कालं राजा भवति [7]कञ्जजः।
महाजयैषा कथिता सप्तमी त्रिपुरान्तक॥
यामुपोष्य नरो भक्त्या [8]अचलां स्वर्गतिं लभेत्।

1 शुक्रजं—हे; शुक्लाश्व—भवि. पु.

2 इति भविष्यत्पुराणोक्तमपराजितासप्तमीव्रतम्—हे.

3 हे. व्र. I., ६६९; भवि. पु., ब्राह्मपर्व, अ. ९९, श्लो. १–७.

4 भास्करस्य वचो यथा—भवि. पु.

5 स्वर्गलोकमवाप्नुयात्—भवि. पु.

6 भवि. पु., adds two lines after this:

कार्पूरेण विमानेन किङ्किणीजालमालिना।
तेजसा हरिसंकाशः कान्त्या सूर्यसमस्तथा॥

7 सञ्जय—हे; चाजसा—भवि. पु.

8 भवते सूर्यलोकगः—भवि. पु.

ततो याति परं ब्रह्म यत्र गत्वा न शोचति ॥

[1]इति महाजया सप्तमी ॥

## [नन्दा सप्तमी]

[2]ब्रह्मोवाच—

या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी ।
नन्दा सा कथिता वीर सर्वानन्दकरी शुभा ॥
पञ्चम्यामेकभक्तं तु षष्ठ्यां नक्तं प्रकीर्तितम् ।
सप्तम्यामुपवासं तु कीर्तयन्ति मनीषिणः ॥
[3]पारणान्यत्र वै त्रीणि [4]उशन्तीह मनीषिणः ।
मालतीकुसुमानीह सुगन्धं चन्दनं तथा ॥
कर्पूरागरुसंमिश्रं धूपं चात्र विनिर्दिशेत् ।
दध्योदनं सखण्डं तु नैवेद्यं भास्करप्रियम् ॥
तदेव दद्याद्ब्राह्मणेभ्योऽश्नीयाच्चापि स्वयं ततः ।
पूजार्थं भास्करस्यैष प्रथमे पारणे विधिः ॥
पलाशपुष्पाणि विभो [5]यक्षचन्दनमेव च ।
[6]कर्पूरं चन्दनं कुष्ठमुशीरं सिल्हकं तथा ॥
सग्रन्थिवृषणं भीम कुङ्कुमं गृञ्जनं तथा ।
हरीतकी तथा भीम एष [7]यक्षाङ्क उच्यते ॥

1 इति भविष्यत्पुराणोक्तं महाजयासप्तमीव्रतम्—हे.
2 हे. व्र. I., ६६९–६७१; भवि. पु., ब्राह्मपर्व, अ. १००, श्लो. १–१६.
3 Line omitted in text of हे. व्र. I., ६७०, but given in the footnote.
4 शंसन्तीह—भवि. पु.
5 धूपो यः शक्य एव च—भवि. पु.
6 कर्पूरं सिल्हकं कुष्ठमुशीरं चन्दनं तथा—हे.
7 यक्षक—ना; पक्षक—भवि. पु.

धूपः प्रबोध आदिष्टो नैवेद्यं [1]खण्डखाद्यकम् ।
कृष्णागरुं सिल्हकं च [2]वालकं वृषणं तथा ॥
चन्दनं तगरं मुस्ता प्रबोधं शर्करान्वितम् ।
भोजयेद्ब्राह्मणांश्चापि खण्डखाद्यैर्गणाधिप ॥
निम्बपत्रं[3] तु संप्राप्य ततो भुञ्जीत वाग्यतः ।
पारणस्य द्वितीयस्य विधिरेष प्रकीर्तितः ॥
नीलोत्पलानि [4]शुद्धानि धूपं गुग्गुलुमाहरेत् ।
[5]नैवेद्यं पायसं चैव प्रीतये भास्करस्य च ॥
विलेपनं [6]चन्दनं च [7]घृतं प्राश्य विशुद्धये ।
तृतीयस्यापि ते वीर कथितो विधिरुत्तमः ॥
शृणु नामानि देवस्य पावनानि नृणां सदा ।
विष्णुर्भगस्तथा धाता प्रीयतामुच्चरेद्वचः[8] ॥
अनेन विधिना यस्तु [9]कुर्यान्नन्दां नरः सदा ।
स कामानिह संप्राप्य [10][विधातारमवाप्नुयात् ॥
पुत्रकामो लभेत् पुत्रं धनकामो लभेद्धनम् ।
विद्यार्थी च यशो विद्यां यशोऽर्थी च यशस्तथा ॥

1 खण्डखादनात्—ना ; खण्डमण्डकाः—भवि. पु.

2 Hemâdri reads 'चाणक्यं' for वालकं and comments 'चाणक्यं' मूलकभेदः ।

3 बिल्वपत्रं—हे.

4 पुष्पाणि—हे ; शुभ्राणि—भवि. पु.

5 Hemâdri reads 'नैवेद्यं च पांशुमुखाः' and comments: 'पांशुमुखाः' शर्कराचूर्णपूर्णवदना भक्ष्याः ।

6 चन्दनस्य—हे.

7 मुस्ताप्राशनमुच्यते, and विश्वप्राशनमुच्यते—हे ; घृतं प्राश्य विमुच्यते—उ ; प्राशने विधिरुच्यते—भवि. पु.

8 बुधः for वचः—हे ; प्रीयतामुद्गिरेच्च वै—भवि. पु.

9 कुर्यात्प्रयतमानसः—भवि. पु.

10 ना and भवि. पु., omit the portion in brackets.

सर्वकामांस्तथावाप्य] [1]नन्दते शाश्वतीः समाः।
ततः सूर्यसदो गत्वा नन्दते नन्दवर्धने॥
इत्येषा नन्दजननी [2]नन्दाऽऽख्याता मया द्विज।
यामुपोष्य [3]तथा श्रुत्वा नन्दतेऽर्कमवाप्य वै॥

[4]इति नन्दा सप्तमी॥

## [भद्रा सप्तमी]

[5]ब्रह्मोवाच—

शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत्।
यदा [6]प्रमथनाथेश तदा सा भद्रतां व्रजेत्॥

[7]'सवितृनक्षत्रं' हस्तः॥

तथा—

[8]चतुर्थ्यामेकभक्तं तु पञ्चम्यां नक्तमादिशेत्।
षष्ठ्यामयाचितं प्रोक्तमुपवासस्ततः परम्॥
स्नपनं तत्र देवेश[9] घृतेन कथितं बुधैः।
क्षीरेण च तथा वीर पुनरिक्षुरसेन च॥
स्नपयित्वा तु देवेशं चन्दनेन विलेपयेत्।

1 मोदते—हे.
2 तवाख्याता मया शिव—भवि. पु.
3 ततो भुक्त्वा नन्दते हंसमाप्य वै—भवि. पु.
4 इति भविष्योत्तरोक्तं नन्दासप्तमीव्रतम्—हे.
5 हे. व्र. I., ६७१–६७४; भवि. पु., ब्राह्मपर्व, अ. १०१, श्लो. १–२५.
6 प्राप्यमशेषेण—हे; प्रथमनाथेश—ना; प्रथमता चैव—भवि. पु.
7 Comment reproduced by Hemādri.
8 The printed भवि. पु., omits the following two lines.
9 तर्पणं देवदेवेशो—हे; स्नपनं तत्र देवस्य—भवि. पु.

दद्याच्च गुग्गुलं [1]तस्य दद्याद्धोममथाग्रतः ॥
गोधूमचूर्णनिष्पन्नं विमलं शशिसन्निभम् ।
सुवर्णं सगुडं चैव रक्तपुष्पोपशोभितम् ॥
[2]यदस्य शृङ्गमीशानं तत्र वै मौक्तिकं न्यसेत् ।
[3]यदग्रस्तत्र माणिक्यं [4]न्यसेद्वा लोहितं मणिम् ॥
[5]नैर्ऋते मरकतं दद्याद्वायव्ये पद्मरागिणम्[6] ।
[7]सरोजं वाप्युत्तरतः स्वशक्त्या विन्यसेद्बुधः ॥[8]
पाषण्डिनो विकर्मस्थान् [9]बैडालव्रतिकान्त्यजान् ।
सप्तम्यां नालभेत् प्राज्ञो[10] दिवा स्वप्नं च वर्जयेत् ॥
अनेन विधिना यस्तु कुर्याद्वै [11]तत्र सप्तमीम् ।
[12]तस्य भद्राः सर्व एव गच्छन्ति [13]क्रतवः सदा ॥
[14]भद्रं ददाति यस्तस्यां भद्रस्तस्य सुतो भवेत्[15] ।

1 तस्मै—हे; तस्य दद्याद्भद्रं तथाग्रतः—भवि. पु.
2 यदत्र—हे; पदस्य—ना.
3 तदग्रे तत्र—हे; यदाग्नेयं तत्र माणिक्यं—भवि. पु.
4 न्यसेद्वासोहितं—ना; न्यसेद्वा रोहितं—उ.
5 नैर्ऋत्ये मकरं दद्याद्—भवि. पु.
6 यज्ञरागकम्—हे.
7 गाङ्गेयमन्ततस्तस्य—भवि. पु.
8 भवि. पु., adds the following two lines after this :

चतुर्थ्यामेकभक्तं तु पञ्चम्यां नक्तमादिशेत् ।
षष्ठ्यामयाचितं प्रोक्त उपवासो ह्यतः परः ॥

9 बैडालव्रतिकान् त्यजेत्—उ, हे.
10 भोजयेत् राज्ञो—हे; भोजयेत्प्राज्ञो—ना; पालयेत्प्राज्ञो—भवि. पु.
11 भद्रसप्तमीम्—हे, भवि. पु.
12 Hemādri reads this line after the next line.
13 ज्ञातयः—हे; ऋभवः—भवि. पु.
14 भद्रा ददाति सप्तम्यां भद्रं तस्य व्रतं भवेत्—हे.
15 भवि. पु., adds a line after this :

भद्रमासाद्य भूतेश सदा भद्रेण तिष्ठति ।

[1]डिण्डिरुवाच—

कोऽयं भद्र इति प्रोक्तः कथं [2]तस्माद्विभूषणम् ॥
[3]तं दत्वा किं फलं [4]चास्य विधिना केन दीयते ।

[5]ब्रह्मोवाच—

व्योम [6]भद्रमिति प्रोक्तं देवचिह्नं मनोरमम् ॥[7]
शालिपिष्टमयं कार्यं चतुष्कोणं मनोरमम् ।
गव्येन [8]सर्पिषा युक्तं खण्डशर्करयान्वितम् ॥
[9]चातुर्जातकचूर्णेन द्राक्षाभिश्च विशेषतः ।
नारिकेलफलैश्चैव शुभगन्धैर्गणाधिप ॥
मध्येन्द्रनीलं भद्रस्य न्यसेत्प्राज्ञः स्वशक्तितः ।
[10]पुष्परागं मरकतं पद्मरागं तथैव च ॥
अनौपमं च माणिक्यं क्रमात्कोणेषु विन्यसेत् ।
[11]प्रस्थमात्रं भवेद्भद्रं प्रस्थार्धं स्याच्च वा विभो ॥
अनेन विधिना कृत्वा देवस्य पुरतो न्यसेत् ।

1 Hemādri omits 'डिण्डिरुवाच' and the next line; भवि. पु. reads दिण्डिरुवाच ।

2 तस्माद्विभूषितम्—उ; कार्यं प्रभूषणम्—भवि. पु.

3 तदशक्तः फलं तस्यां—हे.

4 च स्यात्—उ; विद्यात्—भवि. पु.

5 Omitted by Hemādri.

6 चन्द्रमिति—ना.

7 भवि. पु. adds a line after this: यद्दत्वेह नरः सूर्यं मुच्यते सर्वकिल्बिषैः ।

8 सर्षपायुक्तं—ना.

9 Hemādri comments: 'चतुर्जातकचूर्णेन' इति, एलालवङ्गपत्रकनागकेसरचूर्णेनेत्यर्थः ।

10 ना omits the following eight lines.

11 The following two lines are omitted by भवि. पु.

वाचकायाथवा दद्यादथवा भोजके स्वयम् ॥
अनेन विधिना कृत्वा भद्रं यश्च प्रयच्छति ।
स हि भद्राणि संप्राप्य गच्छेद्गोपतिमन्दिरम् ॥
ब्रह्मलोकं ततो गच्छेद्यानारूढो न संशयः ।
तेजसा रविसंकाशः कान्त्याऽऽत्रेयसमस्तथा[1] ॥
प्रभया गोपतेस्तुल्यस्तेजसा शंकरस्य च ।
[illegible] पुनर्भूमौ गोपतिः स्यान्न संशयः ॥
[2]प्रसादाद्गोपतेर्वासं सर्वक्ष्माधिपपूजितम् ।
इत्येषा कथिता वीर भद्रा नामेति सप्तमी ॥
यामुपोष्य नरो वीर ब्रह्मलोकमवाप्नुयात् ।
शृण्वन्ति ये पठन्तीह कुर्वन्ति च गणाधिप ॥
ते सर्वे [3]भद्रमासाद्य यान्ति [4]तद्ब्रह्म शाश्वतम् ।

[5]इति भद्रसप्तमीव्रतम् ॥

## [त्रिगतिसप्तमी]

ब्रह्मोवाच[6]—

सप्तम्यां शुक्लपक्षे तु [7]फाल्गुनस्येह यो नरः ।
[8]जपन् हेलीति देवस्य नाम भक्त्या पुनः पुनः ॥

1 Hemādri comments : 'आत्रेयः' चन्द्रः ।

2 प्रसादाद्गोपतेर्वीर भद्रवानभिजायते—हे ; प्रासादाद्गोपतेर्वीर सर्वक्षाधिपपूजितः—भवि. पु.

3 चन्द्रमासाद्य—हे.

4 तद्ब्रह्मणा स्वयम्—ना.

5 इति भविष्यपुराणोक्तं भद्रासप्तमीव्रतम्—हे.

6 हे. व्र. I., ७३६–७३८ ; भवि. पु., ब्राह्मपर्व, अ. १०४, श्लो. २–२४.

7 फाल्गुन्यां यो यजेन्नरः—हे.

8 जपेद्धेनीति—उ ; जपेद्धलीति—जा.

[1]देवार्चने चाष्टशतं कृत्वैवं तु जपेच्छुचिः ।
[2]स्नातः प्रस्थानकाले चाप्युत्थाने स्खलिते क्षते ॥
पाषण्डान्पतितांश्चैव तथैवान्त्यावसायिनः ।
[3]नालपेत तथा भानुमर्चयेच्छ्रद्धयान्वितः ॥
इदं चोच्चारयेद्भानुं [4]मनस्याधाय तत्परः ।
हंस हंस [5]नमस्तुभ्यमगतीनां गतिर्भव ॥
संसारार्ण[redacted] त्राता भव दिवाकर ।
एवं प्रसाद्योपवासं कृत्वा नियतमानसः ॥
पूर्वाह्ण एव [6]चान्येद्युः [7]सकृत्प्राश्यं च गोमयम् ।[8]
[9]स्नात्वाऽर्चयित्वा हंसेति पुनर्नाम प्रकीर्तयेत् ॥
[10]वारिधारात्रयं चैव [11]निक्षिपेद्देवपादयोः ।
चैत्रवैशाखयोश्चैवं तद्वज्ज्येष्ठे च पूजयेत् ॥
[12]मर्त्यलोके गतिं श्रेष्ठां [13]कृष्ण प्राप्नोति वै नरः ।
उत्क्रान्तश्च व्रजेत्कृष्ण[14] दिव्यं [15]हंसालयं शुभम् ॥

1 देवार्चनं चाष्टशतं—हे.

2 स्नानप्रस्थान—उ.

3 नालापयेत्—हे.

4 मनसा ध्यानतत्परः—हे.

5 कृपालो त्वम्—हे.

6 चान्ये स्युः—ना.

7 सकृत्प्राश्यार्जुनीयकम्—उ, हे.

8 Hemādri comments: 'अर्जुनीयकं' सकृद्गोमयम् । Ms. उ omits अर्जुनीयकं in the comment and reads सकृत् सकृत् गोमयम् ।

9 स्नात्वा—हे.

10 वारिधारातपं—उ.

11 विक्षिपेद्—उ.

12 मृत्युलोके—ना.

13 श्रेष्ठो कृत्स्नं—ना; श्रेष्ठां कृत्वा—हे; श्रेष्ठां कृष्ण—उ.

14 व्रजेत्कृत्स्नं—उ, ना.

15 हंसमयं—हे.

[1]वृषध्वजप्रसादाद्धि संक्रन्दनसमो भवेत् ।
आषाढे श्रावणे चैव मासि भाद्रपदे [2]शुभे ॥
[3]तथैवाश्वयुजे चैवमनेन विधिना ततः ।
उपोष्य संपूज्य ततो[4] [5]मार्तण्डेति प्रकीर्तयेत् ॥
गोमूत्रप्राशनात् [6]पूतो गणाधिपपुरं व्रजेत् ।
आराधितस्य जगतामीश्वरस्याव्ययात्मनः[7] ॥
उत्क्रान्तिकाले स्मरणं भास्करस्य [8]यथाश्रुति ।
क्षीरस्य [9]प्राशनं यस्तु[10] विधिरेष मयोदितः ॥
कार्तिकादि यथान्यायं कुर्यान्मासचतुष्टयम् ।
तेनैव विधिना [11]कृष्ण भास्करस्य प्रकीर्तयेत् ॥
स याति भानुसालोक्यं [12]भास्करं स्मरति क्षये ।
प्रतिमासं द्विजातिभ्यो दद्याद्दानं यथेच्छया ॥
चतुर्मासे तु [13]संप्राप्ते कुर्यात् पुस्तकवाचनम् ।
कथां वा[14] भास्करस्येह [15]तद्गीतिकमथापि वा ॥

1 धर्मध्वज—हे.
2 तथा—उ, हे.
3 मासि चाश्वयुजे—हे.
4 तथा—हे, उ.
5 मार्तण्डेति च कीर्तयेत्—उ, हे.
6 सूर्यपुरं गत्वा महीयते—हे,
7 कृतात्मनः for अव्ययात्मनः—हे.
8 तथा श्रुते—उ, हे.
9 प्राशने—हे.
10 कृष्ण—उ, हे.
11 कृत्वा भास्करेति—हे.
12 भास्करानुरतिः क्षये—हे.
13 संपूर्णे—उ, हे.
14 कथादौ—ना ; कथाम्बा—हे.
15 तद्गीतकमथापि—उ ; तत्कीर्तनमथापि—हे.

धर्मश्रवणमिष्टं तु[1] सदा धर्मध्वजस्य तु ।

'[2]धर्मध्वजः' सूर्यः ॥

वाचकं पूजयित्वा तु तस्मात् कार्यं च श्रद्धया ।
श्राद्धमन्नेन पक्वेन[3] [4]वाचकेन द्विजोत्तमाः ॥
दिव्येन च [5]यथायुक्तमभीष्टं भास्करस्य हि ।
एवमन्ते [6]गतिं श्रेष्ठां देवनामानुकीर्तनात् ॥
[7]प्राप्नुयात् त्रिविधां कृष्ण [8]त्रिलोकाख्यां नरः सदा ।
कथितं पारणं यत्ते [9]प्रथमं [10]गोधराधनम् ॥
[11]आधिपत्यं तथा भोगांस्तेन प्राप्नोति मानुषः ।
द्वितीयेन तथा भोगान् गोत्रारेः प्राप्नुयान्नरः ॥
सूर्यलोकं तृतीयेन पारणेन तथाप्नुयात् ।
एवमतत् समाख्यातं [12]गतिप्रापकमुत्तमम् ॥
विधानं देवशार्दूल यदुक्तं सप्तमीव्रते ।
यस्त्वेतां सप्तमीं कुर्यात् त्रिगतिं[13] श्रद्धयान्वितः ॥
तथा भक्त्या च वै नारी प्राप्नोति त्रिविधां गतिम् ।

1 इच्छन्तु for इष्टं तु—ना.
2 Comment reproduced by Hemādri.
3 श्राद्धमन्त्येन पङ्क्तेन—उ ; श्राद्धमन्नेन पाकेन—ना.
4 होमेन च द्विजेन तु—हे.
5 तथायुक्तं—उ ; तथा शुक्र—हे.
6 गतिश्रेष्ठ—हे.
7 प्राप्नोति त्रिविधान्—हे.
8 त्रिलोकाक्षं—ना ; त्रिलोकाख्यं—उ ; त्रिलोकान् मानवः—हे.
9 तथेमं—हे.
10 गोधराधर—उ, हे ; गोचरध्वज—ना.
11 The following two lines are omitted by उ.
12 प्रतिपापकम्—उ.
13 द्विगतिं—उ ; वियूर्तिं—ना.

एषा पुण्या पापहरा त्रिगतिः समुदाहृता ॥
आराधनाय [1]शस्तैषा सदा [2]भानोर्बलावहा[3] ।
तथा कर्मसु [4]पुण्या च त्रिवर्गज्येष्ठदा सदा ॥
[5]'गोत्रारिः' इन्द्रः । 'त्रिवर्गज्येष्ठदा' धर्मदा ॥

[6]इति त्रिगतिसप्तमीव्रतम् ॥

## [पापनाशिनी सप्तमी]

[7]ब्रह्मोवाच—

शुक्लपक्षस्य सप्तम्यां [8]यदा ऋक्षं करो भवेत् ।
तदास्यासौ महापुण्या[9] सप्तमी पापनाशिनी ॥
तस्यां संपूज्य देवेशं चित्रभानुं जगद्गुरुम् ।
सप्तजन्मकृतात् पापान्मुच्यते नात्र संशयः ॥
[10]यश्चोपवासं कुरुते तस्यां नियतमानसः ।
सर्वपापविनिर्मुक्तः सूर्यलोके महीयते ॥
दानं [11]यद्दीयते किंचित् समुद्दिश्य दिवाकरम् ।
होमो वा क्रियते तत्र तत्सर्वं चाक्षयं भवेत् ॥

1 शान्तैषा—ना; शास्त्रेण—हे.

2 भानोर्गतिप्रदा—हे.

3 Hemādri adds a line after this :
पठतां शृण्वतां चैव सर्वपापभयापहा ॥

4 पुण्येषु—हे; उ corrupt.

5 Comment reproduced by Hemādri.

6 इति भविष्यत्पुराणोक्तं त्रिगतिसप्तमीव्रतम्—हे.

7 हे. व्र. I., ७४०–७४१; भवि. पु., ब्राह्मपर्व, अ. १०६, श्लो. ४–१४.

8 यदृक्षं तु करं—उ.

9 तदा पुण्यतमा प्रोक्ता—हे.

10 यथोपवासं—उ, ना.

11 च दीयते—उ.

एक ऋग्वेदपुरतो [1]जप्त्वा श्रद्धापरेण तु ।
ऋग्वेदस्य समस्तस्य यच्छते [2]तत्फलं [3]ध्रुवम् ॥
सामवेदफलं साम [4]यजुर्वेदफलं यजुः ।
अथर्वणोऽथर्वणस्य[5] निखिलं यच्छते फलम् ॥
[6]यद्यत्पापमशेषं वै नाशयत्यत्र भास्करः ।
करं च सप्तमी कृष्ण तेनोक्ता पापनाशिनी ॥
अस्यां समभ्यर्च्य रविं यान्ति सौमनसं पुरम् ।
विमानवरमारुह्य कर्बुरोद्भवमुत्तमम् ॥

[7]'सौमनसं पुरम्' देवलोकम्[8] । 'कर्बुरं' [9]सुवर्णम् ॥

तेजसा रविसङ्काशः [10]प्रभयाऽमरसन्निभः ।
कान्त्याऽऽत्रेयसमः कृष्ण [11]शौर्ये हरिसमः सदा ॥
मोदते तत्र सुचिरं [12]वृन्दारकगणैः सह ।
[13]पुनरेत्य [14]भुवं कृष्ण भवेद्बै क्ष्माधिपाधिपः ॥

[15]इति पापनाशिनी सप्तमी ॥

1 जप्या—उ, ना.
2 सफलं—उ.
3 लभेत्—उ ; भवेत्—ना.
4 यजुर्वेदे—ना, हे.
5 अथर्वणश्च—हे.
6 यं जप्त्वा परमं शेषं वै नाशयति—ना.
7 Comment reproduced by Hemādri.
8 देवदेवलोकम्—उ.
9 दुर्वर्णम्—हे.
10 प्रभया कविसन्निभः—हे.
11 सौर्येणेह समः—ना ; सौर्ये हरिसमः—उ.
12 वृन्दावनगणैः—ना.
13 Line omitted by Hemādri.
14 धनं—ना.
15 इति पापनाशसप्तमी—उ ; इति भविष्यत्पुराणोक्तं पापनाशिनीव्रतम्—हे.

## [मार्तण्डसप्तमी]

[1]ब्रह्मोवाच—

मार्तण्डसप्तमीं कृष्ण अथान्यां वच्मि तेऽनघ ।
पौषे मासि[2] सिते पक्षे सप्तम्यां समुपोषितः ॥
सम्यक्तं[3] पूज्य मार्तण्डं मार्तण्ड इति वै जपन् ।
पूजयेत् कुतपं भक्त्या श्रद्धया परयान्वितः ॥

'कुतपः' सूर्यः ॥[4]

पुष्पधूपोपहाराद्यै[5]रुपवासैः समाहितः ।
मार्तण्डेति जपन्नाम पुनस्तद्गतमानसः ॥
विप्राय दक्षिणां दद्याद्यथाशक्त्या खगध्वज ।
स्वपन् विबुध्य[6] स्खलितो मार्तण्डेति च कीर्तयेत् ॥
पाषण्डिभिर्विकर्मस्थैरालापं च विवर्जयेत् ।
गोमूत्रं गोमयं चापि दधि क्षीरमथापि वा ॥
गोदेहतः समुद्भूतं प्राश्नीयादात्मशुद्धये ।
द्वितीयेऽह्नि पुनः स्नातस्तथैवाभ्यर्च्य तं रविम्[7] ॥
तेनैव नाम्ना [8]संपूज्य दत्वा विप्राय दक्षिणाम् ।
ततो भुञ्जीत गोदेहसमद्भूतसमन्वितम् ॥

1 हे. व्र. I. ७५४–७५५ ; भवि. पु., ब्राह्मपर्व, अ. १०९, श्लो. १–१३.
2 पौषमासे—हे.
3 सम्यक् सम्पूज्य—उ, हे.
4 Comment reproduced by Hemādri.
5 आज्यैः for आद्यैः—ना.
6 विबुद्धः—हे.
7 स्नातस्तथैवाभ्यर्चनं रवेः—हे.
8 संभूय—हे.

[1]एवमेवाखिलान् मासानुपोष्य तु प्रयत्नतः[2] ।
दद्याद्गवाह्निकं[3] विद्वान् प्रतिमासं स्वशक्तितः ॥
[4]पारिते च पुनर्वर्षे यथाशक्त्या गवाह्निकम् ।
दत्वा परगवे भूयः शृणु यत्फलमश्नुते[5] ॥
सुवर्णशृङ्गा गाः पञ्च[6] षष्ठं च वृषभं नरः ।
प्रतिमासं द्विजातिभ्यो [7]यद्दत्वा फलमश्नुते ॥
तदाप्नोत्यखिलं सम्यग्व्रतमेतदुपोषितम्[8] ।
तं च लोकमवाप्नोति मार्तण्डो यत्र तिष्ठति ॥
शाण्डिलेयसमः कृष्ण तेजसा नात्र संशयः ।
'शाण्डिलेयसमः' अग्निसमः[9] ॥

[10]इति मार्तण्डसप्तमी ॥

## [अनन्तफलसप्तमी]

[11]ब्रह्मोवाच—

शुक्लपक्षे तु सप्तम्यां मासि भाद्रपदेऽच्युत ।
प्रणम्य शिरसाऽऽदित्यं[12] पूजयेत् सप्तवाहनम् ।

1 एवमेवाखिलान् नाम्ना समुपोष्य प्रयत्नतः—ना.
2 प्रयतः शुचिः—हे.
3 दद्यात्पानादिकं विप्रान्—ना.
4 याचिते च पुनर्वर्षे यथाशक्त्यापराह्निकम्—ना.
5 शृणुयात्फलमश्नुते—ना.
6 स्वर्णशृङ्गयः पञ्च गावः—हे; सुवर्णशृङ्गाः पञ्चाङ्गाः—ना.
7 दत्वा यत्फलमश्नुते—हे.
8 उपोषितः—हे.
9 Commentary reproduced by Hemādri.
10 इति भविष्यत्पुराणोक्तं मार्तण्डसप्तमीव्रतम्—हे.
11 हे. व्र. I. ७५१; भवि. पु., ब्राह्मपर्व, अ. ११०, श्लो. १–८.
12 शिरसा देवं—हे.

पुष्पधूपादिभिर्वीर कुतपानां च तर्पणैः ।

'[1]कुतपानाम्' ब्राह्मणानाम् ॥

पाषण्डादिभिरालापमकुर्वन्नियतात्मवान् ॥

विप्राय दक्षिणां दत्वा नक्तं भुञ्जीत वाग्यतः ।
तिष्ठन् व्रजन् [2]सुस्थितश्च क्षुतप्रस्खलितादिषु ॥
आदित्यनामस्मरणं कुर्वन्नुच्चारणं[3] तथा ।
अनेनैव विधानेन मासान् द्वादश वै क्रमात् ॥
उपोष्य पारणे पूर्णे समभ्यर्च्य जगद्गुरुम् ।
पुण्येन श्रवणेनेह [4]प्रीणयन् पुष्टिमश्नुते ॥
एवं[5] यः पुरुषः कुर्यादादित्याराधनं शुचिः ।
नारी वा स्वर्गमभ्येत्य [6]सोऽनन्तफलमश्नुते ॥

[7]इत्यनन्तफलसप्तमी ॥

## [अव्यङ्गसप्तमी]

[8]ब्रह्मोवाच—

[9]श्रावणे मासि [10]देवेशं सप्तम्यां [11]सप्तिवाहनम् ।

1 Comment reproduced by Hemādri.

2 प्रस्थितश्च—हे.

3 कुर्वन्नुद्धारणं—ना.

4 प्रणयेत्पुष्टिमाप्नुयात्—हे.

5 पूर्वं—ना.

6 सानन्त्यं फलम्—हे.

7 इत्यानन्दफलसप्तमी—उ; इति भविष्यत्पुराणोक्तमनन्तफलसप्तमीव्रतम्—हे.

8 हे. व्र. I. पृ. ७४१—७४३; भवि. पु. ब्राह्मपर्व, अ.१११, श्लो. १—८.

9 Lines 'श्रावणे मासि' and 'शुक्लपक्षे' etc. are transposed in Hemādri.

10 देवाग्र सप्तम्यां—उ; सप्तम्यां देवाग्रं—हे.

11 सप्तवाहनम्—ना.

शुक्लपक्षे समभ्यर्च्य पुष्पधूपादिभिः शुचिः ॥
प्राप्येह विपुलं देव धर्मानन्तरमक्षयम् ।
अमुत्र लोकमायाति दिव्यं खगपतेः शुभम् ॥

'[1]धर्मानन्तरं' अर्थम् । 'खगपतिः' अत्राऽऽदित्यः ॥

पाषण्डादिभिरालापमकुर्वन्नियतात्मवान् ।
विप्राय दक्षिणां दत्वा नक्तं भुञ्जीत वाग्यतः ॥
अव्यङ्गं देवदेवस्य [2]वर्षे वर्षे नियोजयेत् ।

[3]'अव्यङ्गः' एकवर्णशोभनकार्पाससूत्रनिर्मितः सर्पनिर्मोकाकृतिरन्तःसुषिरो द्वाविंशत्यधिकशताङ्गुलपरिमित उत्कृष्टो, विंशत्यधिकशताङ्गुलपरिमितो मध्यमो, अष्टोत्तरशताङ्गुलपरिमितो ह्रस्व इति बोद्धव्यः । [4]एतच्च भविष्यत्पुराण एव साम्बोपाख्याने विस्तरेणोक्तम् ॥

सप्तम्यामत्र [5]देवस्य शुभं गुह्यतरं तथा ।
ऋग्भवेषु[6] यथान्येषु पवित्राण्यत्र वै विदुः ॥
तथा देवस्य मासेऽस्मिन्नव्यङ्गः परिगीयते ।

'ऋग्भवेषु'[7] देवेषु ॥

यस्त्वारोपयते भक्त्या भास्करस्य [8]नरोऽच्युत ॥

1 Comment reproduced by Hemâdri.

2 वर्षे चानियतो जपेत्—ना.

3 Comment reproduced by Hemâdri.

4 एतत्सर्वं—हे.

5 देवाग्रं—हे; देवाख्यं—उ.

6 खभवेषु—हे.

7 खभवेषु—हे.

8 नरोच्यते—ना, उ.

अव्यङ्गं विधिवद्भक्त्या कृत्वा ब्राह्मणभोजनम् ।
[1]घण्टातूर्यनिनादैश्च ब्रह्मघोषैश्च पुष्कलैः ॥
स दिव्ययानमारूढो लोकमायाति हेलिनः ।
अनेनैव विधानेन मासान् द्वादश वै क्रमात् ॥
उपोष्य पारणे पूर्णे दत्वा विप्राय दक्षिणाम् ।
एवं यः पुरुषः कुर्यादादित्याराधनं शुचिः ॥
[2]स गच्छेत् परमं लोकं दिव्यं च वनमालिनः ।

[3]इत्यव्यङ्गसप्तमी ॥

## [त्रितयप्रदानसप्तमी]

[4]विष्णुरुवाच—

कुले जन्म तथारोग्यं [5]धनं चैवात्र दुर्लभम् ।
त्रितयं प्राप्यते येन तन्मे वद जगत्पते ॥

ब्रह्मोवाच—

यो मार्गशीर्षे[6] सितसप्तमेऽह्नि
हस्तर्क्षयोगे जगतः प्रसूतिम् ।

1 घण्टातूर्य—हे, उ.
2 स गच्छेत्तु परं लोकं समुद्दिश्य दिवाकरम् ।
होमार्चा क्रियते तत्र तत्सर्वं चाक्षयं भवेत् ॥—हे.
3 इत्यभ्यङ्गसप्तमी—उ ; इति श्रीभविष्यत्पुराणोक्तमभ्यङ्गसप्तमीव्रतम्—हे ; The printed Bhaviṣyapurāṇa reads अभ्यङ्ग for अव्यङ्ग in the verses as well as in the colophon.
4 हे. व्र. I. ७४४–७४५ ; भवि. पु., ब्राह्मपर्व, अ. ११२, श्लो. १०–१६.
5 धनर्द्धिश्चेह—उ ; धनं चैवेह—हे.
6 मार्गशीर्ष—हे.

संपूज्य भानुं [1]विधिनोपवासी
[2]पुष्पैः सधूपान्नपरोपहारैः ॥
गृहीतगव्यं प्रतिपव्यपूजा-
दानादियुक्तं व्रतमेतदेकम् ।
दद्याच्च दानं द्विजपुङ्गवेभ्यः
[3]स्मरिष्यमाणं विनिबोध वीर ॥
वज्रं [4]परं व्रीहियवं हिरण्यं
यवान्नमम्भः करकान्नपानम् ।
[5]इन्द्रं पयोऽन्नं गुडफाणिताढ्यं
दद्यात्तथा वस्त्रमनुक्रमेण ॥
गव्ये च पव्ये विधिचोदितेन[6]
तस्यां तिथौ लोकगुरुं प्रपूज्य ।

'पव्यो' मासः । 'वज्रं' घृतम् । [7]'गुडफाणिताढ्यं' जलक्वथितेक्षुरससिद्धं द्रवद्रव्यम् ॥

अश्नीत धान्यानि विशुद्धिहेतोः
संप्राशनानीह निबोध तानि[8] ॥
गोमूत्रमम्भो घृतमामशाकं
दूर्वादधिव्रीहियवांस्तिलांश्च ।

1 विधिनोपचारैः-

2 स्रग्गन्धधूपान्नवनोपचारैः—हे ; गन्धधूपान्नवरोपहारैः—उ.

3 तत्कथ्यमानं—हे.

4 यथा—हे.

5 छत्रं पयोन्नं—हे ; इन्द्रं पयोढ्यं—ना ; इन्द्रं पयोच्यं—उ.

6 विधिबोधितेन—उ ; विधिचोदिते च—हे.

7 Commentary corrupt in the Mss. Hemādri comments : 'करकान्नपात्रं' अन्नपूर्णपात्रपिहितं उदकपूर्णकलशम् । 'गुडफाणिताढ्यं' गुडान्नमन्नम् ।

8 निबोधितानि—उ.

सूर्यांशुतप्तं जलमम्बुजानि
क्षीरं च मासक्रमशोऽत्र योज्यम्[1] ॥
कुले प्रधाने धनधान्यपूर्णे
पद्मावृते ध्वस्तसमस्तदुःखे ।
प्राप्नोति जन्माऽविकलेन्द्रियश्च
भवत्यरोगी मतिमान् सुखी च ॥

'[2]पद्मावृते' लक्ष्म्यावृते ॥

[3]इति त्रितयप्रदानसप्तमी ॥

## [निक्षुभार्कसप्तमी]

[4]ब्रह्मोवाच—

सूर्यभक्ता तु या नारी ध्रुवं सा पुरुषो भवेत् ।
[5]स्त्रीत्वे वाप्युत्तमं नाथं यत्कृत्वा शृणु सांप्रतम्
[6]निक्षुभार्कव्रतं भानोः [7]सदा प्रीतिविवर्धनम् ।
अवियोगकरं वीर धर्मकामार्थसाधनम्[8] ॥
सप्तम्यामथ षष्ठ्यां वा संक्रान्तौ भानवे दिने ।
हविषा हविषा होमं सोपवासः समाचरेत् ॥

1 मासक्रमशोऽपि योज्यम्—हे.
2 Comment reproduced by Hemādri.
3 इति भविष्यत्पुराणोक्तं नयनप्रदसप्तमीव्रतम्—हे.
4 हे. व्र. I. ६७४–६७६ ; भवि. पु. ब्राह्मपर्व, अ. १६६, श्लो. १–१७.
5 स्त्री चैवाप्युत्तमं—ना, हे.
6 निष्कम्भार्कव्रतं—उ.
7 सदाप्नोति विवर्धनम्-
8 साधकम्—हे.

[1]निक्षुभार्कस्य [2]दैवार्चां कृत्वा [3]स्वर्णमयीं शुभाम् ।
राजतीं वाथ [4]वार्क्षीं वा [5]स्नापयेत घृतादिभिः ॥

'उत्तमं नाथं' प्राप्नोतीति शेषः । [6]'निक्षुभा' सूर्यपत्नी, तया सहितोऽर्कः । 'हविषा' गव्यघृतेन ॥

[7]गन्धमाल्यैरलंकृत्य वस्त्रयुग्मैश्च [8]शोभनैः ।
भक्ष्यभोज्यैरशेषैश्च विमानध्वजचामरैः ॥
भोजयेत् सूर्यभक्तांश्च भोजकांश्च तथा नृप ।
भक्त्या च दक्षिणां दद्याद्भास्करः [9]प्रीयतां मम ॥
ताम्रपात्रेऽथवा कांस्ये शुक्लवस्त्रावगुण्ठिताम् ।
कृत्वाऽऽयतनमध्ये तु प्रतिमामुपकल्पयेत् ॥
कृत्वा शिरसि तत्पात्रं [10]वितानच्छत्रशोभितम् ।
ध्वजच्छत्रादिभिश्चैव [11]व्रध्नस्यायतनं व्रजेत् ॥

1 निष्कम्भार्कस्य—उ.
2 चैवार्चां—उ ; देवार्चां—हे.
3 स्वर्गमयीं—ना.
4 वार्क्षों—हे.
5 स्नापयेच्च—हे, उ.
6 निष्कम्भा—ना
7 Hemādri adds a few lines before this : रूपनिर्माणं विष्णुधर्मोत्तरात्-
कर्तव्यो निक्षुभार्कस्य वारीकवचभूषितः ।
रश्मयस्तस्य कर्तव्या वामदक्षिणहस्तयोः ॥
करयोरन्ययोस्तस्य कमले कमलासनः ।
एकचक्रे रथे चैव षडारे निक्षुभन्वितः ॥
चतुर्बाहुर्महातेजा रसनाभिर्विभूषितः ।
उपविष्टस्तु कर्तव्यः स देवोऽरुणसारथिः ॥
8 शोभितैः—ना.
9 प्रीयतामिति—हे.
10 वितानच्छदशोभितम्—हे.
11 व्रध्नं त्वायतनं—हे.

निक्षुभार्कदिनेशस्य[1] व्रतमेतन्निवेदयेत् ।
तत्पीठे स्थापयेत् पात्रं पुष्पशोभासमन्वितम् ॥
प्रदक्षिणीकृत्य रविं प्रणिपत्य प्रसादयेत् ।
समाप्यैतद्व्रतं पुण्यं शृणु यत्फलमाप्नुयात् ॥
द्वादशादित्यसंकाशैर्महायानैर्नगोपमैः ।
यथेष्टं वै रवेर्लोके सौरैः सार्धं [2]प्रमोदयेत् ॥
वर्षकोटिसहस्राणि वर्षकोटिशतानि[3] च ।
[4]तदन्ते च महाभागो विष्णुलोके महीयते ॥
ततः[5] कर्मविशेषेण सर्वकामसमन्वितः ।
ब्रह्मलोकं समासाद्य परं [6]सुखमवाप्नुते ॥
ब्रह्मलोकात् परिभ्रष्टः श्रीमान् सद्भिः प्रपूजितः ।
प्रजापतित्वमाप्नोति सुरासुरनमस्कृतः ॥
भोगानिह चिरं भुक्त्वा सोमलोके महीयते ।
[7]सोमाच्चैन्द्रं पुनर्लोकमासाद्येन्द्रसमो भवेत् ॥
इन्द्रलोकाच्च गन्धर्वलोकं प्राप्य स मोदते ।
गन्धर्वराजपतिना सह [8]नागैर्वसेत् सुखम् ॥
महारत्नप्रभावेण ह्युपशोभितमद्भुतम् ।
यक्षलोकमपि प्राप्तो यथाकामं प्रमोदते ॥
यक्षलोकात् परिभ्रष्टः [9]क्रीडते मेरुमूर्धनि ।

1 निष्कम्भार्कदिनेशस्य—उ.
2 प्रमोदते—हे.
3 कोटिवर्षशतानि—हे.
4 नन्दते—हे.
5 अत:—ना.
6 सुखमवाप्नुयात्—हे.
7 सोमाच्चान्द्रं—हे.
8 भोगैर्वसेत्—हे.
9 क्रीडतेऽमरमूर्धनि—ना.

स्थानानि लोकपालानां क्रमादागत्य मोदते ॥
[1]लोकालोकान्तपर्यन्ते सर्वस्मिन् क्षितिमण्डले ।
यत्र तत्र सुखी नित्यं तदशेषमवाप्नुते[2] ॥
धर्मार्थकाममोक्षांश्च राज्यं च प्राप्य मोदते ।
आदित्यात् प्राप्यते [3]योगः सुप्रसन्नान्न संशयः ॥

[4]इति निक्षुभार्कव्रतम् ॥

## [निक्षुभार्कचतुष्टयसप्तमी]

[5]सुमन्तुरुवाच—

या तु षष्ठ्यां तु सप्तम्यां नियता व्रतचारिणी ।
[6]वर्षमेकं न भुङ्क्ते च [7]महाभोगिजिगीषया ॥
वर्षान्ते प्रतिमां कृत्वा [8]निक्षुभार्केति विश्रुताम्[9] ।
[10]स्नानाद्यं च विधिं कृत्वा [11]पूर्वोक्तांल्लभते गुणान्[12]
जाम्बूनदमयैर्यानैश्चतुर्द्वारैरलंकृतम्[13] ।

1 लोकालोकांस्तपर्यन्ते—हे ; लोकलोकान्तपर्यन्ते—ना, उ.
2 अवाप्नुयात्—हे.
3 भोगः सुभगो नात्र संशयः—हे.
4 इति निष्कम्भार्कव्रतम्—उ ; इति भविष्यत्पुराणोक्तं निक्षुभार्कसप्तमीव्रतम्—हे.
5 हे. व्र. I., ७७६–७७८ ; भवि. पु., ब्राह्मपर्व, अ. १६७, श्लो. १–१७.
6 वर्षमेकं तु कृत्वैवं—हे.
7 महाभागीजिगीषया—ना ; महाभोगीजिगीषया—उ ; महालोकजिगीषया—अ.
8 निष्कम्भार्केति—उ.
9 Hemādri comments :
निक्षुभार्करूपनिर्माणं नियतव्रतोक्तं वेदितव्यम् ।
10 स्नानात्पश्चविधिं—ना.
11 निक्षुभार्केति विश्रुताम्—हे.
12 Hemādri adds a line after this :
पूर्वोक्तान् लभते कामान् पूर्वोक्तान् लभते गुणान् ॥
13 यानैः स्वर्गे न रमते चिरम्—हे.

गत्वादित्यपुरं रम्यं निखिलं विन्दते फलम् ॥
सौरादिसर्वलोकेषु भोगान् भुक्त्वा यथेप्सितान् ।
क्रमादागत्य लोकेऽस्मिन् राजानं पतिमाप्नुयात् ॥[1]
या नार्युपवसेदेवं [2]कृत्स्नामेकां तु सप्तमीम् ।
सा गच्छेत् परमं स्थानं भानोरमिततेजसः ॥
वर्षान्ते प्रतिमां कृत्वा शालिपिष्टमयीं शुभाम् ।
पीतानुलेपमाल्यैश्च[3] पीतवस्त्रैश्च पूजयेत् ॥
पूर्वोक्तं निखिलं कृत्वा भास्कराय निवेदयेत् ।
[4]भूयो भौमैर्महायानैर्ध्वान्तचामीकरप्रभैः ॥
वर्षकोटिसहस्रं तु सूर्यलोके महीयते ।
सौरादिसर्वलोकेषु भोगान् भुक्त्वा यथेप्सितान् ॥[5]
क्रमादागत्य लोकेऽस्मिन् [6]यथेष्टं विन्दते [7]पतिम् ।
कुलीनं रूपसंपन्नं सर्वशास्त्रविशारदम् ॥[8]
सप्तम्यां या निराहारा [9]भवेच्च संयता त्रिधा ।
[10]गजं पिष्टमयं कृत्वा वर्षान्ते विनिवेदयेत् ॥
विधाय राजतं पद्मं सुवर्णकृतकर्णिकम् ।
भक्त्या विन्यस्य तत्पृष्ठे शेषं पूर्ववदाचरेत् ॥

1 Hemādri adds after this : इति प्रथमम् ।

2 कृष्णामेकां—हे.

3 पीतानुलेपनैर्माल्यैः—उ, हे.

4 सर्वभूमौ महीपालो धातुचामीकरप्रभः—हे.

5 After this उ repeats the nine lines from "क्रमादागत्य लोकेऽस्मिन् etc. to भोगान् भुक्त्वा यथेप्सितान्" ।

6 जनेशं—हे.

7 फलम्—ना.

8 Hemādri adds after this—इति द्वितीयम् ।

9 भवेदब्दनियन्त्रिता—हे.

10 गन्धैः—ना.

कामतोऽपि कृतं पापं भ्रूणहत्यादि यद्भवेत् ।
तत्सर्वं गजदानेन क्षीयते नात्र संशयः ॥
महापद्मविमानेन [1]नरो याति सलोकताम् ।
वर्षकोटिशतं [2]साग्रं सूर्यलोके महीयते ॥
[3]सौरलोकादिलोकेषु भुङ्क्ते भोगान्नराधिप ।
क्रमादागत्य लोकेऽस्मिन् [4]यथेष्टं विन्दते पतिम्[5]
सर्वलक्षणसंपन्नं धनधान्यसमन्वितम् ।
महोत्साहं महावीर्यं [6]महासत्वं महाबलम् ॥[7]
कृष्णपक्षे तु माघस्य सप्तम्यां [8]या दृढव्रता ।
वर्षैकमुपवासेन सर्वभोगविवर्जिता ॥
वर्षान्ते सर्वगन्धोत्थं [9]निक्षुभार्कं निवेदयेत् ।
सुवर्णमणिमुक्ताढ्यं भोजयित्वा द्विजोत्तमम् ॥
इतिहासविदं प्राज्ञं वाचकं भार्यया सह ।
सुविचित्रैर्महायानैर्दिव्यैर्गन्धैश्च शोभितम्[10] ॥
क्रीडेद्युगशतं साग्रं सूर्यलोके [11]महीयते ।
प्रभया रविसंकाशस्तेजसा हरिसन्निभः ॥

1 नरनारायणान्वित:—उ, हे.
2 पूर्णं—हे.
3 सौरादिसप्तलोकेषु—हे.
4 जनेशं—हे.
5 Hemādri adds a line after this :
कुलीनं रूपसंपन्नं सर्वशास्त्रविशारदम् ।
6 महासन्धं—हे.
7 Hemādri adds after this—इति तृतीयम् ।
8 यादृशं व्रतम्—ना.
9 निष्कम्भार्कं—उ.
10 दिव्यगन्धर्वशोभितैः—हे ; दिव्यगन्धैश्च शोभितम्—उ.
11 स मोदते—उ ; नराधिप—हे.

यथेष्टं भानवे लोके भोगान् भुक्त्वा तु कृत्स्नशः[1] ।
क्रमादागत्य लोकेऽस्मिन् [2]राजानं विन्दते पतिम् ॥
य एवं कुरुते राजन् व्रतं पापभयापहम् ।
[3]निक्षुभार्कमिदं पुण्यं स याति परमां गतिम् ॥
वर्षमेकं महाबाहो श्रद्धया परयान्वितः ।
वर्षान्ते भोजयेद्वीर वाचकं भार्यया सह ॥
[4]पूजयित्वा तु दाम्पत्यं महाभारतवाचकम् ।
पूजयेद्गन्धमाल्यैश्च वासोभिर्भूषणैस्तथा ॥
कृत्वा ताम्रमये पात्रे [5]वस्त्रपूर्णैरलंकृते ।
[6]निक्षुभार्कं तु सौवर्णं दद्यात्ताभ्यां तु शक्तितः[7] ॥
[8]निक्षुभा ब्राह्मणी ज्ञेया वाचकोऽर्कः प्रकीर्तितः ।
[9]तस्मात्तौ पूजयेत् सौरीश्वरवच्छ्रद्धयान्वितः ॥

[10]इति निक्षुभार्कचतुष्टयव्रतम् ॥

## [उभयसप्तमी]

[11]सुमन्तुरुवाच—

हन्त ते संप्रवक्ष्यामि सूर्यव्रतमनुत्तमम् ।

1 यथेप्सितान्—हे.
2 राजा भवति धार्मिकः—हे.
3 निष्कम्भार्कमिदं—उ.
4 भोजयित्वा—हे.
5 वस्त्रपूर्णेष्वलंकृते—हे.
6 निष्कम्भार्कं—उ.
7 स्वशक्तितः—हे.
8 The following two lines are omitted by उ.
9 Line omitted by Hemādri.
10 इति भविष्यत्पुराणोक्तं निक्षुभार्कचतुष्टयम्—हे.
11 हे. व्र. I., ७४८—७५३ ; भवि. पु., ब्राह्मपर्व, अ. १६५, श्लो. १-४५.

धर्मकामार्थमोक्षाणां [1]प्रीतिदायकमुत्तमम् ॥
पौषे [2]मासि तु संप्राप्ते यः [3]कुर्यान्नक्तभोजनम् ।
जितेन्द्रियः सत्यवादी स्नाति [4]गोधूमगोरसैः ॥
पक्षयोः सप्तमीं यत्नादुपवासेन योजयेत् ।
त्रिसन्ध्यमर्चयेद्भानुं [5]शाण्डिलेयं च सुव्रत ॥
अधःशायी भवेन्नित्यं सर्वभोगविवर्जितः ।
मासि पूर्णे तु सप्तम्यां घृतादिभिररिन्दम ॥
कृत्वा स्नानं महापूजां सूर्यमन्त्रेण भारत ।
नैवेद्यमोदनप्रस्थं क्षीरसिद्धं निवेदयेत् ॥
भोजयित्वा द्विजानष्टौ [6]सूर्यभक्तांश्च भारत ।
गां च दद्यान्महाराज कपिलां [7]भास्करस्य तु ॥
य एवं कुरुते पुण्यं सूर्यव्रतमनौपमम्[8] ।
तस्य पुण्यफलं वच्मि सर्वकामसमन्वितम् ॥
सूर्यकोटिप्रतीकाशैर्विमानैः [9]सार्वकामिकैः ।
अप्सरोगण[10]संकीर्णैर्महाविभ्रम[11]संयुतैः ॥
[12]संगीतनृत्यताघोषैर्गन्धर्वगणशोभितैः ।

1 प्रतिपादकमुत्तमम्—हे.
2 मासे तु सप्तम्यां—हे.
3 कुर्यान्नक्तं—उ, हे.
4 गोमूत्रगोरसैः—हे ; गोधूमगोरसैः—उ.
5 Hemādri comments 'शाण्डिलेयो' अग्निः ।
6 सूर्यभक्तांस्तु सामगान्—हे.
7 भास्कराय च—हे.
8 अनुत्तमम्—हे.
9 सर्वकामिकैः—ना.
10 संपूर्णैः for संकीर्णैः—हे.
11 विभव for विभ्रम—उ, हे.
12 संगीतनृत्यनिर्घोषैः—हे.

दोधूयमानश्चमरैः स्तूयमानः सुरासुरैः ॥
सहस्रकिरणाद्भानोर्धनैश्वर्यसमन्वितः ।
स याति परमं स्थानं यत्रास्ते रविरंशुमान् ॥
[1]रोमसंख्या तु या तस्यास्तत्प्रसूतिकुले [2]तु सा ।[3]
तावद्युगसहस्राणि [4]स्वर्गलोके महीयते ॥
त्रिःसप्तकुलजैः सार्धं भोगान् भुक्त्वा यथेप्सितान् ।
ज्ञानयोगं समासाद्य [5]सूर्यस्यैवालयं व्रजेत् ॥
माघमासे तु संप्राप्ते यः कुर्यान्नक्तभोजनम् ।
पिण्याकं [6]घृतसंमिश्रं भुञ्जानः सन् जितेन्द्रियः[7] ॥
उपवासश्च सप्तम्यां भवेदुभयपक्षयोः ।
[8]घृताभिषेकं सप्तम्यां [9]कुर्याद्भानोर्नराधिप ॥
गां च दद्याद्दिनेशाय तरुणीं नीलसन्निभाम् ।
गत्वादित्यपुरं रम्यं भोगान् भुङ्क्ते यथेप्सितान् ॥
फाल्गुने मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् ।
[10]श्यामाकक्षीरनीवारैर्जितक्रोधो जितेन्द्रियः ॥
षष्ठ्यां वाप्यथ सप्तम्यामुपवासपरो भवेत् ।
अष्टम्यां तु [11]महास्नानं पञ्चगव्यघृतादिभिः ॥[12]

1 रोमसंख्यातया तस्याः—हे ; रोमसंख्याभयात्तरयाः—उ.
2 युवा for तु सा—हे.
3 Hemādri comments : 'तस्याः' कपिलायाः ।
4 सूर्यलोके—हे.
5 सूर्यस्य निलयं—हे.
6 रथसंमिश्रं—ना.
7 संजितेन्द्रियः—हे ; संयतेन्द्रियः—उ.
8 घृताभिषेकमष्टम्यां—हे.
9 सम्यक् for कुर्यात्—ना.
10 श्यामाकैः—हे.
11 महात्मानं—ना.
12 Hemādri adds a line after this :
वल्मीकाग्रादिमृद्भिश्च गोमूत्रशकृतादिभिः ।

त्वग्भिश्च क्षीरवृक्षाणां स्नापयित्वा प्रपूजयेत् ।
सौरभेयीं ततो [1]दद्यादुक्तां तां रश्मिमालिने ॥
गत्वादित्यपुरं रम्यं मोदते शाश्वतीः समाः ।
मासि चैत्रे तु संप्राप्ते यः कुर्यान्नक्तभोजनम् ॥
शाल्यन्नं पयसा युक्तं भुञ्जानः [2]संयतेन्द्रियः ।
भानवे पाटलां दद्याद्वैष्णवीं[3] तरुणीं नृप ॥
[4]पुष्परागमयैर्यानैर्नानाहंसादिशालिभिः[5] ।
गच्छेत् सूर्यपदं रम्यं दुष्प्रापमकृतात्मभिः ॥
वैशाखे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् ।
दध्योदनं [6]तु भुञ्जानो जितक्रोधो जितेन्द्रियः ॥
गोष्ठेशयो ह्यधःशायी निशायामेकवस्त्रभृत्[7] ।
नियमं च यथोद्दिष्टं [8]सामान्यं सर्वमाचरेत् ॥
वैशाख्यां पौर्णमास्यां तु[9] कुर्यात् स्नानं घृतादिभिः ।
सूर्यायालंकृतां [10]श्वेतां दद्याद्गां तरुणीं नृप ॥
शङ्खकुन्देन्दुवर्णाभैर्महायानैरलंकृतैः ।
श्वेतैर्गरुडसंयुक्तैर्गच्छेदर्कस्य मन्दिरम् ॥
सर्वातिशयरूपाभिर्नारीभिः परिवारितः ।
[11]नीलोत्पलसुगन्धीनि रमते कालमक्षयम् ॥

1 दद्याद्रूक्षां तां—ना ; दद्याद्रक्ताभां—हे.
2 स जितेन्द्रियः—ना.
3 Hemādri comments : 'वैष्णवी' गौरेव ।
4 पुष्पनागमयैः—उ.
5 नानाहंसानुयायिभिः—हे.
6 च for तु—हे.
7 ॰वस्त्रधृक्—हे.
8 Hemādri comments : 'सामान्यो नियमः' पाषण्डाद्यसंभाषणादिः ।
9 च for तु—उ.
10 त्वेकां for श्वेतां—हे.
11 नीलोत्पलसुगन्धीभिर्मोदते मोदकाक्षयम्—उ.

मासि ज्येष्ठे महाबाहो यः कुर्यान्नक्तभोजनम् ।
भुञ्जानः पायसं वीर सर्पिषा मधुना सह ॥
वीरासनो[1] निशायां स्यात् [2]सहस्रांशुमनुव्रजेत् ।

'वीरासनं' [3]अनुपविश्यावस्थानम् ॥

हितकारी गवां नित्यं गवां हिंसाविवर्जितः ॥
उभयोरपि सप्तम्यां कुर्यात् [4]स्नानादिकं विधिम् ।

[5]'उभयोः' पक्षयोरिति शेषः ॥

सूर्याय धेनुं दद्याच्च धूम्रवर्णामलंकृताम् ॥
नीलोत्पलसमप्रख्यैर्महायानैरनौपमैः[6] ।
महासिंहनिबद्धैश्च[7] मोदते कालमक्षयम् ॥
आषाढे मासि यः कुर्यात् [8]संयतो नक्तभोजनम् ।
षष्ठिकोदनसंमिश्रं सकृदश्नीत गोरसम्[9] ॥
गां दद्याच्च महाराज भास्कराय शुभाननाम् ।
सामान्यं च विधिं कुर्यात् [10]प्रागुक्तं यन्मया तव ॥
शुद्धस्फटिकसंकाशैर्यानैर्बर्हिणवाहनैः ।
अणिमादिगुणैर्युक्तः सूर्यवद्विचरेद्दिवि ॥
संप्राप्ते श्रावणे मासि यः कुर्यान्नक्तभोजनम् ।

1 वीरासनं—ना.
2 अहर्गाः समनुव्रजेत्—हे.
3 Word omitted by उ.
4 संध्यादिकं विधिम्—हे.
5 Comment reproduced by Hemādri.
6 अनूपमैः for अनौपमैः—हे.
7 निबन्धैश्च—ना.
8 संयुतो—ना.
9 भोजनम्—ना.
10 प्रागुक्तमनया तव—ना ; प्रागुक्तो यो मयानघ—हे.

क्षीरषष्ठिकयुक्तेन सर्वसत्त्वहिते रतः[1] ॥
पीतवर्णां च गां दद्याद्भास्कराय महात्मने ।
सामान्यमखिलं कुर्यात् [2]प्रागुक्तं यन्मया तव ॥
सुविचित्रैर्महायानैर्हंससारसयायिभिः ।
गत्वादित्यपुरं श्रीमान् पूर्वोक्तं लभते फलम् ॥
वीर भाद्रपदे मासि यः कुर्यान्नक्तभोजनम् ।
[3]हुतशेषं हविर्दद्याद्वृक्षमूलं समाश्रितः[4] ॥
[5]सुप्यादायतने रात्रौ सर्वभूतानुकम्पकः[6] ।
दद्याद्गां तरुणीं वीर भास्कराय महात्मने ॥
निशाकरसमप्रख्यैर्वज्रवैडूर्यचित्रितैः ।
चक्रवाकसमायुक्तैर्विमानैः सार्वकामिकैः ॥
गत्वाऽऽदित्यपुरं रम्यं ससुरासुरवन्दितः ।
मोदते स महायानैर्यावदाभूतसंप्लवम्[7] ॥
श्रीमानाश्वयुजे मासि यः कुर्यान्नक्तभोजनम् ।[8]
घृताशनं तु भुञ्जानो जितक्रोधो जितेन्द्रियः ॥
दद्याद्गां पद्मपत्राभां भानोरमिततेजसः ।
[9]दिव्याभरणसंपन्नां तरुणीं च पयस्विनीम् ॥
स्वच्छमौक्तिकसंकाशैर्नीलोत्पलसुशोभितैः[10] ।

1 रविः—ना.
2 विधानं यत्प्रकीर्तितम्—हे.
3 हुतशेषं हि विश्वात्मन्—हे.
4 उपाश्रितः—हे.
5 स्वप्याद्—ना, हे.
6 सर्वभूतात्मकम्पनः—ना ; सर्वभूतानुकम्पया—हे.
7 आहूतसंप्लवम्—उ, हे.
8 उ omits the next two lines by reading : यः कुर्यान्नक्तभोज तेजसः
9 पृष्ठाभरणसंपन्नां—हे.
10 इन्द्रनीलोपशोभितैः—उ, हे.

जीवंजीवकसंयुक्तैर्विमानैः सार्वकामिकैः ॥
गच्छेद्भानुसलोकत्वं तेजसा रविसन्निभः ।
कान्त्या विधुसमो राजन् प्रभया [1]रविसन्निभः ॥
राजेन्द्र कार्तिके मासि यः कुर्यान्नक्तभोजनम् ।
[2]क्षीरोदनं [3]प्रभुञ्जानः सत्यवादी जितेन्द्रियः ॥
दिवाकराय गां दद्याज्ज्वलनार्कसमप्रभाम् ।
पूर्वोक्तं च विधिं कुर्यात् सूर्यतुल्यो भवेन्नरः[4] ॥
कालानलशिखाप्रख्यैर्महायानैर्नगोपमैः ।
महासिंहकृताटोपैः[5] सूर्यवन्मोदते सुखी ॥
मार्गशीर्षे शुभे मासि यः कुर्यान्नक्तभोजनम् ।
यवान्नं पयसा युक्तं भुञ्जानः [6]संयतेन्द्रियः ॥
प्रयच्छेद्गां तथा कृष्णां नानालंकारभूषिताम् ।
सूर्याय कुरुशार्दूल विधिं [7]चापि समाचरेत् ॥
सितपद्मनिभैर्यानैः [8]श्वेताश्वतरसंयुतैः ।
गत्वादित्यपुरं रम्यं प्रभया परयान्वितः ॥
अहिंसा सत्यवचनमस्तेयः [9]क्षान्तिरार्जवम् ।
त्रिषवणाग्निहवनं[10] भूशय्या नक्तभोजनम् ॥
पक्षयोरुपवासेन सप्तम्यां कुरुनन्दन[11] ।

1 भृगुसन्निभः—हे.
2 क्षीरोदकं—उ.
3 च भुञ्जानः—हे.
4 भवेन्नृप—उ, हे.
5 ०कृतोद्धूतैः—हे.
6 स जितेन्द्रियः—ना.
7 वापि—हे.
8 श्वेताश्वरथसंयुतैः—हे.
9 क्षान्तिवर्जितम्—उ.
10 त्रिवाराग्निहवनं—उ.
11 कुलनन्दन—उ.

एतान् गुणान् समाश्रित्य कुर्वाणो व्रतमुत्तमम् ॥
सप्तम्युभयनाख्यातं [1]सर्वपापभयापहम् ।
[2]सर्वरोगप्रशमनं सर्वकामफलप्रदम् ॥
इत्येवमादिनियमैश्चरेत् सूर्यव्रतं सदा ।
[3]स गच्छेद्विपुलं स्थानं भानोरमिततेजसः ॥

[4]इत्युभयसप्तमीव्रतम् ॥

## [पुत्रसप्तमी]

[5]आदित्य उवाच—

[6]माघमासे तु शुक्लायां सप्तम्यां समुपोषितः[7] ।
[8]पूजयेद्यस्तु मां भक्त्या तस्याहं पुत्रतां व्रजे[9] ॥
एवं चोभयसप्तम्यां मासि मासि सुरोत्तम ।
यस्तु मां पूजयेद्भक्त्या [10]स्वमेकमेकमादरात् ॥
प्रयच्छामि [11]सुतं तस्य ह्यात्मनो [12]ह्यङ्गसंभवम् ।
वित्तं यशस्तथा [13]पुत्रमारोग्यं परमं तथा ॥

1 सर्वरोग०—हे.
2 सर्वलोक०—ना ; सर्वपाप०—हे.
3 य इच्छेद्—हे.
4 इति भविष्यत्पुराणोक्तमुभयसप्तमीव्रतम्—हे.
5 हे. व्र. I., पृ. ७३८–७३९.
6 The following three lines are omitted by ना.
7 Hemādri comments : 'समुपोषितः' षष्ठ्याम् ।
8 यः पूजयेत—उ.
9 प्रभुतां व्रजेत्—हे.
10 Hemādri comments : 'स्वमेकः' संवत्सरः ।
11 सुतान्—हे.
12 ह्यात्मसंभवम्—उ ; ह्यङ्गसंभवान्—हे.
13 पुत्रान्—हे.

माघमासे तु यो ब्रह्मन् शुक्लपक्षे जितेन्द्रियः ।
[1]पाषण्डान् ग्राम्यपतितान् न जल्पन् विजितेन्द्रियः ॥
उपोष्य विधिवत्षष्ठ्यां श्वेतमाल्यविलेपनैः ।
पूजयित्वा तु मां भक्त्या निशि भूमौ स्वपेद्बुधः ॥
[2]प्रातरुत्थाय सप्तम्यां कृत्वा स्नानादिकां क्रियाम्[3] ।
पूजयित्वा तु [4]मां ब्रह्मन् वीरहोमं समाचरेत् ॥
प्रीणयित्वा[5] हरिं भक्त्या हविषा पद्मलोचनम् ।
दध्योदनेन पयसा पायसेन [illegible]था ॥
तस्यैव कृष्णपक्षस्य षष्ठ्यां सम्यगुपोषितः ।
[6]रक्तोत्पलैः [7]सुगन्धाढ्यै रक्तपुष्पैश्च धूपयेत् ॥
[8]एवं पूजयते भक्त्या नरो मां विधिवत्सदा ।
उभयोरपि देवेन्द्र स पुत्रं लभते फलम् ॥

[9]'वीरहोमः' अग्निहोमः[10] । 'हरिः' अत्राऽऽदित्यः । 'तस्य' माघस्य ॥

[11]इति पुत्रसप्तमी ॥

1 पाषण्डान् पतितान् नम्रान् न जल्पन्—उ; पाषण्डान् पतितानन्यान् जल्पन्न विजितेन्द्रियः—हे.
2 पुनरुत्थाय—ना.
3 स्नानादिकक्रियाम्—हे.
4 मां वीरहोमं ब्रह्मन् समाचरेत्—हे.
5 पूजयित्वा—हे.
6 पद्मोत्पलैः—ना.
7 सुगन्धाद्यैः—उ.
8 एवं यः पूजयेद्भक्त्या—हे.
9 Commentary reproduced by Hemādri.
10 'हरिः' विष्णुरूपः—हे.
11 इत्यादित्यपुराणोक्तं पुत्रसप्तमीव्रतम्—हे.

## [सर्वाप्तिसप्तमीव्रतम्]

[1]ब्रह्मोवाच—

कृष्णपक्षे तु माघस्य सर्वाप्तिं सप्तमीं शृणु ।[2]
पाषण्डादिभिरालापमकुर्वन् भानुतत्परः ॥
पूजयेत् [3]प्रयतो देवमेकाग्रमतिरंशुगम् ।
माघादि पारणं मासैः षड्भिः [4]शुच्यन्तकं स्मृतम् ॥

'शुच्यन्तकं' आषाढान्तकम्[5] ॥

मार्तण्डः प्रथमं नाम द्वितीयोऽर्कः प्रकीर्तितः ।
तृतीयो चित्रभानुस्तु विभावसुरतः परम् ॥
भगेति पञ्चमो ज्ञेयः षष्ठो हंसः प्रकीर्तितः ।
पूर्वेषु षट्सु मासेषु स्नानप्राशनयोस्तिलाः ॥
श्रावणादिषु मासेषु पञ्चगव्यमुदाहृतम् ।
स्नाने च प्राशने चैव प्रशस्तं पापनाशनम् ॥
प्रतिमासं च देवस्य कृत्वा पूजां यथाविधि ।
[6]प्राशयेद्दक्षिणां दद्याच्छ्रद्दधानः स्वशक्तितः ॥
[7]पारणं चेति[8] देवस्य प्रीणनं[9] भक्तिपूजनम्[10] ।

1 हे. व्र. I. ७३५–७३६ ; भवि. पु., ब्राह्मपर्व, अ. १०८, श्लो. १–१२.

2 Hemādri adds a line after this :
यामुपोष्य समाप्नोति सर्वान् कामान् धराधर ॥

3 प्रणतो—हे.

4 शुच्यन्तिकं—उ.

5 Comment reproduced by Hemādri.

6 विप्राय दक्षिणां—हे.

7 The following three lines are omitted by उ.

8 पारणान्ते च—हे.

9 प्रीणितं—ना.

10 भक्तिपूर्वकम्—हे.

कुर्वीत शक्त्या विधिवद्रविभक्त्या दिवस्पतेः[1] ॥
नक्तं भुञ्जीत वै विष्णोस्तैलक्षारविवर्जितम् ।
कृष्णषष्ठ्यामुषित्वैवं[2] सप्तम्यामथ वा दिने ॥
एतामुषित्वा धर्मज्ञ [3]हंसप्रीणनतत्परः ।
सर्वान् कामानवाप्नोति यद्यन्निच्छति चेतसा ॥
[4]अतो लोकेषु विख्याता सर्वाप्तिरिति सप्तमी ।
कृताभिलषिता ह्येषा प्रारब्धा [5]धर्मतत्परैः ॥
[6]पूरयत्यखिलान् कामान् [7]संश्रिता च दिने दिने ।

[8]इति सर्वाप्तिसप्तमी ॥

## [कामदा सप्तमी]

[9]पितामह उवाच—

फाल्गुनामलपक्षस्य सप्तम्यां क्ष्माधराधर[10] ।
उपोषितो नरो नारी समभ्यर्च्य तमोपहम्[11] ॥
सूर्यनाम जपन् भक्त्या भावयुक्तो जितेन्द्रियः ।
[12]उत्तिष्ठन्प्रस्वपंश्चैव सूर्यमेवानुकीर्तयेत् ॥

1 रविं भक्त्या दिवस्पतिम्—हे.
2 उपोष्यैवं—हे.
3 हंसप्रीणिततत्परः—ना.
4 स्वतो—हे.
5 कर्मतत्परैः—हे.
6 पूरयित्वाखिलान्—ना.
7 आश्रितानां—हे.
8 इति श्रीभविष्यत्पुराणोक्तं सर्वाप्तिसप्तमीव्रतम्—हे.
9 हे. व्र. I., ७२८–७३१ ; भवि. पु., ब्राह्मपर्व, अ. १०५, श्लो. १–२९.
10 च घनाघन—हे.
11 तपोमयम्—ना.
12 उत्तिष्ठन्नुपविशंश्चैव—ना.

ततोऽन्यदिवसे प्राप्ते त्वष्टम्यां नियतो रविम् ।
स्नात्वा सम्यक् समभ्यर्च्य दद्याद्विप्राय दक्षिणाम् ॥
रविमुद्दिश्य चैवाग्नौ घृतहोमकृतक्रियः ।
[1]प्रणिपत्य जगन्नाथमिति वाणीमुदीरयेत् ॥
[2]समाराध्य पुरा देवी सावित्री काममाप वै ।
स मे ददातु देवेशः सर्वान् कामान् विभावसुः ॥
समभ्यर्च्य दितिः प्राप्ता कृत्स्नान् कामान् यथेप्सितान् ।
[3]स ददात्वखिलान् कामान् प्रसन्नो मेदिवस्पतिः ॥
भ्रष्टराज्यः स देवेन्द्रो [4]यमभ्यर्च्य दिवाकरम् ।
कामार्थमाप्तवान् राज्यं स मे कामान् प्रयच्छतु ॥
एवमभ्यर्च्य पूजां च निष्पाद्येह विशेषतः ।
भुञ्जीत [5]प्रयतः सम्यक् हविष्यं [6]पन्नगध्वज ॥
फाल्गुनो चैत्रवैशाखौ [7]ज्येष्ठमत्यन्ततत्परम् ।
चतुर्भिः पारणं मासैरेभिर्निष्पादितं भवेत्[8] ॥
[9]करवीरैश्चतुर्मासान् रविं संपूजयेत्ततः ।
कृष्णागरुं [10]दहेद्धूपं प्राश्य गोशृङ्गजं जलम् ॥
नैवेद्यं खण्डवेष्टांश्च दद्याद्विप्रेभ्य एव च ।

1 प्रणिपत्य रविं देवमिति वाक्यमुदीरयेत्—हे.

2 यमाराध्य—हे.

3 ददातु सकलान् कामान्—हे.

4 समभ्यर्च्य—हे.

5 च ततः for प्रयतः—हे.

6 पतगध्वज—हे.

7 ज्येष्ठमन्त्यं तथा परम्—हे.

8 निष्पाद्य संभवेत्—हे.

9 करवीरैश्चतुरो मासान् तथा संपूजयेद्रविम्—हे; करवीरैश्चतुरो मासान् संपूजयेद्रविं ततः—उ.

10 दहेद्धूमं—ना.

ततश्च श्रूयतामन्या त्वाषाढादिषु सप्तमी ॥
जातीपुष्पाणि शस्तानि धूपो गुग्गुलुरुच्यते ।
कुतपोदकमश्नीयान्नैवेद्यं पायसं [1]तथा ॥
स्वयं तदेव चाश्नीयात् शेषं पूर्ववदाचरेत् ।

[2]'कुतपोदकं' कुशोदकम् ॥

कार्तिकादिषु मासेषु गोमूत्रं कायशोधनम् ॥
महाङ्गं धूपमुद्दिष्टं पूजा रक्तोत्पलैस्तथा ।[3]
कासारं चैव नैवेद्यं [4]निवेद्यं भास्कराय वै ॥
प्रतिमासं च विप्राय [5]दातव्या दक्षिणास्तथा ।
प्रीणनं [6]चेच्छया भानोः पारणे पारणे गते ॥
यथाशक्ति यथायोगं वित्तशाठ्यं विवर्जयेत् ।
सद्भावेनैव सप्ताश्वः पूजितः प्रीतये [7]मतः ॥
पारणान्ते यथाशक्त्या पूजितः स्थापितो रविः ।
प्रीणितश्चेप्सितान् कामान् दद्यादव्याहतान् रविः ॥
एषा पुण्या पापहरा सप्तमी सर्वकामदा ।
यथाभिलषितान् कामान् ददाति गरुडध्वज ॥
अपुत्रः पुत्रमाप्नोति अधनो धनमाप्नुयात् ।
रोगाभिभूतश्चारोग्यं कन्या विन्दति सत्पतिम् ॥
समागमं प्रवासेभ्य उपोष्यैतदवाप्नुयात् ।

1 मतम्—हे.

2 Comment reproduced by Hemādri.

3 Hemādri repeats a line after this: 'कुतपोदकमश्नीयान्नैवेद्यं पायसं मतम् ।'

4 प्रदद्याद्—हे.

5 दद्याच्छक्त्या तु दक्षिणाम्—हे.

6 स्वेच्छया—हे.

7 यतः—उ.

सर्वान् कामानवाप्नोति [1]गोगतश्चापि मोदते ॥
पुनरेत्य महीं कृष्ण [2]घनाघनसमो [3]नरः ।
क्ष्मातले स्यान्न संदेहः प्रसादाद्गोपतेर्नरः ॥

[4]महाङ्गधूपो [5]भविष्यत्पुराणोक्तः । तद्यथा—

कर्पूरं [6]चन्दनं पुष्पमगरुं तगरुं तथा ।
[7]गृञ्जनं शर्करा कृष्ण महाङ्गं सिह्लकं तथा ॥
[8]महाङ्गोऽयं स्मृतो धूपः प्रियो देवस्य सर्वदा ॥ इति ।

'गोगतः' स्वर्गतः ॥

[9]इति कामदसप्तमीव्रतम् ॥

## [सिद्धार्थकादिसप्तमी]

[10]सप्ताश्वतिलक उवाच—

वैनतेय निबोध त्वं विधानं सप्तमीव्रते ।
एतद्धि परमं गुह्यं रवेराराधनं परम् ॥
सिद्धार्थकैस्तु प्रथमा द्वितीया वार्कसंपुटैः ।

1 गोशतैश्चापि—उ.
2 Hemādri comments : 'घनाघनसमः' शक्रतुल्यः ।
3 नृप—हे.
4 Comment reproduced by Hemādri.
5 भविष्यत्पुराण एवोक्तः—उ.
6 कुङ्कुमं मुस्तामगरुं सिह्लकं तथा—हे.
7 व्यजनं—ना.
8 महायोगं—ना.
9 इति भविष्यत्पुराणोक्तं कामदासप्तमीव्रतम्—हे.
10 हे. व्र. I., ६७९-६८५.; भवि. पु., ब्राह्मपर्व, अ. १९३, श्लो. २—२१, अ. १९४ श्लो १—२५.

तृतीया मरिचैः [1]कार्या चतुर्थी निम्बसप्तमी ॥
[2]षड्युता[3] पञ्चमी कार्या षष्ठी च फलसप्तमी ।
सप्तम्यनोदना वीर सप्तमी परिकीर्तिता ॥
इत्येताः सप्तसप्तम्यः कर्तव्या भूतिमिच्छता ।
तथा [4]चात्र क्रमेणासां करणं कथयाम्यहम् ॥
माघे वा मार्गशीर्षे वा कार्या शुक्ला तु सप्तमी ।
[5]नार्तस्य नियमभ्रंशः पक्षमासकृतो [6]भवेत्[7] ॥
अर्धप्रहरशेषे तु [8]प्रकुर्याद्दन्तधावनम् ।

[9]'अर्धप्रहरशेषे' [10]पूर्वदिनेऽवशिष्टार्धप्रहरे ॥

[11]सप्तम्यां ये तत्र वृक्षाः कामिकांस्तान् वदाम्यहम् ॥
[12]मधूके[13] पुत्रलाभः स्यादर्जुने भार्गवी स्थिरा ।

'अर्जुनः' ककुभः ॥

1 काम्या—ना.
2 षट्सुता—उ.
3 'षड्युता' सिद्धार्थकादिषड्भिः प्रकारैर्युता—हे.
4 चानुक्रमेणासां—हे ; चानुक्रमेणान्यं—उ.
5 न च स्यान्नियम०—ना.
6 वसेत्—ना, उ.
7 Hemādri comments : आर्तिवशादन्यस्मिन् मासे पक्षे च कार्येत्यर्थः ।
8 कुर्याद्वै दन्त०—हे.
9 Comment reproduced by Hemādri.
10 पूर्वदिने वा शिष्टा०—उ.
11 तत्रैव दन्तकाष्ठानां फलं तव वदाम्यहम्—हे.
12 मधुके—उ.
13 Hemādri reads the following lines in this order :—
मधूके पुत्रलाभः स्याद्राजवृक्षाज्जयं लभेत् ।
गुरुतां याति सर्वत्र आढरूपकसंभवे ॥
अशोकेन विशोकः स्यादश्वत्थबदरे यशः ।
श्रियं प्राप्नोति विपुलां शिरीषस्य निषेवणात् ॥

बदर्यां च बृहत्यां च क्षिप्रं रोगात् प्रमुच्यते ॥
ऐश्वर्यं च भवेन्निम्बे खदिरे धनसंचयः ।
[1]शत्रुक्षयः कदम्बे चाप्यर्थलाभोऽतिमुक्तके ॥
गुरुतां याति सर्वत्र[2] आटरूषकसंभवे[3] ।
ज्ञातिप्रधानतां याति [4]ह्यश्वत्थो यच्छते यशः ॥
श्रियं प्राप्नोति विपुलां शिरीषस्य निषेवणात् ।
प्रियङ्गुं सेवमानस्य सौभाग्यं परमं भवेत् ॥
अभीप्सितार्थसिद्धिः स्यान्नित्यं प्लक्षनिषेवणात् ।
न पाटितं समश्नीयात् दन्तकाष्ठं च [5]सव्रणम् ॥
[6]न चार्द्रशुष्कं वक्रं[7] वा न चैव त्वग्विवर्जितम्[8] ।
वितस्तिमात्रमश्नीयाद्दीर्घं ह्रस्वं च वर्जयेत्[9] ॥
उदङ्मुखः प्राङ्मुखो वा [10]सुखासीनोऽथ वाग्यतः ।
कामं यथेष्टं हृदये कृत्वा [11]समभिमन्त्र्य च ॥

प्रियङ्गु सेवमानस्य सौभाग्यं परमं भवेत् ।
अभीप्सितार्थसिद्धिः स्यान्नित्यं प्लक्षनिषेवणात् ॥
बदर्यां च बृहत्यां च क्षिप्रं रोगात्प्रमुच्यते ।
ऐश्वर्यं च भवेद्बिल्वे खदिरे धनसंचयः ।
शत्रुक्षयं कदम्बे च अर्थलाभोऽविमुक्तये ॥

न पाटितं etc.

1 शत्रुकक्षयकरं देव—ना.
2 आढरूषश्च—ना.
3 मृद्भवे—ना.
4 अश्वत्थो गच्छते शमः—ना.
5 सुव्रणम्—ना.
6 न चार्धभुक्तं—ना ; न चार्धशुष्कं—हे.
7 शुक्लं—हे.
8 त्वग्निवर्जितम्—ना, हे.
9 विवर्जयेत्—उ, हे.
10 समासीनोऽथ—हे.
11 समतिमन्त्र्य—ना.

मन्त्रेणानेन मतिमानश्नीयाद्दन्तधावनम् ।
[1]वरदं त्वाभिजानामि कामदं च वनस्पते ॥
सिद्धिं प्रयच्छ मे नित्यं दन्तकाष्ठ नमोऽस्तु ते ।
[2]त्रीन् वारान् परिजप्यैवं भक्षयेद्दन्तधावनम् ॥
पश्चात् प्रक्षाल्य तत्काष्ठं शुचौ देशे [3]विनिक्षिपेत् ।
ऊर्ध्वे निपतिते सिद्धिस्तथा [4]वाभिमुखे स्थिते ॥
अतोऽन्यथा निपतितमानीय पुनरुत्सृजेत् ।
[5]पराङ्मुखं यदि भवेत्त्रीन् वारान् दन्तधावनम् ॥
असिद्धिं तु विजानीयान्न ग्राह्या सा तु सप्तमी ।
ब्रह्मचारी तु तां रात्रिं [6]सुप्यान्मङ्गल्यसेवया ॥
[7]बिभ्रद्वासोऽनुपहतं शुचिराचारसंयुतः ।
तस्यां राज्यां व्यतीतायां प्रातरुत्थाय वै खग ॥
प्रक्षालयेन्मुखं धीमानश्नीयाद्दन्तधावनम् ।
उपविश्य शुचिर्भूत्वा प्रणम्य शिरसा रविम् ॥
जपं[8] यथेष्टं कृत्वा तु जुहुयाच्च हुताशनम् ।
ततोऽपराह्णसमये स्नात्वा शृङ्गोद्भवाम्बुभिः ॥
विधिपूर्वमुपस्पृश्य मौनी शुक्लाम्बरः शुचिः ।
पूजयित्वा तु [9]विधिवद्भक्त्या देवं दिवाकरम् ॥

1 वरं दत्वाभिजानामि—हे.
2 त्रीन् तथा—हे.
3 विविक्षिपेत्—हे.
4 चातिमुखे स्थिते—उ; वाभिमुखस्थिते—हे.
5 पुनस्तथा निपतितं तथथा दन्तधावनम्—हे.
6 स्वप्यात्—ना, हे.
7 बिभ्रद्वास्तेऽनुपहतं—ना.
8 नयं—उ.
9 विधिना भक्त्या—हे.

स्वपेद्देवस्य पुरतो गायत्रीजपतत्परः ।
अतः परं प्रवक्ष्यामि यैर्यैर्यत्फलमादिशेत् ॥
[1]स्वप्ने दृष्टैस्तु सप्तम्यां पुरुषो नियतव्रतः ।
समाप्य विधिवत् सर्वां जपहोमादिकां क्रियाम् ॥
भूमौ शय्यां समास्थाय देवदेवं विचिन्तयेत् ।
[2]अत्र स्वप्ने यदि नरः पश्येदुद्यद्दिवाकरम् ॥
[3]शक्रध्वजं गजेन्द्रं वा तस्य सर्वाः समृद्धयः ।
वृषभं गजगोवत्स[4]वीणालोकाशनादिकान्[5] ॥
भृङ्गारममलादर्शकरकाप्तौ सुखोत्सवः ।
रुधिरस्य स्रुतिः[6] सेकः[7] परमैश्वर्यकारकः ॥
[8]सप्तवृक्षाधिरोहश्च क्षिप्रमैश्वर्यमावहेत्[9] ।
दोहनं महिषीसिंही[10]गोधेनूनां करे स्वके ॥
बन्धश्चासां राज्यलाभो [11]नाभिस्पर्शो तु दुर्गतिः ।
अभिपत्य स्वयं खादेत् सिंहं गां भुजगानपि ॥
स्वाङ्गमस्थि हुताशं च सुरापानं तथा खग ।
वा राजते वापि[12] यो भुङ्क्ते पायसं नरः ॥

1 स्वप्नैः—हे.
2 अत्र सुप्तो—हे ; हंससुप्तो—उ.
3 शक्रध्वजं वा चन्द्रं वा—हे.
4 वस्त्र for वत्स—ना.
5 लोकाननामयान्—हे ; लोकाशनादयः—ना.
6 श्रुतिः—ना, उ, हे.
7 शोकः—उ.
8 शस्त for सप्त—उ.
9 आहरेत्—उ.
10 गन्धर्वानां—हे ; वन्याश्वासां—उ.
11 लाभस्तु द्युमणेर्गतिः—हे ; द्रुमनिर्गतः—ना, लाभस्तु द्रुमनिर्गतिः
12 वापि च वादे वा—हे.

पात्रे तु पद्मपत्रे वा तस्यैश्वर्यं परं भवेत् ।
द्यूते वाप्यथवा युद्धे विजयो हि सुखावहः ॥
[1]गात्रप्रक्ष्वेडनं चापि शिरोवेधश्च भूतये ।

'गात्रप्रक्ष्वेडनम्' अङ्गसंधिशब्दः ॥

[2]माल्याम्बराणां [3]शुक्लानां [4]हयानां [5]पशुपक्षिणाम् ॥
सदा लाभं प्रशंसन्ति तथा विष्ठानुलेपनम् ।
हययाने भवेत्क्षेमं रथयाने प्रजागमः ॥
[6]नानाशिरोबाहुता च हस्तस्थां [7]कुरुताच्छ्रियम् ।
अगम्यागमनं [8]पुण्यं [9]वेदाध्ययनमुत्तमम् ॥
[10]देवद्विजजना वीरगुरु[11]वृद्धतपस्विनः ।
यद्वदन्ति [12]नरान् स्वप्ने सत्यमेवेति तद्विदुः ॥
प्रशस्तं दर्शनं तेषामाशीर्वादः खगाधिप ।
राजा[13] स्यात्स्वशिरच्छेदे धनं [14]बहुतरं भवेत् ॥
रुदिते भक्ष्यसंप्राप्ती राज्यं निगडबन्धने ।

1 गात्रस्य च प्रज्वलनं—हे.
2 माल्यासुराणां—उ.
3 भुक्तानां—ना.
4 धारणं—हे.
5 गण्डपक्षिणाम्—उ.
6 नानाशिरोभक्षणाच्च—हे; नानाशिरोवहन्ता च—ना, उ.
7 कुरुते श्रियम्—हे; कुरुतात्प्रियम्—ना.
8 लब्धं—हे; धन्यं—उ.
9 वेदाध्यापनमुत्तमम्—उ.
10 वेदद्विजानना:—उ; देवा द्विजजना:—हे.
11 वृक्ष for वृद्ध—ना.
12 नरं—हे.
13 राज्यं—हे.
14 बहुधनं—ना.

पर्वतं तुरगं सिंहं वृषभं गजमेव हि ॥
महदैश्वर्यमाप्नोति [1]यो विक्रम्याधिरोहति ।
[2]ग्रसमानो ग्रहांस्तारा महीं च [3]परिवर्तयेत् ॥
उन्मूलयन् पर्वतांश्च राजा भवति भूतले ।
[4]देहान्निष्क्रान्तिरन्त्राणां वेष्टनं च खगाधिप ॥
यानं समुद्रसरितामैश्वर्यसुखकारणम्[5] ।
सरितं चाम्बुधिं वापि तीर्त्वा पारं प्रयाति च[6] ।
[7]तस्य लाभो भवेद्वीर सकलं कमलोपमम् ।
अद्रिं लङ्घयतश्चापि भवत्यर्थो जयस्तथा ॥
मांसमामं तथा विष्ठां फलं नानाविधं खग ।
भवत्यर्थागमः शीघ्रं कृमीन्वा यदि भक्षयेत् ॥
[8]अङ्गनानां [9]कुरूपाणां लाभो दर्शनमेव च ।
संयोगश्चैव माङ्गल्यैरारोग्यं धनमेव च ॥
ऐश्वर्यं राज्यलाभो वा यस्मिन् स्वप्न उदाहृतम् ।
तत्र स्यान्नास्ति[10] संदेहस्तैस्तैर्दृष्टैर्न संशयः ॥
दृष्ट्वा[11] तु शोभनं स्वप्नं न भूयः [12]शयनं व्रजेत् ।

1 विमानं योऽधिरोहति—हे.
2 श्वसमानो—उ.
3 परिवर्जयेत्—उ.
4 देहलीक्रान्तरत्नानां—हे ; देहान्निष्क्रान्तिचन्द्रानां—उ.
5 ०कारकम्—हे.
6 यः—हे.
7 तस्मै फलं भवेद्वीरः—हे.
8 उ reads अङ्गनानां स्वप्न उदाहृते for the next three lines.
9 स्वरूपाणां—ना.
10 नात्र for नास्ति—हे.
11 दृष्टया—ना.
12 स्मरणं—ना.

प्रातश्च कीर्तयेत् स्वप्नं यथादृष्टं खगाधिप ॥
प्राज्ञो[1] भोजकविप्रेभ्यः सुहृदां देवता‍ꣳ च[2] ।
ततो मध्याह्नसमये स्नातः प्रयतमानसः ॥
तं शिवं [3]देव विधिवत् पूजयित्वा दिवाकरम् ।
सम्यक् कृतजपो मौनी [4]ततो हुतहुताशनः ॥
निष्क्रम्य देवायतनाद्भोजयेद्ब्राह्मणांस्ततः ।
रक्तानि चैव वस्त्राणि [5]तथैव च सुगन्धयः ॥
सुगन्धिमाल्यानि[6] हविष्यमन्नं
पयस्विनीं गामपि वाचकाय ।
देयानि [7]यच्चास्य भवेदभीष्टं
भवेदलाभो यदि [8]वाचकानाम् ॥
विप्रास्तदार्हन्ति विशिष्टबुद्ध्या
[9]ये मन्त्रदेवा हुतपावका वै[10] ।
ये चापि सामाध्ययने नियुक्ता
यजुर्विदो वापि ऋचां विधिज्ञाः ॥
कृत्वैवं सप्त सप्तम्यो नरो भक्तिसमन्वितः ।
श्रद्दधानोऽनसूयश्च स कथं नाप्नुयात् फलम् ॥

1 प्राज्ञे—ना, हे.
2 वा—उ, हे.
3 तथैव देवं—हे.
4 नरो—उ.
5 तथा चैव—हे.
6 सुगन्धमाल्यानि—उ.
7 यावच्च—हे.
8 वाचकाय—ना.
9 ये मन्त्रवेदाहुतपावकाः—हे.
10 ये for वै—उ.

दशानामश्वमेधानां कृतानां यत्फलं [1]भवेत् ।
तत्फलं सप्तसप्तम्यां कृत्वा प्राप्नोति मानवः ॥
दुष्प्रापं नास्ति तद्वीर [2]सप्तम्यां यन्न लभ्यते ।
न च रोगोऽस्त्यसौ लोके य एताभिर्न शाम्यति ॥
[3]कुष्ठानि यानि रौद्राणि [4]दुश्छेद्यानीह यानि तु ।
[5]ग्रस्यन्ते तानि सर्वाणि गरुडेनेव पन्नगाः ॥
व्रतनियमविशेषैः सप्तमीसप्त चैवं
विधिवदिह हि कृत्वा मानवो धर्मशीलः ।
[6]श्रुतधनफलयोगैः [7]सौख्यपुण्यैरुपेतो
व्रजति तदनु लोकं शाश्वतं तीक्ष्णरश्मेः ॥[8]
[9]अतः परं प्रवक्ष्यामि पुष्पधूपादि कामिकम् ।
येन येन तु दानेन तत्फलं समवाप्यते ॥
✓ मालतीकुसुमैः पूजा भवेत् सान्निध्यकारिणी[10] ।
आरोग्यं करवीरैश्चाप्यैश्वर्यमतुलं तथा ॥
मल्लिकायास्तु कुसुमैर्भोगवान् साधको भवेत् ।
सौभाग्यं पुण्डरीकैस्तु भवत्यर्थस्तु[11] शाश्वतः ॥

1 लभेत्—हे.
2 सप्तम्यामनुलभ्यते—उ.
3 कुलानि—हे.
4 दुःस्थितानीह—हे.
5 शाम्यन्ते—हे.
6 शत for श्रुत—ना.
7 सौम्य for सौख्य—ना.
8 Hemādri ends: एष दन्तधावनादिब्राह्मणभोजनान्तः सप्तानां सप्तमीनां सामान्यविधिः । इति भविष्यत्पुराणोक्तसिद्धार्थकादिसप्तमीव्रतम् ॥
9 भवि. पु., ब्राह्मपर्व, अ. १९७, श्लो. १-११.
10 सान्निध्यकारिका—उ.
11 च for तु—उ.

गन्धकुब्जकपुष्पैस्तु परमैश्वर्यमश्नुते ।
कमलोत्पलगन्धैस्तु [1]यशोऽपि विमलं लभेत् ॥
नानाविधैर्मुकुरकैः क्षिप्रं रोगात् प्रमुच्यते ।

'मुकुरकैः' [2]विचकलैः ॥

[3]भवत्यक्षय्यमन्नं च नित्यमर्चयतो रविम् ॥
मन्दारकुसुमैः पूजा सर्वकुष्ठविनाशिनी ।
तथा बिल्वस्य कुसुमैर्महतीं श्रियमश्नुते ॥
अर्कपुष्पैर्भवत्यर्कः [4]सर्वदा वरदः प्रभुः ।
[5]प्रदाय रूपिणीं कन्यामर्चतो बकुलस्रजा ॥
किंशुकैः पूजितो देवो न पीडयति भास्करः ।
अगस्त्यकुसुमैः सिद्धिमानुकूल्यं प्रयच्छति ॥
स्त्रियं रूपवतीं दद्यात् पूजितः पङ्कजैः सदा ।
निरुद्वेगो भवेन्नित्यं [6]पूजयन् वनमालया ॥
अशोककुसुमैर्देवमर्चयेद्यो दिवाकरम् ।
न स मोहमवाप्नोति कदाचिदपि मानवः ॥
जपापुष्पैर्निरायासं कुर्यादभ्यर्चितो रविः ।
भक्त्या तुष्यति देवेशः किमन्यैर्वा प्रयोजनम् ॥
न कण्टकारिकापुष्पैर्न चैवोन्मत्तकोद्भवैः ।
न चाम्रातकजैः पुष्पैरर्चनीयो दिवाकरः ॥
आम्रातकस्य कुसुमं निर्माल्यमिव दृश्यते ।

1 यशोविद्याबलं लभेत्—उ.
2 विचकिलैः—ना ; विवकलैः—उ.
3 भवेत्प्रक्षोप्यमन्नं च—ना.
4 सर्वदो—उ.
5 प्रदद्याद्—उ ; प्रदत्वा—ना.
6 पूजितो वनमालिना—ना.

अप्रत्यग्रं बहिर्यस्मात् तस्मात्तत् परिवर्जयेत् ॥
नाविज्ञातं प्रदातव्यं न म्लानं[1] न च दूषितम्[2] ।
न च पर्युषितं चैव[3] दातव्यं भूतिमिच्छता ॥
देवमुन्मोचयेद्यस्तु तत्क्षणात् पुष्पलोभतः ।
पुष्पाणि च सुगन्धीनि [4]भोजको नेतराणि तु ॥
ब्रह्महत्यामवाप्येह भोजको [5]लोभमोहितः ।
महारौरवमासाद्य पच्यते[6] शाश्वतीः समाः ॥
हन्त ते कीर्तयिष्यामि धूपदानविधिं परम् ।
प्रदानाद्देवदेवस्य येन धूपेन यत्फलम् ॥
सदा चन्दनधूपेन सान्निध्यं कुरुते रविः ।
प्रदद्यात् सन्निधिं चैव यद्यदिच्छति मानवः ॥
तथैवागरुधूपेन वरान् दद्यादभीप्सितान् ।
आरोग्यार्थी च पुरुषो सर्वदा गुग्गुलुं दहेत् ॥
पिण्डाङ्गधूपदानेन सदा तुष्यति भास्करः ।

'पिण्डाङ्गः' सिह्लकः ॥

आरोग्यं च श्रियं दद्यात् सौभाग्यं परमं भवेत् ॥
सदा कुन्दकधूपेन सौभाग्यं लभते नरः ।

'कुन्दकः'[7] सल्लकीनिर्यासः ॥

श्रीवासकस्य धूपेन वाणिज्यं सफलं भवेत् ॥

1 म्लानं—उ.
2 भूषितम्—उ.
3 माल्यं f61 चैव—उ.
4 भाजको—ना.
5 सोममोहितः—उ.
6 पच्यते—ना.
7 सल्यकीनिर्यासः—उ ; शल्लकीनिर्यासः—ना.

[1]रसं सर्जरसं चैव दहतोऽर्थागमो भवेत् ।

'श्रीवासः' सरलः । 'रसो' बोलः ॥

देवदारुं च दहतो भवत्यनुपमाक्षयः ॥

विलेपनं कुङ्कुमेन सर्वकामप्रदं भवेत् ।

इह लोके सुखी भूत्वा दाता स्वर्गमवाप्नुते ॥

चन्दनस्य प्रदानेन सर्वं दद्याद्दिवाकरः ।

अपि रोगशतैर्ग्रस्तः क्षिप्रमारोग्यमश्नुते ॥

वर्तिगन्धैश्च सौभाग्यं परमं विन्दते नरः ।

[2]कस्तूरिकाचन्दनकैरैश्वर्यमतुलं लभेत् ॥

[3]संपूज्य विधिवद्देवं पुष्पधूपादिभिर्नरः[4] ।

[5]यथाशक्ति ततः पश्चान्नैवेद्यमुपकल्पयेत् ॥

पुष्पाणां प्रवरा जाती धूपानां [6]कुन्दको वरः ।

गन्धानां कुङ्कुमं श्रेष्ठं लेपानां [7]चन्दनं वरम् ॥

दीपदाने घृतं श्रेष्ठं [8]मोदकाश्च निवेदने ।[9]

एवं संपूज्य विधिवत् कृत्वा चापि प्रदक्षिणम् ॥

प्रणम्य शिरसा देवं भास्करं तिमिरापहम् ।

1 रसं च सर्जमपरं—ना.

2 कस्तूरिकादमनकैः—उ.

3 हे. व्र. I., ६८५–६८६ ; भवि. पु., ब्राह्मपर्व., अ. १९८, श्लो. १८–२५.

4 बुधः for नरः—हे.

5 यथाशक्त्या—ना.

6 विजयः परः—हे ; कन्दकुर्धरः—ना ; कन्दुकुर्वरः—ना.

7 रक्तचन्दनम्—हे.

8 नैवेद्यं मोदकं परम्—हे.

9 Hemādri adds a line after this: एतैस्तुष्यति देवेशः सान्निध्यं चापि गच्छति ॥

आरुह्य कार्बुरं यानं [1]याति भानोः सलोकताम् ॥

'कार्बुरम्' सौवर्णम् ॥

[2]पुनः संपूज्य देवेशं जपं कुर्याद्यथेष्टकम् ।

हुताशनं च जुहुयाद्विधिदृष्टेन कर्मणा ॥

पूर्वमेकैकशः कार्याः सप्तम्यः सप्त सर्वदा ।

## [उदकसप्तमी]

[3]उदकप्रसृतिं[4] पीत्वा क्रियते या तु सप्तमी ॥

सा ज्ञेया सुखदा वीर सदैवोदकसप्तमी ।[5]

## [वराटिका सप्तमी]

[6]या काचित् सप्तमी प्रोक्ता ततो वक्ष्यामि शोभनाम् ॥

वराटिकात्रयेणान्नं[7] यत्किंचित् [8]प्राप्नुयान्नरः ।

अनेन देहि मूल्येन यल्लब्धं [9]तत्तु भक्षयेत् ॥

अभक्ष्यं वापि भक्ष्यं वा नात्र कार्या विचारणा ।[10]

इति सिद्धार्थकादिसप्तमी-उदकसप्तमी-
वराटिकासप्तमी च ॥

1 देवदेवं दिवाकरम्—हे.

2 Hemādri omits the following three lines but adds some more verses; cf. pages: ६८५–६८७.

3 हे. व्र. I., ७२६.

4 प्रभृतिं for प्रसृतिं—हे.

5 Hemādri adds: इति भविष्यत्पुराणोक्तमुदकसप्तमीव्रतम् ।

6 हे. व्र. I., ७२६.

7 ०त्रयक्रीत—हे.

8 प्राशयेन्नरः—हे.

9 तच्च—हे.

10 Hemādri adds:
अनेन विधिना कार्या वराकाह्वयसप्तमी ॥ इति भविष्यत्पुराणोक्तवराटिकासप्तमीव्रतम् ॥

## [गोमयादिसप्तमी]

[1]सुमन्तुरुवाच—

यः क्षिपेद्गोमयाहारः शुक्ला द्वादशसप्तमीः ।
राजेन्द्र [2]यावकाहारः शीर्णपर्णाशनोऽपि वा ॥
क्षीराशी चैकभोक्ता वा भैक्ष्याहारोऽथवा पुनः ।
जलाहारोऽथवा भूत्वा पूजयित्वा दिवाकरम् ॥
पुष्पोपहारैर्विविधैः पद्मसौगन्धिकोत्पलैः ।
नानाप्रकारैर्गन्धैस्तु धूपैर्गुग्गुलुचन्दनैः ॥
[3]कृसरापायसान्नाद्यैर्विचित्रैश्च विभूषणैः ।
अर्चयित्वा नरश्रेष्ठ हिरण्यान्नादिभिर्नरः ॥
[4]यत्फलं समवाप्नोति क्रतुभिर्भूरिदक्षिणैः ।
तदत्र[5] प्राप्यते वीर सप्तम्यां केवलं रवेः ॥
विमानवरमारूढः सूर्यलोके महीयते ।
ततः [6]पुण्यक्षयाद्राजा कुले महति जायते ॥
एवं भक्त्या विवस्वन्तं प्रतिमासं समाहितः ।
पूजयन् विधिवद्भक्त्या नामानीमानि कीर्तयेत् ॥
मधौ मासे विष्णुरिति माधवे चाऽर्यमेति च ।
[7]शुक्रे मासे विवस्वांश्च शुचौ मासे दिवाकरः ॥

1 हे. व्र. I. ७२४—७२६ ; भवि. पु. ब्राह्मपर्व, अ. २०९, श्लो. १–१४.

2 याचकाहारः—हे.

3 शर्करापायसाद्यैश्च—हे.

4 न तत्फलमवाप्नोति—उ.

5 यदात्र—ना.

6 पुण्यकृतां राजन्—हे.

7 भुक्ते मासे विवस्वांश्च—ना ; शुक्रे विवस्वान् माघे च—उ ; शुक्रे विवस्वान् मासे च—हे.

पर्जन्यः श्रावणे मासि नभस्ये वरुणस्तथा ।
[1]मित्रश्चाऽऽश्वयुजे मासि कीर्तनीयो दिवाकरः ॥
मार्तण्डोऽपि च विज्ञेयः कार्तिके काञ्चनप्रभः ।
मार्गशीर्षे [2]कुजः प्रोक्तः सर्वपापविनाशनः ॥
[3]पूषा पौषे तु वै मासि पूजनीयः प्रयत्नतः ।
माघे भगोऽथ विज्ञेयस्त्वष्टा चैवाथ फाल्गुने ॥
एवं क्रमेण नामानि कीर्तयेत् प्रीतये रवेः ।
धूपार्चनविधानं तु सप्तम्यां [4]सुसमाहितः ॥
यः करोति नरो भक्त्या स याति परमां गतिम् ।
तेजसा [5]रविसंकाशः प्रभयाऽमरसन्निभः[6] ॥
एतत्ते सर्वमाख्यातं [7]श्रृण्वतः पापनाशनम् ।
न [8]च देयमशिष्याय नाऽभक्ताय कदाचन ॥
न च पापकृते देयं नाऽतप्ततपसेऽपि वा ।
[9]कृतघ्ने नास्तिके वीर न देयं क्रूरकर्मणे ॥

[10]इति गोमयादिसप्तमी ॥

1 चित्र for मित्र—ना.

2 रविः—हे.

3 पुष्यमासे तु पूषेति विज्ञेयः काञ्चनप्रभः—हे.

4 तु विधानतः—हे.

5 हरिसंकाशः—हे.

6 रविसंनिभः—हे.

7 श्रृणु तत्—हे.

8 वदेच्च ह्यशिष्याय—हे.

9 न कृष्णे—हे.

10 इति गोमयादिसप्तसप्तम्यः—ना, उ; इति भविष्यत्पुराणोक्तं गोमयादिसप्तमीव्रतम्—हे.

# [सर्षपसप्तमी]

[1]ब्रह्मोवाच—

संपूज्य विधिवद्देवं पुष्पधूपादिभिस्तथा[2] ।
[3]यथाशक्ति ततः पश्चान्नैवेद्यं शक्तितो न्यसेत् ॥
पुष्पाणां प्रवरा जाती धूपानां विजयः परः ।
गन्धानां कुङ्कुमं श्रेष्ठं लेपानां रक्तचन्दनम् ॥
दीपदाने घृतं श्रेष्ठं नैवेद्यं मोदकं परम् ।
दत्तैरेतैस्तु[4] देवेशः सान्निध्यं चापि गच्छति ॥
एवं संपूज्य विधिवत् कृत्वा चापि प्रदक्षिणम् ।
प्रणम्य शिरसा देवं देवदेवं दिवाकरम् ॥
सुखासीनस्ततः [5]पश्येद्रवेरभिमुखस्थितः ।
एवं सिद्धार्थकं [6]कृत्वा हस्ते [7]पानीयसंयुतः ॥
कामं यथेष्टं हृदये कृत्वा तद्वाञ्छितं नरः ।
[8]पिबेत् संतोषयन् विप्रमस्पृशन् दशनैः सकृत् ॥
द्वितीयायां तु सप्तम्यां द्वौ [9]गृहीत्वा च सुव्रत ।
तृतीयायां तु सप्तम्यां पातव्यास्त्रय एव तु ॥
चतुर्थ्यां चापि चत्वारः पञ्चम्यां पञ्च एव हि ।

1 हे. व्र. I. ६८५—६८७; भवि. पु., ब्राह्मपर्व, अ. ६८, श्लो. २७-४२.
2 बुध: for तथा—हे.
3 The following two lines are omitted by उ.
4 एतैस्तुष्यति—हे.
5 पश्येद्रवेरतिसुखस्थितः—ना.
6 तुभ्यं—ना; भुक्त्वा—उ.
7 यानोपसंयुते—ना.
8 Hemādri comments: रात्राविति शेषः।
9 गृहीतुं—ना.

षट् पिबेच्चापि षष्ठ्यां तानितीयं वैदिकी श्रुतिः ॥
सप्तम्यां वारिसंयुक्तान् सप्त चैव पिबेन्नरः ।[1]
आदिप्रभृति विज्ञेयो मन्त्रोऽयमभिमन्त्रणे ॥
सिद्धार्थक त्वं लोके हि सर्वत्र [2]श्रूयसे सदा ।
तथा मामपि सिद्धार्थमर्थानां कुरुतां रविः ॥
ततो हविरुपस्पृश्य [3]जपं कुर्याद्यथेप्सितम् ।
हुताशं चैव जुहुयाद्विधिदृष्टेन कर्मणा ॥
एवमेताः पराः कार्याः सप्तम्यः सप्त सर्वदा ।[4]
उदकप्रभृतिर्यावत् पञ्चगव्येन सप्तमी ॥
[5]एकं तोयेन सहितं द्वौ चापि घृतसंयुतौ ।
[6]तृतीयं मधुना सार्धं [7]दध्नापि च चतुष्टयम् ॥
युक्तास्तु[8] पयसा पञ्च षट्सु गोमयसंयुताः ।
पञ्चगव्येन वै सप्त पिबेत् सिद्धार्थकं द्विजः ॥
अनेन विधिना यस्तु कुर्यात् सर्षपसप्तमीम् ।
बहुपुत्रो बहुधनः सिद्धार्थश्चापि सर्वदा ॥
इह लोके नरो विप्रः प्रयाति च विभावसुम् ।

## [9]इति सर्षपसप्तमी

1 Hemādri comments : वारिशब्दः द्रववाची, पञ्चगव्यस्य वक्ष्यमाणत्वात् ।

2 श्रुतये—ना.

3 जलं—उ.

4 Hemādri comments : एवमर्कसंपुटाद्येकोत्तरवृद्ध्या पराः षट् सप्तम्यः प्रत्येकं कार्याः । तन्मन्त्रास्तु वक्ष्यमाणास्वर्कसप्तमीषूक्ता विज्ञेयाः ।

5 एवं च योनिसहितं—ना.

6 द्वितीयं—ना.

7 दध्नामपि—ना.

8 मुक्तास्तु—ना.

9 इति भविष्यत्पुराणोक्तानि सर्षपसप्तमीव्रतानि—है.

## [सप्तसप्तमीकल्पः]

[1]सुमन्तुरुवाच—

स्वयं याः कथिता पूर्वमादित्येन खगस्य तु ।
अरुणस्य महाबाहोः सप्तम्यः सप्त पूजिताः ॥
अर्कसंपुटकैरेका द्वितीया मरिचैस्तथा ।
तृतीया निम्बपत्रैस्तु चतुर्थी फलसप्तमी ॥
अनोदना[2] पञ्चमी स्यात् षष्ठी विजयसप्तमी ।
सप्तमी [3]कामिकी ज्ञेया विधिं तासां निबोध मे ॥
शुक्लपक्षे रविदिने प्रवृत्ते चोत्तरायणे ।
पुंनामधेयनक्षत्रे [4]गृह्णीयात् सप्तमीव्रतम् ॥
सर्वासु ब्रह्मचारी स्याच्छौचयुक्तो जितेन्द्रियः ।
सूर्यार्चनपरो दान्तो जपहोमपरस्तथा ॥
[5]सप्तम्यामेकभक्तं तु कुर्यान्नियतमात्मवान्[6] ।
षष्ठ्यां न मैथुनं गच्छेन्मधुमांसं [7]विवर्जयेत् ॥
अर्कसंपुटकैरेकां तथाऽन्यां मरिचैर्नयेत् ।
तथापरां निम्बपत्रैः [8]फलाख्यां फललक्षिताम् ॥
[9]अनोदनां निराहार उपवासी यथाविधि ।
अहोरात्रं वायुभक्षः कुर्याद्विजयसप्तमीम् ॥

1 हे. व्र. I. ६८७—६९० ; भवि. पु., ब्राह्मपर्व, अ. २०८, श्लो. २–३२.
2 अनोदका—ना.
3 कामिनी—ना.
4 गृहीत्वा—हे.
5 पञ्चम्याम् for सप्तम्याम्—हे.
6 नियतमानसः—हे.
7 च वर्जयेत्—हे.
8 फलाख्यां फलभक्षणात्—हे.
9 अनोदनां निराहारमुपासीनो—उ.

तथैताः सप्त कृत्वा तु प्रतिमासं विचक्षणः ।[1]
कुर्याद्विधानं विधिवत् ततः कुर्वीत कामिकीम् ॥
आसां [2]लिखित्वा नामानि पत्रकेषु पृथक् पृथक् ।
तानि सर्वाणि पत्राणि [3]क्षिपेदभिनवे घटे ॥[4]
तदर्थं यो न जानीते [5]बालोऽबालोऽपि वा नरः ।
तेनाभ्युद्धारयेदेकं तत्कुर्यादविचारयन् ॥
तेनैव विधिना या तु प्रतिमासं परंतप ।
सप्तैव यावत्संप्राप्ता विज्ञेया सात्र कामिकी ॥
इत्येताः सप्त सप्तम्यः स्वयं प्रोक्ता विवस्वता ।
कुर्वीत यो नरो भक्त्या स यात्यर्कसदो नृप ॥
अर्कसंपुटकैर्वित्तममलं साप्तपौरुषम् ।
मरीचैः संगमः स्याद्वै प्रियपुत्रार्थिनः सदा ॥
सर्वे रोगाः प्रशाम्यन्ति निम्बपत्रैर्न संशयः ।
फलैश्च पुत्रपौत्रैश्च दौहित्रैश्चापि पुष्कलैः ॥
[6]अनोदनात्तथा धान्यं सुवर्णं रजतं तथा ।
तथा यशो हिरण्यं वाऽऽरोग्यं संततिरेव च ॥
उपोष्य विजयां शत्रून्[7] राजा जयति नित्यशः ।

1 Hemādri commets: एताः षट् प्रत्येकं सप्त कृत्वेत्यर्थः ।

2 गृहीत्वा—हे.

3 क्षिपेदभिमुखे नरे—ना.

4 Hemādri adds the following three lines after this:
श्वेतचन्दनदिग्धाङ्गे माल्यदामोपशोभिते ।
धनधान्यहिरण्याढ्यैः शुद्धकुन्देन्दुसन्निभैः ॥
अश्वत्थाशोकपत्राढ्यैर्दध्योदनसमन्वितैः ॥

5 बालो वान्योऽपि वा नरः—उ, हे.

6 अनोदनाद्धनं धान्यं—हे; अनोदनं तथा धान्यं—उ; अनोदनं तथा दानं—उ.

7 कद्रून्—ना.

साधयेत् कामदान् कामान् विधिवत् [1]पर्युपोषिताः ॥
पुत्रकामो लभेत्पुत्रमर्थकामोऽर्थमक्षयम् ।
विद्याकामी लभेद्विद्यां राज्यार्थी राज्यमाप्नुयात् ॥
हृत्स्थान् कामान् ददात्येषा कामदा कुलनन्दन ।
नरो वा यदि नारी वा यथोक्तं सप्तमीव्रतम् ॥
करोति नियतात्मा वै स याति परमां गतिम् ।
मोहात् प्रमादाल्लोभाद्वा व्रतभङ्गो भवेद्यदि ॥
तदा त्रिरात्रं नाश्नीयात् कुर्याद्वा केशमुण्डनम् ।
प्रायश्चित्तमिदं कृत्वा पुनरेव व्रती भवेत् ॥
सप्तैव यावत्संप्राप्ताः सप्तम्यः सप्त संयुताः ।[2]
अभ्यर्च्य सूर्यं सप्तम्यां माल्यधूपादिभिर्नरः ॥
भोजयित्वा द्विजान् भक्त्या प्राप्नुयात् स्वर्गमक्षयम् ।
सप्तम्यां विप्रमुख्येभ्यो हिरण्यं यः प्रयच्छति ॥
स तदक्षयमाप्नोति सूर्यलोकं च गच्छति ।

[इति सप्तसप्तमीकल्पः]

## [अर्कसंपुटसप्तमी]

[3]सुमन्तुरुवाच—

इत्येवं सप्तमीकल्पः समासात् कथितस्तव ।
विस्तरात्तु[4] पुनर्वक्ष्मि शृणुष्वैकमना भृशम् ॥
फाल्गुनामलपक्षस्य षष्ठ्यां सम्यगुपोषितः ।

1 पर्युपासिताः—उ, हे

2 Hemādri comments: सप्तसंयुताः सप्तगुणिता एकोनपञ्चाशदित्यर्थः । इति भविष्यत्पुराणोक्तः सप्तसप्तमीकल्पः.

3 हे. व्र. I. ६९०—६९६; भवि. पु. ब्राह्मपर्व, अ. २१०, श्लो. १—८१.

4 विस्तरं ते—हे.

पूजयेद्भास्करं [1]भक्त्या पुष्पगन्धादिलेपनैः ॥
अर्कपुष्पैर्महाबाहो गुग्गुलेन सुगन्धिना ।
सितेन [2]धूपयेद्देवं चन्दनेन दिवाकरम् ॥
गुडोदनं च नैवेद्यं [3]फलानां त्रितयं रवेः ।
एवं पूज्य दिवा भानुं रात्रौ तस्याग्रतः स्वपेत् ॥
जपेद्भूमौ परं जप्यं [4]निद्रां च मात्यगाद्बुधः ।
ध्यायमानो महात्मानं देवदेवं [5]दिवाकरम् ॥
षडक्षरेण मन्त्रेण [6]कुर्यात् सर्वं समाहितः ।
जपं होमं तथा पूजां [7]शतजप्तेन सर्वदा ॥
सावित्र्यास्तु जपं पूर्वं कृत्वा शतसहस्रशः ।
पश्चात् सर्वं प्रकुर्वीत जपादिकमनाकुलः ॥
श्रेयोऽर्थमात्मनो वीर [8]प्रीतये भास्करस्य तु ।

"ओं भास्कराय विद्महे [9]सहस्ररश्मये धीमहि तन्नः सूर्यः प्रचोदयात्" इति सावित्री ॥

जप एष परः प्रोक्तः सप्तम्यां भानुना स्वयम् ॥
जप्त्वा सकृद्भवेत्पूतो मानवो नात्र संशयः ।
प्रभाते त्वथ सप्तम्यां स्नातो नियतमानसः ॥
पूजयेद्भास्करं भक्त्या पूर्वोक्तविधिना नृप ।

1 स्नात्वा—हे, उ.
2 भूषयेद्देवं—हे.
3 स्यान्नैवेद्यं प्रीतये रवेः—उ.
4 आनिद्रागमनाद्बुधः—हे ; निद्रां च मात्यगाद्बुधः—उ.
5 जगद्गुरुम्—ना.
6 जपपूजां समाहितः—हे.
7 शतशब्देन—हे.
8 धनपुत्रार्थसिद्धये—हे.
9 सहस्ररश्मि—हे.

श्रद्धया भोजयेच्चापि ब्राह्मणान् भक्तितो[1] नृप ॥
दिव्यैर्भोगैश्च विधिवद्भक्ष्यभोज्यैश्च नित्यशः[2] ।
वित्तशाठ्यं न कुर्वीत भोजनार्हांस्तु भोजयेत् ॥
स भोजयेत्तथा सौरान् सौरादन्यं न भोजयेत् ।
घटी भोज्यो भवेद्विप्रः [3]सप्तमीं कुरुते तु यः ॥
[4]सौरतन्त्रेष्वभिज्ञेयो यश्च भक्तो दिवाकरे ।
एते भोज्या द्विजा राजन्नादित्येन [5]समासतः ॥
प्रोक्ताः कुरुकुलश्रेष्ठ तथाऽभोज्यान् शृणुष्व मे ।
परभार्यापतिर्यस्तु कुष्ठरोगवहश्च यः ॥
यश्चान्यदेवताभक्तस्तथा नक्षत्रसूचकः ।
परापवादनिरतो यश्च देवलकस्तथा ॥
एते ह्यभोज्या विप्रेषु स्वयं देवेन निर्मिताः ।
घटते तु त्रयीं विद्यां ब्राह्मणानां कदम्बके ॥
[6]घटेत्युक्ता तु सा राजन् [7]स्वयं देवेन भानुना ।
सा घटा विद्यते यस्य स [8]घटीत्युच्यते द्विजः ॥
ब्रह्मक्षत्रविशां वीर शूद्राणां च कदम्बकम् ।
[9]शृण्वतां विधिवत्पुण्यं भक्त्या पुस्तकवाचनम्[10] ॥

1 शक्तितो—उ.
2 भास्करप्रीतये पुमान्—हे.
3 सप्तम्यां—ना, उ.
4 सौरतन्त्रेऽथ विज्ञेयो—उ ; सौरतन्त्रेषु कुशलः—दे.
5 समाहितः—ना.
6 घटेत्युक्त्वा—ना, उ.
7 अतः सानुघटा स्मृता—हे.
8 घटी प्रोच्यते—उ.
9 शृणुतां—ना, उ.
10 वाचकम्—ना.

इतिहासनिबन्धस्य [1]सा समस्येति भानुना ।
कथिता कुरुशार्दूल स्वयमाकाशगामिना ॥
तस्याः कर्ता भवेद्यस्तु समस्याकारको मतः ।
स विप्रो राजशार्दूल [2]संदेष्टा भास्करस्य तु ॥
[3]जयोपजीवी व्यासस्य समस्याजीवकस्तथा ।
यान्येतानि पुराणानि सेतिहासानि भारत ॥
जयेति कथितानीह स्वयं देवेन भानुना ।
एतानि[4] वाचयेद्यस्तु ब्राह्मणानुपजीवति ॥
जयोपजीवी स ज्ञेयो वाचकश्च [5]तथा नृप ।
[6]संपूज्यो यत्नतो भक्त्या[7] प्रीतये[8] भास्करस्य तु ॥
आरुणेयादिशास्त्राणि सप्ताश्वतिलकं तथा ।
यस्तु जानाति सौराणि स विप्रः सौरतन्त्रवित् ॥[9]
पूजयेत् सततं यस्तु पूजयेद्भास्करं नृप ।
स याति परमं स्थानं [10]यत्तत् पश्यन्ति सूरयः ॥
भोजकस्तु [11]सदा राजन् यथा देवो दिवाकरः ।
स ज्ञेयो भास्करेणोक्तो भोजनीयः प्रयत्नतः ॥

1 मा समस्येति—ना, उ.
2 स द्वेष्टि—हे.
3 जपोपजीवी व्यासस्य—ना.
4 शतानि—ना.
5 सदा—ना.
6 स पूज्यो—उ.
7 सप्ताश्वा यत्र नो भक्त्या—हे.
8 प्रीयते—उ.
9 Hemādri adds a line after this : जयोपजीवी व्यासस्य समस्याजीवकं तथा
10 यत्र—हे.
11 यथा—हे.

[1]भोजकं निन्दयेद्यस्तु [2]न तत्पूजयते तथा ।
ज्ञेयोऽन्यदेवताभक्तः स विप्रः [illegible]न ॥
मुण्डो व्यङ्गी तथा गौरः शङ्खपद्मधरस्तथा ।
[3]यस्य याति गृहाद्राजन् भोजको मानवस्य तु ॥
तस्य यान्ति गृहाद्देवाः पितरो भास्करस्तथा ।
ब्राह्मणो यश्च राजेन्द्र भृत्यकर्म करोति वै ॥
देवतायतनेष्वेव देवानां पूजनं तथा ।
साधिपत्यं भक्षणं च नैवेद्यस्य परं तथा ॥
स विज्ञेयो देवलको ब्राह्मणो ब्राह्मणाधमः ।
नाधिकारोऽस्ति विप्राणां भौमानां देवपूजने ॥
[4]भृत्या भरतशार्दूल साधिपत्ये विशेषतः ।
दे[illegible]षु सर्वेषु वर्जयित्वा शिवालयम् ॥[5]
द्वावेव सुप्रियौ राजन् भास्करस्य द्विजौ नृप ।
वाचको भोजकश्चैव तावेवोत्तमतां गतौ ॥
स्वयं गत्वा गृहं भक्त्या पाणिभ्यां पादमालभेत् ।
ब्रवीति च तथा विप्रं प्रसादं कुरु [6]मे विभो ॥

1 भोजनं—हे.

2 न च तं पूजयेत् तथा—हे.

3 The following two lines are omitted by ना.

4 भृत्या भरणशार्दूल—ना.

5 Hemādri adds the following lines after this :

देवानां पूजने राजन्नग्निकार्येषु वा विभो ।
अधिकारः स्मृतो राजन् लोकानां च न संशयः ॥
पूजयन्तस्तु देवांस्तु प्राप्नुवन्ति परां गतिम् ।
नैवेद्यं भुञ्जते यस्माद्भोजयन्तीव भास्करम् ॥
पूजयन्ति च वै देवान् दिव्यत्वं तेन ते गताः ।
पूजयित्वा तु वै देवान्नैवेद्यं भुञ्जते विभो ॥
यान्ति ते परमं स्थानं यत्र देवो दिवाकरः ।

6 ते for मे—उ.

भास्करप्रीतये वीर भोजनं भुङ्क्ष्व मे गृहे ।
येन मे तृप्यते देवस्त्वयि तृप्ते दिवाकरे ॥
ब्राह्मणाश्चापि तं ब्रूयात् क्षणे सति महामते[1] ।
एवं करिष्ये श्रेयोऽर्थमात्मनस्तव वा विभो ॥
इत्यामन्त्र्य ततो गच्छेत् स्वगृहं कुरुनन्दन ।
[2]तथा परेऽह्नि संपूज्य भक्त्या देवं दिवाकरम् ॥
[3]हुत्वाथ पावकं राजन् भोजयेद्ब्राह्मणांस्तथा ।[4]
शाल्योदनं तथा मुद्गान् सुगन्धं घृतमेव च ॥
अपूपान् गुडपूर्णांश्च पयो दधि तथा गुडम् ।
एतैस्तु तृप्तिमायाति भास्करो नव सप्त वा ॥
वर्षाणि [5]भरतश्रेष्ठ नात्र कार्या विचारणा ।
कुलत्थकान् मसूरांश्च तिलांश्चाढक्य एव च ॥
शिग्रुं चापि तथात्यर्थं राजमाषांस्तथैव च ।
एतान्न भास्करे [6]दद्याद्य इच्छेच्छ्रिय आत्मनः ॥
दुर्गन्धं यच्च कटुकमत्यम्लं भास्करस्य तु ।
विमिश्रांस्तण्डुलांश्चापि न दद्याद्भास्कराय वै ॥
इत्थं भोज्य द्विजान् राजन्[7] [8]प्राशयेदर्कसंपुटे ।
प्रणम्य शिरसा देवमुदकेन [9]समन्वितः ॥

1 महामुने—ना.
2 तथापराह्णसमये—हे.
3 कृत्वाथ—ना ; कृत्वा च—उ.
4 ततः—उ.
5 भारतश्रेष्ठ—ना.
6 दद्याद्यदीच्छेच्छ्रेय आत्मनः—हे.
7 द्विजान् सर्वान्—हे.
8 भक्षयेत्सर्वसंपुटम्—हे ; प्राशयेदर्कसंयुते—ना.
9 समन्वितम्—उ.

निष्क्रम्य नगराद्राजन् गत्वा पूर्वोत्तरां दिशम् ।
नात्युच्छ्रितं नातिनीचं शुचौ देशेऽर्कमुत्तमम् ॥
जातं दृष्ट्वा महाबाहो पूजयित्वा [1]खखोल्कतः ।[2]
पूर्वोत्तरगतायां या तस्य शाखा दिवं गता ॥
शाखायामग्रगे पत्रे सुसूक्ष्मे पल्लवास्तते ।
सुश्लिष्टे न पृथग्भूते गृहीत्वा गृहमाव्रजेत् ॥[3]
स्नातः पूज्य विवस्वन्तमर्कपुष्पैः खखोल्कतः ।
ब्राह्मणान् भोजयित्वा चाप्यर्को मे प्रीयतामिति ॥
प्राश्य मन्त्रेणार्कपुटं ततो भुञ्जीत वाग्यतः ।
देवस्य पुरतो वीर अस्पृशन् दशनैः पुटम् ॥
ॐ अर्कसंपुट भद्रं ते सुभद्रं [4]तेऽस्तु वै सदा ।
ममापि कुरु भद्रं वै प्राशनाद्वित्तदो भव ॥
इमं मन्त्रं जपेद्राजन् [5]स्मरन्नर्कं [6]महामते ।
स्थित्वा पूर्वमुखं [7]प्राज्ञो [illegible] सहितं नृप ॥
प्राश्य भुङ्क्ते च यो राजन् स याति [8]परमां गतिम् ।
अनेन विधिना भक्त्या कर्तव्या [9]सप्तमी सदा ॥
[10]वर्षं यावन्महाबाहो प्रीतयेऽर्कस्य [11]सर्वदा ।

1 यशोत्तम—ना.

2 Hemādri comments : 'खखोल्कत' इति खखोल्कमन्त्रेण । तद्यथा—'खखोल्काय नमः' इति—हे.

3 Hemādri comments : द्विवचनप्रयोगात् पत्रद्वयायतनं प्रतीयते ।

4 मेऽस्तु—हे.

5 जपन्नर्कं—हे.

6 महीपते—हे.

7 प्रह्वः—हे.

8 परमं पदम्—हे.

9 साप्तपौरुषम्—हे.

10 The following three lines are omitted by ना.

11 श्रद्धया—हे.

यश्चेमां सप्तमीं कुर्याद्भास्करप्रीतये नरः ॥
तस्याक्षयं भवेद्वित्तमचलं[1] साप्तपौरुषम् ।
कृत्वेमां सिद्धिमायातः कौथुमिः सामगः पुरा ॥
कुष्ठरोगाच्च वै मुक्तो जपन् [2]मासं महामते ।
बृहद्बल्कोऽथ जनको याज्ञवल्क्योऽथ कृष्णजः ॥

[3]'कृष्णजः' साम्बः ॥

अनया ह्यर्कमाराध्य [4]गता एतेऽर्कसाम्यताम् ।
इह[5] धन्यतमा पुण्या सप्तमी पापनाशिनी ॥
पठतां शृण्वतां राजन् कुर्वतां च विशेषतः ।
तस्मादेषा सदा कार्या विधिवच्छ्रेयसे नृप ॥
अर्कप्रिया महाबाहो महापातकनाशिनी ।

[6]इत्यर्कसंपुटसप्तमी ॥

## [निम्बसप्तमी]

[7]सुमन्तुरुवाच—

तृतीयां सप्तमीं वीर [8]शृणुष्व गदतो मम ।
निम्बपत्रैः स्मृता या तु पापघ्नी रोगनाशिनी[9] ॥

1 अबलं for अचलं—ना.
2 साम महामतिः—हे.
3 Comment reproduced by Hemādri.
4 गतोऽर्कसात्म्यतां नृप—हे.
5 इयं—हे.
6 इति भविष्यत्पुराणोक्तार्कसंपुटसप्तमीव्रतम्—हे.
7 हे. व्र. I., ६९७–७०१ ; भवि. पु., ब्राह्मपर्व, अ. २१५, श्लो. १–६ ; अ. २१६, १–२३.
8 शृणुष्वैकमना नृप—हे.
9 पापनाशिनी—हे.

[1]तथार्चनविधिं चान्यं येन पूजयते रविम् ।
देवदेवं गदापाणिं शङ्खचक्रगदाधरम् ॥
अथार्चनविधिं वच्मि [2]मन्त्रोद्धारं निबोध मे ।
सर्वपापहरं पुण्यं सर्वरोगविनाशनम् ॥

ओं [3]खखोल्काय नमः, इति मूलमन्त्रः । [4]ओं विटि विटि, शिरः । ओं ज्वालिने, इति शिखा । ओं सहस्ररश्मये फट्, कवचम् । ओं सर्वतेजोऽधिपतये फट्, अस्त्रम् । ओं सहस्रकिरणोज्ज्वलाय फट्, ऊर्ध्वबन्धः । ओं पृथिव्यै भूतभाविन्यै च नम, इति भूतबन्धः । ओं ज्वलनप्रज्वलनाय फट्, अग्निप्रकारः । ओं आदित्याय विद्महे [5]विश्वभावाय धीमहि तन्नः सूर्यः प्रचोदयात्, गायत्री[6]सकलीकरण-मिदम्[7] । ओं धर्मात्मने नमः, पूर्वतः । ओं यमाय नमः, दक्षिणतः । ओं [8]दण्डनायकाय नमः, पश्चिमतः । ओं [9]रोमन्थाय नमः, उत्तरतः । ओं [10]श्यामपिङ्गलाय नमः, ऐशान्याम् । ओं दीक्षिताय नमः, आग्नेय्याम् । ओं वज्र-

1 भव्यार्चनविधिं—ना.

2 मन्त्रोच्चारं—ना, उ.

3 खगोल्काय—ना ; खं खोल्काय—हे ; खषोल्काय—मु. भवि. पु.

4 ओं विव विव शिरः । ओं ज्वल ठ ठ शिखा । ओं सहस्रधाम्ने व कवचम् । ओं सर्वतेजोधिपतये अस्त्रम् । सहस्रकिरणोज्ज्वलाय व व जघनं, ओं भूतभव्ये भूतभाविन्यै व व भूत-बन्धः । ओं ज्वलनेत्र ज्वल प्रज्वलन ठ ठ अग्निप्रकारः—हे ; ओं विटि २ शिरः । ओं सहस्र-रश्मये अस्त्रम् । ओं सहस्रकिरणाय २०० ऊर्ध्वबन्धः । ओं घनाय भूतभाविने नमः इति भूत-बन्धः । ओं ज्वल २ प्रज्वल २ अग्निप्रकर ४ । ओं आदित्याय etc.—मु. भवि. पु.

5 विश्वभागाय—भवि. पु.

6 संकली for सकली—भवि. पु.

7 इत्थम् for इदम्—उ.

8 कुण्डनाथ कामाय—ना ; कालदण्डनायकाय—हे.

9 रैवताय—हे.

10 [illegible]—ना.

पाणये नमः, नैर्ऋत्याम्। ओं भूर्भुवस्वर्नमः, वायव्याम्। ओं चन्द्राय नक्षत्राधिपतये नमः, पूर्वतः। ओं अङ्गारकाय क्षितिसुताय नमः, आग्नेय्याम्। ओं बुधाय सोमसुताय नमः, [1]दक्षिणतः। ओं नमो वागीश्वराय सर्वविद्याधिपतये नमः, नैर्ऋत्याम्। ओं शुक्राय महर्षाय भृगुसुताय नमः, पश्चिमतः। ओं शनैश्चराय रविसुताय नमः, वायव्याम्। ओं राहवे नमः, उत्तरतः। ओं श्रीकेतवे नमः, ऐशान्याम्। ओं अनूरवे नमः, पूर्वतः। ओं प्रमथनाय नमः, उत्तरतः। ओं बुधाय नमः, पश्चिमतः। ओं यमाय नमः, दक्षिणतः। ओं भगवन्नपरिमितपूषमालिन् सकलजगत्पते सप्ताश्ववाहन चतुर्भुज परमसिद्धिद विस्फुलिङ्ग नमो एह्येहि इममर्घं मम शिरसि गतं गृहाण तेजोरूप अनन्तज्वलन ठ ठ, इत्यावाहनमन्त्रः। ओं नमो भगवते आदित्याय सहस्रकिरणाय गच्छ सुखं पुनरागमनाय, इति विसर्जनमन्त्रः ॥

शृणुष्वार्चा[2]विधिं [3]कृत्स्नं प्रवक्ष्याम्यनुपूर्वशः।
[4]दीक्षाणां च विधानं च लोकानां हितकाम्यया ॥
आचार्यो विधिवद्राजन् मन्त्रपूतेन वारिणा।
प्रोक्ष्य देवस्य पुरतो भूमिं भरतसत्तम ॥
प्राणायामत्रयं कुर्याच्छुद्ध्यर्थं सुसमाहितः।
हृदयादि तथाङ्गेषु मन्त्रं विन्यस्य मन्त्रवित् ॥
कुर्यात् स तर्जनीमुद्रां [5]दिशां च प्रतिशोधनम्।

1 The following two lines are omitted in the mss; दक्षिणाय—भवि. पु.
2 अत्र for अर्चा—हे.
3 कृष्ण—ना.
4 दीर्घायाश्च—हे.
5 दिशान्तं प्रतिशोधयेत्—हे; दिशां च यतिशोभनम्—ना.

पातालशोधनं वापि वह्निप्राकारमेव च ॥
शोधनं नभसश्चैव कुर्वीतास्त्र[1]मनुस्मरन् ।
[2]याम्यसौम्यौ तथा विष्णुर्ब्रह्मा ईशान अग्नयः ॥
रुद्रनैर्ऋत्यवायव्याः पद्ममेतत् प्रकीर्तितम् ।
अष्टपत्रं लिखेत्पद्मं [3]सूर्योद्देशे सकर्णिकम् ॥
आवाहनं [4]ततः कृत्वा मुद्रामावाहयेद्रविम् ।
खखोल्कं स्थापयेत्तत्र [5]सुरूपं लोकभावनम् ॥
स्थापयेत् स्नापयेच्चापि[6] मन्त्रैर्मन्त्रशरीरिणम् ।
[7]आग्नेय्यां दिशि देवस्य हृदयं स्थापयेन्नरः ॥
ऐशान्यां तु शिरः स्थाप्य नैर्ऋत्यां विन्यसेच्छिवम्[8] ।
पौरंदर्यां न्यसेत्पद्ममेकाग्रस्थितमानसः[9] ॥
[10]ऐशान्यां स्थापयेत्सोमं [11]पौरंदर्यां तु लोहितम् ।
वायव्यां चैव कवचं वारुण्यामस्त्रमेव च ॥
आग्नेय्यां सोमतनयं याम्यां चैव बृहस्पतिम् ।
नैर्ऋत्यां दानवगुरुं वारुण्यां तु शनैश्चरम् ॥
वायव्यां च तथा [12]वह्निं कौबेर्यां केतुमेव च ।

1 अम्बु for अस्त्र—ना.
2 याम्यसोमौ—ना.
3 शुचौ देशे—हे.
4 ततो बध्वा—हे.
5 स्वरूपं—उ, हे.
6 एव for अपि—उ, हे.
7 पुरतो देवदेवस्य हृदये—हे.
8 शिखाम् for शिवम्—उ.
9 एकाग्रस्थितिमात्मनः—हे.
10 Line omitted by ना.
11 पौरदं चातिलोहितम्—हे.
12 राहुं—हे.

द्वितीयायां तु कक्षायां देवतेजःसमुद्भवान् ॥
स्थापयेद्द्वादशादित्यान् काश्यपेयान् महाबलान् ।
भगः सूर्योऽर्यमा चापि मित्रो वै वरुणस्तथा ॥
सविता चैव धाता च विवस्वांश्च महाबलः ।
त्वष्टा पूषा तथा चेन्द्रो द्वादशो विष्णुरुच्यते ॥

पूर्वे चेन्द्राय दक्षिणे यमाय पश्चिमे वरुणाय उत्तरे कुबेराय ऐशान्यामीश्वराय आग्नेय्यामग्नये नैर्ऋत्यां निर्ऋतये वायव्यां वायवे नमः ॥

जया च विजया चैव जयन्ती चापराजिता ।
शेषश्च वासुकिश्चैव [1]रोमन्थोऽथ विनायकः ॥
महाश्वेता तथा देवी राज्ञी चैव सुवर्चला ।
तथान्यौ चापि विख्यातौ दण्डनायकपिङ्गलौ ॥
पुरस्ताद्भास्करस्यैते स्थापनीया विजानता ।
सिद्धिर्बुद्धिः [2]स्मृतिर्देवी तथैवोत्पलमालिनी ॥
स्थाप्याश्च दक्षिणे पार्श्वे [3]लोकपूज्याश्च मन्त्रतः ।
प्रज्ञा तन्त्री [4]क्षुधा [5]निद्रा हारीता तुष्टिरेव च ॥
[6]स्थाप्याः पश्चिमतो नित्यं श्रीकामेन विवस्वतः ।
सिद्धिर्भूमि[7]स्तथा तुष्टिः पौर्णमासी विभावसोः ॥
स्थाप्या तथोत्तरे पार्श्वे इत्येता देवशक्तयः ।

1 रेवन्तोऽथ—हे.

2 स्थिता for स्मृतिः—ना.

3 लोकपूज्याः समन्ततः—हे.

4 सुधा—उ.

5 ब्राह्मी—हे.

6 Hemādri reads: छाया पार्श्वे च विज्ञेया इत्येता देवशक्तयः for the next three lines.

7 भूतिः for भूमिः—उ.

दीपमन्नमलंकारो वासः पुष्पाणि मन्त्रतः ॥
देयान्येतानि देवस्य [1]सानुगस्य समृद्धये[2] ।
विधिनानेन सततं [3]सदा योऽर्चति भास्करम् ॥
[4]स प्राप्य परमान् कामान् ततो भानुसमो भवेत् ।
अनेन विधिना यस्तु पूजयेद्भास्करं नृप ॥
रविप्रसादाद्गच्छेत्तु [5]स परं स्थानमव्ययम् ।
अनेन विधिना पूज्य भास्करं भगवान् हरिः ॥
पुत्रानवाप्तवान् राजन् दुर्जयत्वं तथा रिपोः ।
अनेन विधिना पूज्य षष्ठ्यां भानुं [6]समाहितः ॥
वैशाखशुक्लपक्षस्य जितक्रोधो जितेन्द्रियः ।
निम्बपत्रं ततोऽश्नीयात् सप्तम्यां [7]च ततो नृप ॥
इत्थं प्राश्य स्वपेद्भूमौ देवस्य पुरतो नृप ।
अष्टम्यां पूजयेद्भानुं पुनरेव [8]नृपोत्तम ॥
ब्राह्मणान् भोजयित्वा तु शक्त्या दद्याच्च दक्षिणाम् ॥
भुञ्जीत वाग्यतः पश्चान्मधुरं ग्लानिवर्जितम् ।
इत्येषा वत्सरं यावत् कर्तव्या निम्बसप्तमी ॥
कुर्वाणः सप्तमीं चैव सर्वरोगैः प्रमुच्यते ।
सर्वरोगविनिर्मुक्तः सूर्यलोकं च गच्छति ॥

[9]इति निम्बसप्तमी ॥

1 मानुषस्य—ना ; भानुगस्य—उ.
2 समूर्तये—उ ; च मूर्तये—हे.
3 सर्वदा याति—हे.
4 संप्राप्य—उ, हे.
5 परमं—हे.
6 अनूदितम्—हे.
7 मन्त्रतो—हे.
8 तु पात्रत:—हे.
9 इति भविष्यत्पुराणोक्तं निम्बसप्तमीव्रतम्—हे.

## [फलसप्तमी]

[1]सुमन्तुरुवाच—

अथ भाद्रपदे मासि सिते पक्षे महीपते ।
कृतोपवासः संध्यायां विधिवत्पूजयेद्रविम् ॥
माहेश्वरेण विधिना पूजयेत्तत्र[2] भास्करम् ।
अष्टम्यां तु पुनः स्नातः पूजयित्वा दिवाकरम् ॥
दद्यात्फलानि विप्रेभ्यो मार्तण्डः प्रीयतामिति ।
खर्जूरं नारिकेलं च मातुलुङ्गफलानि च ॥
ब्राह्मणान् भोजयित्वा तु फलाहारस्ततो[3] भवेत् ।
पूर्वमेकं तु संप्राश्य सुसूक्ष्मफलमादरात् ।
[4]मन्त्रेण[5] भरतश्रेष्ठ न चान्यत् किंचिदेव हि ॥
फलाहारो भवेदेवमष्टम्यां कुरुनन्दन ।
इति संवत्सरं यावत् कर्तव्या फलसप्तमी ॥
[6]कृता च या महाबाहो पुत्रपौत्रान् प्रयच्छति ।
सर्वे भवन्तु सफला मम कामाः समन्ततः ॥

1 हे. व्र. I., ७०१-७०२; भवि. पु., ब्राह्मपर्व, अ. २१६, श्लो. २४-२६.

2 अत्र for तत्र—उ, हे.

3 स्वयं for ततः—हे.

4 Hemādri reads the following lines in this order :

मन्त्रेण भरतश्रेष्ठ ततः शेषाणि भक्षयेत् ।
फलं प्राश्य कुलश्रेष्ठ भवेदिन्द्रत्वमेव च ॥
सर्वे भवन्तु सफला मम कामाः समंततः ।
इत्युक्त्वा भक्षयेत्तानि फलानि कुरुनन्दन ॥
आकण्ठं तत्कुरुश्रेष्ठ न चान्यत्किंचिदेव हि ।

फलाहारो भवेदेवम् etc. to प्रयच्छति.

5 मार्गेण—ना, उ.

6 कृत्वा चेयं—ना.

इत्युक्त्वा भक्षयेद्राजन् पूर्वोक्तानि फलानि च।
आकल्पं तत् कुरुश्रेष्ठ कृत्वा कामानवाप्नुयात् ॥

[1]इति फलसप्तमी ॥

## [अनोदना सप्तमी]

[2]सुमन्तुरुवाच—

शुक्लपक्षे तु [3]चैत्रस्य षष्ठ्यां सम्यगुपोषितः।
पूजयेद्भास्करं भक्त्या पुष्पधूपविलेपनैः ॥
[4]येन संपूजयेद्देवं स विधिः कथ्यते तव।
सदा[5] वैश्रवणो येन विधिना पूजयेन्नृप ॥

ओं प्रज्वलने [6]नमः। ओं अग्निप्रकारः। [7]ओं नमः शेषं समित्प्रकारः। ओं [8]सहस्रकिरणोज्ज्वलाय स्वाहा। [9]ओं यं वः। ओं पृथिव्यै सर्वौषधिरूपिण्यै स्वाहा। पृथिव्यन्तं नमः। सकलीकरणमन्त्रः। आत्मनो देवशरीरे च[10] ओं धर्मात्मने नमः, पूर्वतः। ओं [11]दण्डकाय नमः,

1 इति भविष्यत्पुराणोक्तं फलसप्तमीव्रतम्—हे.
2 हे. व्र. I., ७०२–७०५.
3 वैशाखे—हे.
4 येन तत् पूजयेद्देवं—हे.
5 तदा—हे.
6 स्वाहा for नमः—हे.
7 ओं नमः अं समित्प्रकारः—उ; omitted by Hemādri.
8 सहस्रकिरणज्वालाय—उ.
9 ओं वन्यः—ना.
10 वा—हे.
11 धर्माय—हे.

दक्षिणतः । ॐ रोमन्थाय[1] नमः, पश्चिमतः । ॐ [2]सततोज्ज्वलरूपाय नमः, उत्तरतः । ओं श्यामपिङ्गल-लोहिताय नमः, ऐशान्याम् । नीललोहिताय नमः, आग्नेय्याम् । [3]शनैश्चराय नमः, नैर्ऋत्याम् । वज्रपाणये नमः, वायव्याम् । ओं नमो हरदेहाय महाबलपराक्रमाय सर्वतेजोऽधिपतये स्वाहा, उत्तरे । ओं शक्तिधराय नमः, प्रथमः प्रतीहारः पूर्वतः । ओं हरदेहाय [4]यज्ञरूपधराय नमः, द्वितीयः प्रतीहारः दक्षिणतो मन्त्रः । ओं हरिताय नमः, पश्चिमतः । ओं अश्वमुखाय नमः, [5]उत्तरतः । कृतद्वारपालचतुष्टयम् । ओं कुन्देन्दुक्षारप्रभाय स्वाहा, प्रथमोऽश्वः । ओं रक्ताक्षरक्तवर्णदीप्ताय नमः, द्वितीयोऽश्वः । ॐ क्षीरवर्णतेजस्विने नमः, तृतीयोऽश्वः । ओं भिन्नाञ्जन-वर्णाय नमः, चतुर्थोऽश्वः । ओं तीव्रतेजसे नमः, पञ्चमोऽश्वः । ओं व्योमवर्णाय प्रदीप्तमालिने नमः, षष्ठोऽश्वः । ओं सर्ववर्णाय सर्वाधिपतये नमः, सप्तमोऽश्वः । ओं नमो अगशकटाय कवचिने कश्यपपुत्राय प्रजापतये नमः । ओं अनन्तदेवाय नमः । ओं असाधारणविक्रमतेजसे नमः, इत्यावाहनमन्त्रः । ओं भास्कर देवाधिदेव गच्छ गच्छ यथासुखं स्वभवनं पुनरागमनाय, इति विसर्जनमन्त्रः । गायत्र्या [6]स्वागतार्घ्य-पाद्याचमनासनदानसाहित्यकरणगन्धपुष्प[7]धूपरत्नहोमोपहा-रादिनिवेदनम् ।

1 रेवन्ताय—हे.
2 सततज्वालारूपाय—हे ; सततोज्वलनरूपाय—उ.
3 ईशानेश्वराय—हे.
4 जयरूपधराय—उ ; वज्ररूपधराय—हे.
5 पूर्वतः—हे.
6 स्वागमनार्घ्यपाद्याचमनस्नानातिथ्यकरणगन्ध०—हे.
7 धूपबलिहोमो०—हे.

[1]मुकुलीपद्ममुद्रा च निष्करा च तथापरा ।
नागाख्या व्योममुद्रा चाप्युग्रा चैवं पराः स्मृताः ॥
सप्तैताश्च परा मुद्राः कोटिमुद्रास्तथैव च ।

ओं खखोल्काय नमः, हृदयम् । ओं[2]वरेण्याय नमः, शिरः । ॐ तेजसे नमः, शिखा । आदित्याय तेजोऽधिपतये नमः, कवचम् । आदित्याय [3]सहस्ररश्मये नमः, अस्त्रम् । ॐ तेजोऽधिपतये नमः, मुखम् । ॐ मेषवृषणाय[4] नमः, गुह्यम् । ॐ सहस्रकिरणाय नमः, पादौ । ॐ दीप्तदीप्ताधिपतये नमः, पृष्ठम् ।

ॐ भास्कराय विद्महे [5]सप्ताश्वाय धीमहि तन्मे भानुः प्रचोदयात् ।

सुमन्तुरुवाच—

अनेन विधिना पूज्य षष्ठ्यामुपवसेच्छुचिः ।
पुरतः शयनं भानोः सप्तम्यां पूजयेत्पुनः ॥
भोजयेच्चापि विप्रांश्च दध्ना वा पायसेन वा ।
शक्त्या च दक्षिणां [6]दद्याच्छ्रद्धया च [7]व्रजेत्तु तान् ॥
पयः पीत्वा ततो [8]गुह्यं स्यातव्यं कुरुनन्दन ।[9]

1 अकुलीना पद्ममुद्रा निष्ठुरा—ना, उ.
2 त्रिविष्टपाय—हे ; च देवाय—ना.
3 सहस्रकिरणोज्ज्वलाय—हे.
4 मेषवृषाय—हे.
5 सहस्ररश्मये—हे.
6 दत्वा श्राद्धं—हे.
7 व्रजेत—ना, उ.
8 गव्यं—हे.
9 Hemādri adds :
सुरभिरसि भद्रं ते भद्रं तेऽस्तु सुखाय वै ।
तथा ममापि भद्रं वै प्राशात्संपत्करी भव ॥
इत्यभिहितेन मन्त्रेण पयःपानम् ॥

दन्तखाद्यं भवेद्यत्तु तदोदनमिति स्मृतम् ॥
[1]भक्ष्यं भोज्यं तथा लेह्यमोदनं त्रिः प्रकीर्तितम् ।
[2]पेयं चानोदनं प्रोक्तं तस्मात्तत्परिवर्जयेत् ॥

'तत्' ओदनम् ॥[3]

इत्येषाऽनोदना नाम सप्तमी भरतर्षभ ।
यामुपोष्य नरो भक्त्या धनधान्यमवाप्नुयात्[4] ॥
सर्वपापविनिर्मुक्तः सूर्यलोके[5] महीयते ॥

[6]इत्यनोदना सप्तमी ॥

## [कल्याणसप्तमी]

[7]भगवानुवाच[8]—

सौरधर्मं प्रवक्ष्यामि नाम्ना कल्याणसप्तमी ।
[9]विशोकसप्तमी तद्वत् फलिनी नाम सप्तमी ॥
शर्करासप्तमी पुण्या तथा कमलसप्तमी ।
मन्दारसप्तमी चैव तथा च शुभसंज्ञिता ॥
सर्वानन्तफला प्रोक्ता सर्वदेव[illegible] ।

1 चोष्यं—हे.

2 तोयं वाऽनोदनं—हे ; पेयं चानोदनं—ना.

3 Hemādri comments : 'तत्परिवर्जयेद्' इति तच्छब्देन ओदनं परामृश्यते । तस्मादोदनमेव वर्जयेत्, न तु पेयमपि, तस्याऽनोदनत्वात् । प्राशनमन्त्रः ।

4 अवाप्नुयात्—उ, हे.

5 स्वर्गलोके—ना.

6 इति भविष्यत्पुराणोक्तमनोदनासप्तमीव्रतम्—हे.

7 हे. व्र. I., ६३८–६४० ; भवि. पु., उत्तरपर्व, अ. ४८, श्लो. १–१५.

8 पुलस्त्य उवाच—हे.

9 Hemādri and the printed Bhaviṣyapurāṇa omit the following four lines.

विधानमासां[1] वक्ष्यामि यथावदनुपूर्वशः ॥
यदा तु शुक्लसप्तम्यामादित्यस्य दिनं भवेत् ।
सा तु कल्याणिनी नाम विजया च निगद्यते ॥
प्रातर्गव्येन पयसा स्नानमस्यां समाचरेत् ।
ततः शुक्लाम्बरः [2]पद्ममक्षतैश्च प्रकल्पयेत् ॥
प्राङ्मुखोऽष्टदलं मध्ये [3]तद्वृत्तं तु सकर्णिकम् ।
धूपाक्षताभिर्देवेशं[4] विन्यसेत्सर्वतः[5] क्रमात् ॥
पूर्वेण तपनायेति मार्तण्डायेति वै [6]ततः ।
याम्ये दिवाकरायेति विधात्र इति नैर्ऋते ॥
पश्चिमे वरुणायेति भास्करायेति चानिले ।
सौम्ये विकर्तनायेति [7]वरायेत्यष्टमे दले[8] ॥
आदावन्ते च मध्ये च नमोऽस्तु परमात्मने ।
मन्त्रैरेभिः समभ्यर्च्य नमस्कारान्तदीपितैः ॥
शुक्लवस्त्रैः फलैर्भक्ष्यै[9]र्धूपमाल्यानुलेपनैः ।
स्थण्डिले पूजयेद्भक्त्या [10]तिलेन लवणेन च ॥
ततो व्याहृतिमन्त्रेण [11]विसृज्य द्विजपुंगवान्[12] ।

1 विधानं तस्या—हे.
2 पद्ममक्षतैः परिकल्पयेत्—हे.
3 तद्वृत्तं च सकर्णिकम्—हे ; तद्वद्वृत्तान्तकर्णिकाम्—ना.
4 सर्वेष्वपि दलेष्वीशं—हे.
5 पूर्वतः—हे.
6 नमः—हे.
7 रचयेदष्टमे दले—हे.
8 दिने—ना.
9 धूपैः—हे.
10 गुडेन—हे.
11 विसृजेत्—हे ; विसर्ज्य—ना.
12 द्विजपुंगव—हे.

शक्तितः [1]पूजयेद्भक्त्या गुडक्षीरघृतादिभिः ॥
तिलपात्रं हिरण्यं च [2]ब्राह्मणाय निवेदयेत् ।
[3]एवं नियमकृत्सुप्त्वा प्रातरुत्थाय मानवः ॥
कृतस्नानजपो मन्त्रैः[4] सहैव घृतपायसम् ।
[5]भुक्त्वाचरेदनिर्दिष्टे बैडालव्रतवर्जिते ॥
घृतपात्रं सकनकं [6]सोदकुम्भं निवेदयेत् ।
प्रीयतामत्र भगवान् परमात्मा दिवाकरः ॥[7]
अनेन विधिना सर्वं मासि मासि समाचरेत् ।
ततस्त्रयोदशे मासि गावो दद्यात्त्रयोदश ॥
वस्त्रालंकारसंयुक्ताः [8]सुवर्णाढ्याः पयस्विनीः ।
एकामपि प्रदद्याच्च [9]वित्तहीने विमत्सरः ॥
न वित्तशाठ्यं कुर्वीत यतो मोहात् पतत्यधः ।
अनेन विधिना यस्तु कुर्यात् कल्याणसप्तमीम् ॥
[10]सर्वपापविनिर्मुक्तो सूर्यलोके महीयते ।

1 तर्पयेत्—हे.
2 गुरवे विनिवेदयेत्—हे.
3 एवं तु नियमं कृत्वा—हे.
4 कृतस्नानजपैर्विप्रैः—हे.
5 भुक्त्वा च वेदविद्भिः—हे ; भुक्त्वा च वेदविदुषे—उ.
6 सोदनस्तं—हे.
7 Hemādri adds the following two lines after this :
एवं संवत्सरस्यान्ते कृत्वैतदखिलं नृप ।
उद्यापयेद्यथाशक्त्या भास्करं संस्मरन् हृदि ॥
8 हेमशृङ्गीः—हे.
9 वित्तहीनश्च निष्क्रियः—हे.
10 Hemādri reads the following five lines for the next four lines.
श्रुत्वेति पठनाद्वापि सर्वपापैः प्रमुच्यते ।
कर्ता शिवपुरे स्थित्वा कल्पमेकमिहागतः ॥
राजा भवति राजेन्द्र त्रेतायां राघवो यथा ।
पद्माष्टपत्रकमलोदरकर्णिकायां संपूजयेत्कुसुमधूपविलेपनाद्यैः ।
षष्ठ्याः परेऽहनि जनार्तिहरं दिनेशं कल्याणभाजनमसौ भवतीह नूनम् ॥

आयुरारोग्यमैश्वर्यमनन्तमिह जायते ॥
सर्वपापहरा नित्यं सर्वदैवतपूजिता ।
सर्वदुष्टोपशमनी सदा कल्याणसप्तमी ॥

[1]इति कल्याणसप्तमी ॥

## [2][विशोकसप्तमी]

[3]पुलस्त्य उवाच—

विशोकसप्तमीं तद्वद्वक्ष्यामि मुनिपुङ्गव ।
यामुपोष्य नरः शोकं न कदाचिदिहाश्नुते ॥
माघे कृष्णतिलैः स्नातः पञ्चम्यां शुक्लपक्षतः ।
कृताहारः कृशरया दन्तधावनपूर्वकम् ॥
उपवासव्रतं कृत्वा ब्रह्मचारी भवेन्निशि ।
ततः प्रभात उत्थाय कृतस्नानजपः शुचिः ॥
कृत्वा तु काञ्चनं पद्ममर्कोऽयमिति पूजयेत् ।
करवीरस्य पुष्पैस्तु रक्तवस्त्रयुगेन च ॥
यथा विशोकं भुवनं तथैवादित्य सर्वदा ।
[4]तथा [5]विशोकता मेऽस्तु [6]त्वद्भक्तिः प्रतिजन्मनि ॥
एवं संपूज्य षष्ठ्यां तु [7]शक्त्या संपूजयेद्द्विजान् ।

1 इति पद्मपुराणोक्तं कल्याणसप्तमीव्रतम्—हे; पद्मपु., सृष्टिखण्डम्, अ. २१, श्लो. २१६–२३५.

2 हे. व्र. I., ७४६–७४८; पद्मपु., सृष्टिखण्डम्, अ. २१, श्लो. २३५–२४८; भवि. पु. उत्तरपर्व, अ. ३८, श्लो. ३–१५.

3 The printed Bhaviṣyatpurāṇa reads कृष्ण उवाच for पुलस्त्य उवाच and reads these verses under विशोकषष्ठी.

4 यथा—ना.

5 विशोको मे वास्तु—हे; विशोकता यैस्तु—ना.

6 त्वद्भक्तः—ना, उ; त्वद्भक्तेः—हे.

7 भक्त्या—हे.

सुप्त्वा संप्राश्य गोमूत्रमुत्थाय [1]कृतनैत्यकः ॥
संपूज्य विप्रं यत्नेन गुडपात्रसमन्वितम् ।
[2]तद्वस्त्रयुग्मं पद्मं च ब्राह्मणाय निवेदयेत् ॥
अतैललवणं [3]भुक्त्वा सप्तम्यां [4]मौनसंयुतः ।
ततः पुराणश्रवणं कर्तव्यं भूतिमिच्छता ॥
अनेन विधिना सर्वमुभयोरपि पक्षयोः ।
कुर्याद्यावत्पुनर्माघशुक्लपक्षस्य सप्तमी ॥
व्रतान्ते कलशं दद्यात् सुवर्णकमलान्वितम् ।
शय्यां सोपस्करां दद्यात् कपिलां [5]च पयस्विनीम्
अनेन विधिना यस्तु वित्तशाठ्यविवर्जितः ।
विशोकसप्तमीं कुर्यात् स याति परमां गतिम् ॥
यावज्जन्मसहस्राणां साग्रं कोटिशतं[6] भवेत् ।
तावन्न शोकमभ्येति [7]रोगदौर्गत्यवर्जितः ॥
यं यं कामयते कामं तं तमाप्नोति पुष्कलम् ।
[8]निष्कामं कुरुते यस्तु स परं ब्रह्म गच्छति ॥

[9]इति विशोकसप्तमी ॥

1 कृतनित्यकः—हे.
2 सुसूक्ष्मवस्त्रसंयुक्तं—हे.
3 भुङ्क्ते—ना.
4 भौमसंयुतः—ना.
5 गां for च—हे.
6 ०सहस्राणि सार्धकोटिशतं—हे.
7 रोगदुर्गन्धिवर्जितः—ना.
8 निकामं—ना, उ.
9 इति भविष्यत्पुराणोक्तं विशोकसप्तमीव्रतम्—हे.

## [1][फलसप्तमी]

[2]अन्यामपि प्रवक्ष्यामि नाम्ना तु फलसप्तमीम् ।
यामुपोष्य नरः पापैर्विमुक्तः स्वर्गभाग्भवेत् ॥
मार्गशीर्षे शुभे मासि [3]पञ्चम्यां नियतव्रतः ।
षष्ठ्यामुपोष्य कमलं कारयित्वा तु काञ्चनम् ॥
शर्करासंयुतं [4]दद्याद्ब्राह्मणाय कुटुम्बिने ।
रूपं च काञ्चनं कृत्वा फलस्यैकस्य कर्मवित् ॥
दद्याद्विकालवेलायां भानुर्मे प्रीयतामिति ।
भक्त्या [5]च विप्रान् संपूज्य सप्तम्यां क्षीरभोजनम् ॥
कृत्वा कुर्यात्फलत्यागं यावत्स्यात्कृष्णसप्तमी ।
तामुपोष्य विधिं कुर्यादनेनैव क्रमेण तु ॥
तद्वद्धेमफलं दद्यात् सुवर्णसमलक्षितम् ।[6]
संवत्सरमनेनैव विधिनोभयसप्तमीम् ॥
उपोष्य दद्यात्क्रमशः सूर्यमन्त्रानुदीरयेत् ।
भानुरर्को रविर्ब्रह्मा सूर्यः शक्रो हरिः शिवः ॥
श्रीमान् विभावसुस्त्वष्टा वरुणः प्रीयतामिति ।
प्रतिमासं च सप्तम्यामेकैकं नाम कीर्तयेत् ॥
प्रतिपक्षं फलत्यागमेकं कुर्वन् समाचरेत् ।
व्रतान्ते विप्रमिथुनं पूजयेद्वस्त्रभूषणैः ॥

1 The printed Bhaviṣyatpurāṇa reads this under पद्मषष्ठी.

2 हे. व्र. I., ७४३–७४४; पद्मपु., सृष्टिखण्डम्, अ. २१, श्लो. २४९–२६२; भवि. पु., उत्तरपर्व, अ. ३९, श्लो. १–१४.

3 सप्तम्यां—उ.

4 यावद्ब्राह्मणाय—ना.

5 तु for च—उ, हे.

6 Hemādri adds a line after this :
शर्करापात्रसंयुक्तं वस्त्रमालाविभूषितम् ।

शर्कराकलशं [1]दद्याद्धेमपद्मफलान्वितम् ।
[2]यथा च विपुलाः कामास्त्वद्भक्तानां सदा रवेः ॥
तथानन्तफलप्राप्ति[3]र्मेऽस्तु जन्मनि जन्मनि ।
इमामनन्तफलदां यः कुर्यात्फलसप्तमीम् ॥
सर्वपापविशुद्धात्मा सूर्यलोके महीयते ।
सुरापानादिकं [4]किंचिद्यद्यच्चामुत्र वा कृतम् ॥
तत्सर्वं नाशमायाति यः कुर्यात् [5]फलसप्तमीम् ।
कुर्वाणः सप्तमीमेतां सततं रोगवर्जितः ॥
भूतान् भव्यांश्च पुरुषांस्तारयेदेकविंशतिम् ।

[6]इति फलसप्तमी ॥

## [शर्करासप्तमी]

[7]सुमन्तुरुवाच—

शर्करासप्तमीं वक्ष्ये [8]तद्वत्कल्मषनाशिनीम् ।
आयुरारोग्यमैश्वर्यं यथानन्तं प्रजायते ॥
माधवस्य सिते पक्षे [9]सप्तमीं [10]नियतव्रतः ।

1 दद्याद्धेमपुष्पसमन्वितम्—हे.

2 यथा न विफलाः कामाः—हे.

3 अवाप्तिः for प्राप्तिः—हे.

4 पापं यद्यद्दश पुराकृतम्—हे; किंचिदमुत्रामुत्र वा कृतम्—ना; किंचिद्यद्यच्चामुत्र वा कृतम्—उ.

5 सप्तसप्तमीम्—उ.

6 इति पद्मपुराणोक्तं फलसप्तमीव्रतम्—हे.

7 हे. व्र. I., ६४२–६४३; पद्मपु., सृष्टिखण्डम्, अ. २१, श्लो. २६३–२७९; भवि. पु., उत्तरपर्व, अ. ४९, श्लो. १–१७.

8 सर्वकल्मष०—हे.

9 सप्तम्यां—हे, उ.

10 श्रद्धयान्वितः—हे.

प्रातः स्नात्वा तिलैः शुक्लैः[1] शुक्लमाल्यानुलेपनः ॥
स्थण्डिले पद्ममालिख्य कुङ्कुमेन सकर्णिकम् ।
तस्मिन्नमः सवित्रेति [2]गन्धधूपं निवेदयेत् ॥
[3]स्थापयेदुदकुम्भं च शर्करापात्रसंयुतम् ।
शुक्लवस्त्रैरलंकृत्य[4] शुक्लमाल्यानुलेपनैः ॥
सुवर्णैश्च समायुक्तं[5] मन्त्रेणानेन पूजयेत् ।
[6]विश्वं वेदयसे यस्माद्वेदवादीति पठ्यते ॥
[7]सर्वस्यामृतमेव त्वमतः शान्ति प्रयच्छ मे ।
पञ्चगव्यं ततः पीत्वा स्वपेत् तत्पार्श्वतः क्षितौ ॥
सौरसूक्तं [8]स्मरन्नास्ते पुराणश्रवणेन [9]च ।
अहोरात्रे गते पश्चादष्टम्यां [10]कृतनैत्यकः ॥
तत्सर्वं वेदविदुषे [11]ब्राह्मणाय निवेदयेत् ।
[12]भोजयेद्भक्तितो विप्रान् शर्कराघृतपायसैः ॥
भुञ्जीतातैललवणं स्वयमप्यथ वाग्यतः ।
अनेन विधिना सर्वं मासि मासि समाचरेत् ॥

1 भुक्तैः—हे.
2 धूपं पुष्पं—हे.
3 स्थापयेदव्रणं कुम्भं—हे.
4 शुक्लवस्त्रेण संवेष्ट्य—हे.
5 सहिरण्यं यथाशक्त्या—हे.
6 विश्वेदेवमयो यस्माद्—हे.
7 त्वमेवामृतसर्वस्व अतः पाहि सनातन—हे.
8 जपंस्तिष्ठेत्—हे.
9 तु for च—उ.
10 कृतनित्यकः—हे.
11 भास्कराय—उ.
12 भोजयेच्छक्तितो—हे.

[1]संवत्सरान्ते शयनं शर्कराकलशान्वितम् ।
सर्वोपस्करयुक्तां[2] च तथैकां गां पयस्विनीम् ॥
गृहं च शक्तिमान्[3] दद्यात् समस्तोपस्करान्वितम् ।
सहस्रेण तु निष्काणां क्रीत्वा[4] दद्यात्स तेन वै ॥
[5]दशभिर्वाथ निष्केण तदर्धेनापि शक्तितः ।
[6]सुवर्णाश्च प्रदातव्याः पूर्ववत् स्वस्तिवाचनम् ॥
न वित्तशाठ्यं कुर्वीत कुर्वन् दोषान् समश्नुते ।
अमृतं पिबतो वक्त्रात् सूर्यस्यामृतबिन्दवः ॥
[7]संनिपेतुर्धरण्यां ये शालिमुद्गेक्षवः स्मृताः ।
[8]शर्करासारतस्त्वस्मादिक्षोः सारोऽमृतात्मनः ॥
इष्टा रवेरतः पुण्या शर्करा हव्यकव्ययोः ।
शर्करासप्तमी [9]ज्येष्ठा वाजिमेधफलप्रदा ॥
सर्वदुःखप्रशमनी[10] [11]पुत्रपौत्रविवर्धनी ।
यः कुर्यात् परया भक्त्या [12]स परं ब्रह्म गच्छति ॥

1 Hemādri reads two lines for the following lines :
वत्सरान्ते पुनर्दद्याद्ब्राह्मणाय समाहितः ।
शयनं वस्त्रसस्वीतं ? शर्कराकनकान्वितम् ॥

2 सर्वोपकारयुक्तां—ना.

3 शक्तितो—हे.

4 कृत्वा—ना, हे.

5 दशभिर्वा त्रिभिर्निष्कैर्निष्केणैकेन वा पुनः—हे.

6 Hemādri reads the following line for the next two lines :
पद्मं स्वशक्तितो दद्याद्वित्तशाठ्यविवर्जितः ॥

7 निष्पेतुर्ये तदुत्पन्नाः शालि०—हे.

8 शर्करा च परं तस्मादिक्षुसाराऽमृतोपमा ।

9 चैषा—हे.

10 उपशमनी for प्रशमनी—हे.

11 पुत्रसंततिवर्धनी—हे.

12 स वै सद्गतिमाप्नुयात्—हे.

कल्पमेकं वसेत्स्वर्गे ततो याति [1]परां गतिम् ।

[2]इति शर्करासप्तमी ॥

## [कमलसप्तमी]

[3]सुमन्तुरुवाच·

अतः परं प्रवक्ष्यामि [4]तद्वत्कमलसप्तमीम् ।
यस्याः संकीर्तनादेव तुष्यतीह दिवाकरः ॥
वसन्तामलसप्तम्यां स्नातः सन् गौरसर्षपैः ।
[5]तिलपात्रे च सौवर्णं [6]निधाय [7]कमलं शुभम् ॥
[8]वस्त्रयुग्मावृतं कृत्वा गन्धपुष्पैः समर्चयेत् ।
[9]नमः कमलहस्ताय नमस्ते विश्वधारिणे ॥
दिवाकर नमस्तुभ्यं [10]प्रज्ञाकर नमोऽस्तु ते ।
[11]ततो विकालवेलायामुदकुम्भसमन्वितम् ॥
विप्राय दद्यात्संपूज्य [12]वस्त्रमाल्यैर्विभूषणैः ।
[13]शक्तिश्चेत्कपिलां दद्यादलंकृत्य विधानतः ॥

1 परं पदम्—हे.

2 इति पद्मपुराणोक्तं शर्करासप्तमीव्रतम्—हे.

3 हे. व्र. I., ६४०–६४२ ; पद्मपु., सृष्टिखण्डम्, अ. २१, श्लो. २८१–२९० ; भवि. पु., उत्तरपर्व, अ. ५०, श्लो. १–११.

4 व्रतं for तद्वत्—हे.

5 तिलपात्रेण—उ.

6 विधाय—उ.

7 कमले रविम्—हे.

8 वस्त्रोपवीताभरणगन्धपुष्पैरथार्चयेत्—हे.

9 नमस्ते पद्महस्ताय—हे.

10 प्रभाकर—हे.

11 ततस्तु कालवेलायाम्—हे.

12 वस्त्रमाल्यादिभूषितम्—हे.

13 रविं सकमलं दद्याद्—हे.

[1]अहोरात्रे गते पश्चादष्टम्यां भोजयेद्द्विजान् ।
[2]यथाशक्त्याथ भुञ्जीत मांसतैलविवर्जितम् ॥
अनेन विधिना शुक्लसप्तम्यां मासि मासि च ।
सर्वं समाचरेद्भक्त्या वित्तशाठ्यविवर्जितः ॥
व्रतान्ते शयनं दद्यात् सुवर्णकमलान्वितम् ।
[3]विप्राय दद्याद्गामेव ससुवर्णां पयस्विनीम् ॥
[4]भोजनासनदीपांस्तु दद्यादिष्टानुपस्करान् ।
अनेन विधिना यस्तु कुर्यात्कमलसप्तमीम् ॥[5]
लक्ष्मीमनन्तामभ्येति सूर्यलोकेऽवमोदते ।
कल्पे कल्पे ततो लोकान् सप्त गत्वा पृथक् पृथक् ॥

1 Hemādri reads the following two lines for one line.
उपवासं प्रकुर्वीत परं नियममास्थितः ।
प्रभातायां तु शर्वर्यामष्टम्यां भोजयेद्द्विजान् ॥

2 यथाशक्त्या स्वयं पश्चाद्भुञ्जीत मांसवर्जितम्—हे.

3 गां च दद्याद्यथाशक्त्या सर्वालंकारभूषिताम्—हे.

4 व्यजनासनदीपांश्च यच्चान्यत्कल्पितं गृहे—हे.

5 Hemādri reads a different version after this :
आधिव्याधिविनिर्मुक्तः सुखसौभाग्यभाजनः ।
भुक्त्वा भोगांश्चिरं मर्त्ये मृतो रविपुरं व्रजेत् ॥
कल्पानेकं ततः स्थित्वा आगत्यात्र नराधिपः ।
सर्वसंपत्समृद्धे च कुले भवति भूभुजाम् ॥
तत्रापि भानुनिरतो व्रतैः संतोष्य भास्करम् ।
उपर्युपरि संप्राप्य जन्मभक्ती रवेस्तथा ॥
सप्तजन्मनि राजेन्द्रस्ततो याति परं पदम् ।
यदर्थं मुनयः सिद्धाः सुराश्चेन्द्रपुरोगमाः ॥
निर्विण्णा भरतश्रेष्ठ प्राप्नुवन्त्यक्षतोद्यमम् ।
एवं व्रतं महेन्द्रस्य समाख्यातं स्वयंभुवा ॥
तेनैव नारदस्योक्तं नारदेन स्वयं मम ।
आख्यानं विजनं कृत्वा यतो गुह्यतरं नृप ॥
यः पश्यतीदं शृणुयान्मुहूर्तं पठेच्च भक्त्याथ मतिं ददाति ।
सोऽप्यत्र लक्ष्मीमचलामवाप्य गन्धर्वविद्याधरलोकमेति ॥

अप्सरोभिः परिवृतस्ततो याति परां गतिम् ।

[1]इति कमलसप्तमी ॥

## [2][मन्दारसप्तमी]

[3]अथान्यां[4] संप्रवक्ष्यामि सर्वपापप्रणाशिनीम् ।
सर्वकामप्रदां पुण्यां नाम्ना मन्दारसप्तमीम् ॥
माघस्यामलपक्षे तु पञ्चम्यां [5]नक्तभुङ्नरः ।
दन्तकाष्ठं ततः कृत्वा षष्ठीमुपवसेद्बुधः[6] ॥
विप्रान् संपूजयित्वा तु मन्दारं प्राशयेन्निशि ।
ततः प्रभात उत्थाय [7]कृतस्नानः पुनर्द्विजान् ॥
भोजयेच्छक्तितः कृत्वा [8]मन्दारकुसुमाष्टकम् ।
[9]सौवर्णपुरुषं तद्वत्पद्महस्तं सुशोभनम् ॥
पद्मं कृष्णतिलैः कृत्वा ताम्रपात्रेऽष्टपत्रकम् ।
हेममन्दारकुसुमं [10]भास्करायेति पूर्वतः ॥
[11]नमस्कारेण तद्वच्च सूर्यायेत्यानले दले ।

1 इति पद्मपुराणोक्तं कमलसप्तमीव्रतम्—हे.

2 The printed Bhaviṣyapurana reads these verses under मन्दारषष्ठी.

3 हे. व्र. I., ६५०–६५२ ; पद्मपु., सृष्टिखण्डम्, अ. २१, श्लो. २९२–३०६ ; भवि. पु., उत्तरपर्व, अ. ४०, श्लो. १–१४.

4 अत: for अन्यां—हे.

5 लघुभुङ्नरः—हे.

6 नर: for बुध:—हे.

7 कुर्यात्स्नानं—हे.

8 Hemādri comments : 'मन्दारो' राजार्कः ।

9 सौवर्णं पुरतस्तद्वत्—हे.

10 स्थाप्य मध्ये च पूजयेत्—हे.

11 ऐशान्यां मित्रनामानं नमस्कारेण पूजयेत्—हे.

दक्षिणे तद्वदर्काय तथार्यम्णेति नैर्ऋते ॥
पश्चिमे वेदधाम्ने च वायव्ये [1]चण्डभानवे ।
[2]पूष्णे चोत्तरतः पूज्य चानन्दायेत्यतः परम्[3] ॥
[4]भुञ्जीतातैललवणं वाग्यतः प्राङ्मुखो गृही ।
[5]एवं हि विधिना [6]सर्वं मासि मासि च कारयेत् ॥
कुर्यात् संवत्सरं यावद्वित्तशाठ्यं विवर्जयेत्[7] ।
एतदेव व्रतान्तेषु विधाय [8]कमलोपरि ॥
गोभिर्विभवतः सार्धं दातव्यं भूतिमिच्छता ।
नमो मन्दारनाथाय [9]मन्दारभवनाय च ॥
त्वं रवे [10]तारयस्वास्माद्दुःखसंसारसागरात् ।
अनेन विधिना यस्तु [11]कुर्यान्मन्दारसप्तमीम् ॥
विहार्येतिसुखी[12] [13]मर्त्यः कल्पं च दिवि मोदते ।
इमामघौघपटलभीषणध्वान्तदीपिकाम् ॥

1 चण्डभाविने—ना.
2 पूर्णेत्युत्तरतः—ना ; पूषेत्युत्तरतः—उ, हे.
3 अनन्तरम्—उ.
4 Hemādri and printed Padmapurāṇa add three lines before this :
कर्णिकायां च पुरुषं स्थाप्य सर्वात्मनेति च ।
शुक्लवस्त्रैः समावेष्ट्य भक्ष्यैर्माल्यफलादिभिः ॥
एवमभ्यर्च्य तत्सर्वं दद्याद्वेदविदे पुनः ।
5 अनेन—हे.
6 सर्वसप्तम्यां मासि मासि वा—हे ; सर्वसप्तम्यां मासि कारयेत्—उ.
7 वित्तशाठ्यविवर्जितः—हे.
8 कलशोपरि—हे.
9 मन्दारभरणाय—उ ; मन्दारशयनाय—हे.
10 त्वं वै तारयस्वास्मानस्मात्संसारसागरात्—हे.
11 कुर्वन्—ना.
12 विपाप्मातिसुखी—हे.
13 लोके for मर्त्यः—हे.

[1]कुर्वन्न गच्छेत्संसारे सर्वभोगांल्लभेत्तदा ।
मन्दारसप्तमीमेतामीप्सितार्थफलप्रदाम् ॥
यः पठेच्छृणुयाच्चापि सोऽपि पापैः प्रमुच्यते ।

[2]इति मन्दारसप्तमी ॥

## [शुभसप्तमी]

[3]सुमन्तुरुवाच—

अथान्यामपि वक्ष्यामि[4] शोभनां शुभसप्तमीम् ।
यामुपोष्य नरो [5]रोगाद्दुःखशोकात् प्रमुच्यते ॥
[6]पुण्यामाश्वयुजे मासि कृतस्नानजपः शुचिः ।
वाचयित्वा [7]ततो विप्रानारभेच्छुभ[8]सप्तमीम् ॥
कपिलां [9]धूपयेद्भक्त्या गन्धमाल्यानुलेपनैः ।
नमामि सूर्यसंभूतामशेषभुवनालयाम् ॥
[10]त्वामानये तु कल्याणशरीरां सर्वसिद्धये ।
अलंकृत्वा तिलप्रस्थं [11]ताम्रपात्रेण संयुतम् ॥

1 गच्छन् प्रगृह्य संसारशर्वर्यां न स्खलेन्नरः—हे.

2 इति पद्मपुराणोक्तं मन्दारसप्तमीव्रतम्—हे.

3 हे. व्र. I., ६४८—६५०; पद्मपु., सृष्टिखण्डम्, अ. २१, श्लो. ३०७-३२१; भवि. पु., उत्तरपर्व, अ. ५१, श्लो. १-१४.

4 अन्यामपि प्रवक्ष्यामि—हे.

5 रोगदुःखशोकात्—उ.

6 शुक्रे चाश्वयुजे—हे.

7 द्विजश्रेष्ठान्—हे.

8 शुक्र for शुभ—हे.

9 पूजयेद्—हे.

10 त्वामहं सर्वकल्याण०—हे.

11 ताम्रपात्रे कृतं नवम्—हे.

काञ्चनं वृषभं तद्वद्वस्त्रमाल्यावगुण्ठितम्[1] ।
फलैर्नानाविधैर्भक्ष्यैर्घृतपायससंयुतैः[2] ॥
दद्याद्विकालवेलायामर्यमा प्रीयतामिति ।
पञ्चगव्यं च संप्राश्य स्वपेद्भूमावमत्सरः ॥
ततः प्रभाते [3]संजाते भक्त्या संपूजयेद्द्विजान् ।
अनेन विधिना दद्यान्मासि मासि सदा नरः ॥
वाससी वृषभं हैमं [4]तद्वद्गां काञ्चनोद्भवाम् ।
[5]संवत्सरान्ते शयनमिक्षुदण्ड[6]गुडान्वितम् ॥
सोपधानकविश्रामं भाजनासनसंयुतम् ।
ताम्रपात्रे तिलप्रस्थं [7]सौवर्णं वृषभं तथा ॥
दद्याद्वेदविदे सर्वं विश्वात्मा प्रीयतामिति ।
अनेन विधिना [8]विद्वान् कुर्याद्यः शुभसप्तमीम् ॥
तस्य [9]श्रीर्विमला कीर्तिर्भवेज्जन्मनि जन्मनि ।
अप्सरोगणगन्धर्वैः पूज्यमानः [10]सुरालये ॥
वसेद्गणाधिपो भूत्वा [11]यावदाभूतसंप्लवम् ।
[12]कल्पादाववतीर्णस्तु सप्तद्वीपाधिपो भवेत् ॥

1 माल्यगुडान्वितम्—हे.
2 सर्वोपस्करसंयुतैः—हे.
3 सुस्नातो—हे.
4 तद्वच्छन्दोश्वपूजनम्—हे.
5 वत्सरान्ते च—हे.
6 गुण for गुड—हे.
7 सौवर्णवृषभैर्युतम्—हे.
8 राजन्—हे.
9 श्रीर्विजयः सौख्यं—हे.
10 हरालये—हे.
11 चतुर्युगविपर्यये—हे.
12 Hemādri reads the following five lines for the next three lines:
ततः पुनरिहागत्य सार्वभौमो भविष्यति ।
समानीतो देवलोकात् सुराणां नारदेन तु ॥

ब्रह्महत्यासहस्रस्य भ्रूणहत्याशतस्य च ।
नाशनार्थमियं पुण्या पठ्यते शुभसप्तमी ॥
इमां पठेद्यः [1]शृणुयान्मुहूर्तं
पश्येत् प्रसङ्गादपि [2]दीप्यमानाम् ।
सोऽप्यत्र [3]सर्वाघविमुक्तदेहः
प्राप्नोति विद्याधरनायकत्वम् ॥
यावत्समाः [4]सप्त नरः करोति
यः सप्तमीं सप्तविधानयुक्ताम्[5] ।
स [6]सप्तलोकाधिपतिः क्रमेण
भूत्वा परं याति पदं मुरारेः ॥

[7]इति शुभसप्तमी[8] ॥

## [आरोग्यसप्तमी]

[9]वराहपुराणे[10]—

अथापरं महाराज व्रतमारोग्यसंज्ञितम् ।

शुभाख्या सप्तमी चेयं शतकोटिप्रविस्तरा ।
ब्रह्महत्यादिपापानां विनाशाय दयालुना ॥
समाख्याता नारदेन मया च कथिता तव ॥

1 शृणुयाच्च भक्त्या—हे.
2 दीयमानाम्—हे.
3 सर्वैष्वविमुक्तदेहः—ना.
4 व्रतमिदं—हे.
5 °युक्तः—हे.
6 सप्तलोकेऽधिपतिः—ना.
7 इति पद्मपुराणोक्तं शुभसप्तमीव्रतम्—हे.
8 इति कल्याणादिसप्तमीव्रतानि—ना, उ.
9 हे. व्र. I., ७४७–७४८ ; वरा. पु., अ. ६२, श्लो. १–५.
10 Hemādri adds : अगस्त्य उवाच ।

[1]कथयामि परं पुण्यं सर्वपापप्रणाशनम् ॥
तस्यैव माघमासस्य सप्तम्यां समुपोषितः ।
पूजयेद्भास्करं देवं [2]विष्णुरूपं सनातनम् ॥
आदित्य भास्कर रवे भानो सूर्य दिवाकर ।
[3]इति मन्त्रेण संपूज्यो देवः सर्वेश्वरो रविः ॥
षष्ठ्यां चैव कृताहारः सप्तम्यामुपवासकृत् ।
अष्टम्यां चैव भुञ्जीत एष एव विधिः क्रमः ॥
अनेन वत्सरं पूर्णं विधिना [4]योऽर्चयेद्रविम् ।
तस्यारोग्यं धनं धान्यमिह जन्मनि जायते ॥
परत्र च [5]शुभं स्थानं यद्गत्वा न निवर्तते ।

[6]इत्यारोग्यसप्तमीव्रतम् ॥

## [7][पुत्रसप्तमी]

[8]मासि भाद्रपदे [9]यावत्कृष्णपक्षे सुरेश्वर ।
सप्तम्यामुपवासेन [10]पुत्रप्राप्तिव्रतं हि तत् ॥
षष्ठ्यां चैव तु संकल्प्य सप्तम्यामर्चयेद्रविम्[11] ।

1 कथया परमं—हे.
2 विश्वरूपं—हे.
3 प्रभाकरेति संपूज्यो—हे.
4 पूजयेद्रविम्—उ.
5 सुखं—हे.
6 इति वराहपुराणोक्तमारोग्यसप्तमीव्रतम्—हे.
7 हे. व्र. I., ७३४–७३५; वरा. पु., अ. ६३, श्लो. १–७.
8 Hemādri adds : अगस्त्य उवाच ।
9 प्राप्ते शुक्लपक्षे—हे.
10 पुत्रप्राप्तिप्रदं—हे; पुत्रप्राप्तमिदं—ना.
11 Hemādri reads पूजयेद्धरिम् and comments हरिं विष्णुं, नाममन्त्रैः पूजा ।

[1]देवैस्तूपगतं देवं मातृभिः परिवारितम् ॥
ततः प्रभाते विमले त्वष्टम्यां प्रयतो हविम् ।
प्राग्विधानेन गोविन्दमर्चयित्वा विधानतः ॥[2]
तस्याग्रतः कृष्णतिलैः सघृतैर्होममाचरेत् ।
ब्राह्मणान् भोजयेद्भक्त्या यथाशक्त्या च दक्षिणाम्[3] ॥
ततः स्वयं तु भुञ्जीत प्रथमं बिल्वमेकक[illegible][4] ।
पश्चाद्यथेष्टं भुञ्जीत स्नेहाढ्यं षड्रसान्वितम्[5] ॥
प्रतिमासमनेनैव विधिनोपोष्य मानवः ।
कृष्णाष्टमीमपुत्रोऽपि लभेत्पुत्रं न संशयः ॥[6]

[7]इति पुत्र[illegible] ॥

इति श्रीलक्ष्मीधरविरचिते कृत्यकल्पतरौ व्रतकाण्डे सप्तमीव्रतानि ॥

# अथाष्टमीव्रतानि

## [दुर्गाष्टमीव्रतम्]

**तत्र देवीपुराणे**

[8]**ब्रह्मोवाच—**

**देवीव्रतं प्रवक्ष्यामि सर्वकामप्रसाधनम् ।**

1 देवैर्यमगतं देवमातृभिः—हे.

2 Hemādri comments: 'प्राग्विधानेन' वैष्णवमार्गेण, गोविन्दमिति विशेषेण गोपालमन्त्रेण पूजा ।

3 सदक्षिणम्—हे.

4 Hemādri comments: बिल्वप्राशने फलसप्तमीपूक्तो मन्त्रः ।

5 सद्घृतान्वितम्—ना.

6 Hemādri adds:
वत्सरान्ते च गोयुग्मं कृष्णं देयं द्विजातये ।
इदं पुत्रव्रतं नाम मया ते परिकीर्तितम् ॥
एतत्कृत्वा नरः पापैः सर्वैरेव प्रमुच्यते ।

7 इति वराहपुराणोक्तं पुत्रसप्तमीव्रतम्—हे.

8 हे. व्र. I., ८५६–८६२.

श्रावणे शुक्लपक्षे चाप्यष्टम्यां वायुभोजनः ॥
स्नात्वा चार्द्रपटो[1] भूत्वा जितक्रोधः [2]समाहितः ।
देवीं संस्नाप्य तोयेन पुनः क्षीरेण [3]स्नापयेत् ॥
ततो गुग्गुलधूपं च सतुरुष्कं च दापयेत् ।

'तुरुष्कः' सिह्लकः ।

ततो गन्धोदकस्नानं [4]पुनस्तोयेन स्नापयेत् ॥
[5]श्रीखण्डेन [6]समालिप्य बिल्वपत्रैः प्रपूजयेत् ।
पायसं पाययेद्देव्या नैवेद्यं तेन भोजयेत् ॥
कन्याकुमारांश्च शक्त्या तु तेषां दद्याच्च दक्षिणाम् ।
कात्यायनीति चोच्चार्य प्रीयतामिति[7] सर्वदा ॥
[8]आत्मना पारणं तच्च कृत्वा ह्याप्नोति भार्गवः ।
अश्वमेधफलं चाग्र्यं देव्या लोकं च गच्छति ॥
इमां भूमिं तथागत्य पृथिव्यां जायते नृपः ।
तेन तं लभते योगं शिवप्राप्तिकरं परम् ॥
मासे प्रौष्ठपदे शुक्ले [9]गोशृङ्गाग्रगृहीतया ।
मदयत्यात्मनो ह्यङ्गमुपलिप्ते तु स्नापयेत् ॥

[10]'शुक्ले' पक्ष इति शेषः । अष्टम्यामिति च संबध्यते ॥

1 सार्धपुटी भूत्वा—हे.
2 जितेन्द्रियः—हे.
3 वारिणा—हे.
4 पुनः स्नानं च वारिणा—हे.
5 श्रीकण्ठेन—ना.
6 समालभ्य—उ, हे.
7 मम for इति—हे.
8 आत्मनः—हे.
9 गोशृङ्गापग्रही तथा—हे; गोशृङ्गात्रगृहीतया—ना; गोशृङ्गाग्रगृहीतया—उ.
10 'शुक्ले तु' शुक्लपक्षे तु, अष्टम्यामित्यनुषङ्गः—हे.

तथा चामलकैः स्नात्वा शुचिः [1]संगतिवर्जितः ।
पूजयेद्यूथिकापुष्पैर्देवीं क्षीरेण स्नापयेत् ॥[2]
अगरुं धूपनैवेद्यान् तिलतैलेन दीपकान् ।
तेन तान् भोजयेत् कन्याद्विजान् सद्वृत्तवर्तिनः ॥[3]
पाषण्डान्नावलोकेत न च शास्त्रबहिष्कृतान् ।
दक्षिणा शक्तितो देया स्वस्तिवाच्यं च मङ्गलम् ॥
पारणं चात्मनस्तच्च[4] सौत्रामणिफलं लभेत् ।[5]
ततो देवीं [6]स्नापयेच्च दध्ना [7]चैवोदकेन च ॥
आलभ्य रोचनां [8]मूर्ध्नि दहेद्धूपं च वालकम् ।
सनखं सितया मिश्रं पद्मपत्रैस्तथार्चयेत् ॥
नैवेद्यं रोहितं [9]मांसं मांसं शल्यकृतं तथा ।
गोधूमविकृतान् [10]भक्त्या घृतपक्वान्निवेदयेत् ॥
तेन कन्यास्तु संभोज्य [11]द्विजांश्चैव [12]क्षमापते ।

1 संगविवर्जितः—हे.

2 Hemādri adds the following two lines after this :
चन्दनोदकमिश्रेण कुङ्कुमेन विलेपयेत् ।
ततः पूपकनैवेद्यं कर्णवेष्टांश्च दापयेत् ॥

3 Hemādri comments : 'तेन' पूपकादिनैवेद्यान्नेन ।

4 कृत्वा for तच्च—हे.

5 Hemādri adds the following four lines after this :
प्रयाति विष्णुलोकं च तथा विप्रोऽभिजायते ।
धनाढ्यो महतां गोत्रे वेदवेदाङ्गपारगः ॥
पुत्रवान्धनवान् भोगी सुखं प्राप्य शिवो भवेत् ।
शुक्लाष्टम्यामाश्विने च मृदा स्नानं समाचरेत् ॥

6 स्नपेद्वत्स—हे.

7 वेक्षुदकेन—हे.

8 चन्द्रैः—हे.

9 मांससमानां शल्यजं—हे.

10 भक्ष्यान्—हे.

11 द्विजांश्चापि—उ, हे.

12 क्षमापयेत्—हे.

शक्तितो दक्षिणा देया आत्मनस्तच्च भोजनम् ॥
गोसहस्रप्रदानस्य [1]फलमाप्नोति मानवः ।
अरोगी सुखवान् धन्यो जायते चेह मानवः ॥
[2]दुर्गानामानुसंकीर्त्य तस्या लोके महीयते ।
कार्तिके [3]दत्तमूल्याभिर्मृद्भिः स्नायीत भार्गव ॥
देवीं गन्धोदकैः स्नाप्य चोशीरैः पूज्य लेपयेत् ।
धूपं पञ्चरसं देयं तिलतैलेन दीपकाः[4] ॥
नैवेद्यं यावकं सर्पिः कन्याविप्रेषु चात्मनः ।
भोजनं स्वस्तिवाच्यैव दक्षिणा प्रीयतां शिव ॥
अनेन विधिना वत्स विद्यादानफलं लभेत् ।
वेदवेदाङ्गतत्त्वज्ञस्तदन्ते शिवतां व्रजेत् ॥
मार्गशीर्षे तथा मासि चाष्टम्यां गिरिमृत्स्नया ।
स्नात्वा देवीं ततः स्नाप्य तीर्थतोयेन भार्गव ॥
लेपयेद्वालकैः कुष्ठैः पूजा [5]जातीगजाह्वयैः[6] ।
धूपं कृष्णागरुं दद्याद्घृतैर्दीपान् प्रबोधयेत् ॥
दधिभक्तं तु नैवेद्यं कन्यास्तेनैव भोजयेत् ।
[7]दक्षिणाः शक्तितो देया आत्मनस्तच्च पारणम् ॥
उमा मे प्रीयतां वाच्यं वाजपेयफलं लभेत् ।
इहैव धनवान् भोगी देहान्ते ब्रह्मणः पदम् ॥

1 फलं प्राप्नोति—उ, हे.
2 दुर्गानामानि—हे.
3 दर्भमूलानि—हे ; न तु मूल्याभिः—उ.
4 Hemādri comments : 'पञ्चरसं' बोलरालकुन्दुरुश्रीवेष्टगुग्गुलुकृतम् ।
5 जातीगजान्वितैः—ना.
6 Hemādri comments : 'गजाह्वयैः' नागकेसरैः ।
7 शक्तितो दक्षिणा देया—हे.

पौषाष्टम्यां तु दूर्वाग्रैः स्नात्वा शुक्लपरिच्छदः ।
जितक्रोधः स्नापयेच्च देवीं कर्पूरवारिणा ॥
विलेपयेत्कुङ्कुमेन [1]मांसैर्वालकचन्दनैः ।
धूपं च निर्दहेत्प्राज्ञः पूजनीया कुरण्टकैः ॥
कृशरागुडनैवेद्यं कन्या भोज्याश्च तेन वै ।
आत्मनः पारणं तच्च शक्त्या वै [2]तर्पयेद्द्विजान् ॥
नारायणी सदा प्रीता मम देवी प्रसीदतु ।
कृतेन ग्रहराजेन्द्र भूमिदानफलं लभेत् ॥
सुभगो धनसंपन्नः परत्र [3]शिवमाप्नुयात् ।
माघमासे गवां श्रृङ्गमृद्भिः स्नात्वा तु भार्गव ॥
देवीं तोयेन संस्नाप्य तथा क्षीरघृतेन च ।
स्नापयेच्च पुनस्तोयैः कुङ्कुमेन विलेपयेत् ॥
धूपं देवदलं दद्यात् कुन्दपुष्पैस्तु पूजयेत् ।
घृतपूर्णं च नैवेद्यं कन्याविप्रांश्च तेन वै ॥
भोजयेदात्मनस्तच्च दक्षिणा प्रीयतां जया ।
सर्वयागफलं[4] शुक्र लभते नात्र संशयः ॥
फाल्गुने सर्षपैः स्नात्वा [5]देवीं माषफलाम्बुना ।
तथा चेक्षुरसेनैव भूयस्तेनोदकेन च ॥
रोचनालेपने पूजा [6]शतपर्णिकया सह ।

1 मांसीवालकचन्दनैः—हे.
2 दक्षयेद्द्विजान्—हे.
3 धनमाप्नुयात्—ना.
4 सर्वयोगफलं—ना.
5 देवीनाम्ना फलाम्बुना—हे.
6 शतकर्णिकया सह—उ; शतपत्रिकया गुह—हे.

दीपो[1] घृतेन [2]धूपस्तु चन्दनं [3]नखशर्करे ॥
नैवेद्येऽशोकवर्त्यश्च[4] भोजनं कन्यकासु च ।
आत्मनस्तच्च कुर्वीत दक्षिणां स्वस्ति वाचयेत् ॥
विजया सुखदा नित्यं [5]सन्तु मे चिन्तितानि तु ।
अनेन विधिना [6]शुक्र राजसूयफलं समम्[7] ॥
लभते श्रद्धया युक्तो यतो[8] देवीमयं जगत् ।
चैत्राष्टम्यां तु स्नायीत [9]मातृस्थानमृदाम्बुभिः ॥
देवीं तीर्थजलैः स्नाप्य [10]मन्दलेपेन लेपयेत् ।
धूपं [11]तुरुष्कं चोशीरं घृतियुक्तैस्तु पूजयेत् ॥
नैवेद्यं शालिजं भक्तं शर्करा कन्यकास्वपि ।
आत्मनस्तच्च वै भोज्यं शक्तितो दक्षिणां ददेत् ॥
पूजिता[12] [13]सर्वकामानां पूरणाय सुखाय मे[14] ।
[15]विद्याः कन्याः [16]समासाद्य हेमदानफलं लभेत्

1 धूपो—उ, ना.
2 दीपस्तु—उ, ना.
3 न तु शर्करा—हे.
4 नैवेद्येऽशोकवर्तिश्च—हे.
5 सुमुखा चेतनेति च—हे.
6 शुक्ल for शुक्र—उ, ना.
7 राजसूयसमं फलम्—ना.
8 ततो—हे.
9 मातृस्नाने मृदाम्बुभिः—हे.
10 मद for मन्द—हे.
11 तु रुक्मसौशीरं—हे.
12 अजिता—हे.
13 सर्वकामायां—ना.
14 वै for मे—हे.
15 विप्रकन्याः—हे.
16 समाच्छाद्य—हे.

सहकारफलैः स्नानं वैशाखे [1]ह्यष्टमीषु च ।
आत्मानं देवतां स्नाप्य मांसीवालकवारिभिः ॥
लेपनं [2]फलकर्पूरं धूपं पञ्चसुगन्धिकम् ।
देव्याः पूजा [3]च कर्तव्या केतक्या चम्पकेन च ॥
शर्कराक्षीरनैवेद्यं कन्याविप्रेषु भोजनम् ।
आत्मनः पारणं तेन[4] दक्षिणां शक्तितो ददेत् ॥
अपराजिता भवानी च शिवानाम्ना च वाचयेत् ।
प्रीयतां [5]सर्वकालं मे ईप्सितं तु [6]प्रयच्छति ॥
सर्वतीर्थाभिषेकं चाप्यनेनाप्नोति भार्गव ।
सूर्यलोकं व्रजेदन्ते तत्तुल्यो जायते सदा ॥
अष्टम्यां चैव ज्येष्ठस्य तिलैः स्नायाद्विचक्षणः ।
सर्वसङ्गपरित्यागी देवीं [7]जम्बुफलाम्बुना ॥
स्नापयेल्लेपयेत्तेन[8] [9]नकुलेन सुगन्धिना ।
ततो विजयपुष्पैस्तु पूजयेद्ग्रहसत्तमः ॥

[10]'विजयः' ककुभः ॥

नैवेद्यं सक्तवो देयाः शर्करां कन्यकास्वपि ।
दक्षिणा शक्तितो देया चर्चिकां प्रतिवाचयेत् ॥

1 ह्यष्टमीं शुचिः—हे.
2 मृग for फल—हे.
3 प्रकुर्वीत—हे ; च कुर्वीत—उ.
4 यच्च—उ ; तच्च—हे.
5 सर्वकामं—ना.
6 प्रयच्छतु—हे.
7 जाति for जम्बु—हे.
8 ताभिः for तेन—हे.
9 चन्दनेन—हे.
10 Nagpur Ms. reads : विजयः ककुभश्चैव नैवेद्यं शक्तितो ददेत् । and omits the next two lines :

लभते [1]शुक्र यज्ञस्य [2]सौत्रामणिफलं समम् ।
अष्टम्यां च तथाषाढे [3]निशानाथेन स्नापयेत् ॥
ततो देवीं जलैः [4]कुम्भैः [5]वरदामुदकेन च ।[6]
स्नात्वा विलिप्य कर्पूरैश्चन्दनै रोचनाम्बुभिः ॥
धूपं चन्दनकर्पूरै[7]र्वालकैः सितसिल्हकैः ।
[8]भक्ष्यान् शर्करया [9]पूर्णान् [10]पानकानि शुभानि च ॥
दापयेत् कन्यकाविप्रभोजनं चात्मनस्तथा ।
शक्तितो दक्षिणां दद्यान्महिषघ्नीति कीर्तयेत् ॥
दीपमाला घृतेनैव सर्वकामान् [illegible]ते ।[11]
सर्वयज्ञमहीदानं सर्वतीर्थफलं लभेत् ॥
एतद्व्रतवरं शुक्र मया रुद्रेण विष्णुना ।
जगतो हितमिच्छद्भिः [12]शीलं दुर्गाव्रतं महत् ॥
भानुना ग्रहविध्वंससमरे च कृतं पुरा ।
तथा देवासुरैर्यक्षनागकिन्नरमानवैः ॥
अप्सरोभिस्तथा स्त्रीभिः सौभाग्यस्य विवृद्धये ।

1 शुक्रपक्षस्य—उ.
2 सौत्रामणिसमं फलम्—हे.
3 निशातोयेन—हे.
4 कुष्ठैः—हे.
5 वरदामधुकेन—हे.
6 Hemādri comments: 'जलैः' कालकैः । 'मधुकेन' यष्टिमधुना ।
7 वाह्लीकैः—हे.
8 भक्त्या—ना, उ.
9 पूपान्—हे.
10 पालकानि—ना, उ.
11 Hemādri adds one line after this: नैवेद्यं शुभ्रकं सारं कन्याविप्रांश्च भोजयेत् ।
12 चीर्णं—हे.

कृतं वै ग्रहशार्दूल [1]यश्च कुर्याद्यथाविधि ॥
श्रवणादस्य चाप्नोति सर्वकाम[2]सुखानि च ।
इष्टानि लभते [3]मर्त्यो वन्ध्या पुत्रं प्रसूयते ॥

[4]इति दुर्गाष्टमीव्रतम् ॥

## [कृष्णाष्टमी]

ब्रह्मोवाच—

आश्विने वाथ माघे वा चैत्रे वा श्रावणेऽपि वा ।
कृष्णादारभ्य कर्तव्यं व्रतं शुक्लावधिं हरेः ॥

'कृष्णात्' पक्षतः । 'शुक्लावधिं हरेः' शुक्लः पक्षः, एतच्चोक्तमासेष्वेव वक्ष्यमाणप्रकारेण कृष्णाष्टम्या आरभ्य शुक्लाष्टमीं यावत् कर्तव्यम् ।

अष्टमीमाश्विनीं कृष्णामेकभक्तेन कारयेत् ।
मङ्गलारूपिणीं देवीमथवा चरुघातिनीम् ॥
पूजयेन्नरभेदेन गन्धमाल्यनिवेदनैः ।
कन्यकां भोजयेद्वत्स देवीभक्तांश्च मानवान् ॥
नक्तेन नवमी कार्या त्वयाचन् दशमीं क्षपेत् ।
एकादशीमुपवसेत् पुनरेष विधिर्भवेत् ॥

'पुनरेष विधि'रिति, यथा कृष्णाष्टम्यामिति दिनचतुष्टयमेकभक्तनक्तायाचितोपवासैर्नीतमेवमपरमपि दिनचतुष्टयं नेयमित्यर्थः ॥

1 ये च कुर्युर्यथाविधि—उ.

2 काल for काम—ना.

3 मित्रो—हे.

4 इति देवीपुराणोक्तं दुर्गाव्रतम्—हे.

यावच्छुक्लाष्टमी विप्र उपोष्या तु विधानतः ।
दानं होमो जपः पूजा कन्या भोज्यास्तु प्रत्यहम् ॥
कर्तव्यं जितरोषेण देव्या भक्तिरतेऽपि च ।
नवधा पशुपातं तु महिषाव्यजादिकं तथा ॥
कर्तव्यं भूतवेताले न चैवात्मचिकीर्षया ।

'कन्या अलंकृता कार्या' इति शेषः ॥

नटनर्तनप्रेक्षणकमथ यात्रा प्रजागरम् ॥
दानं देयं यथाशक्त्या सर्वेषामपि शक्तितः ।
महाभैरवरूपेण त्वस्थिमालाधराश्रये ॥
पूजनीया विशेषेण वस्त्रशोभापरादिषु ।
कर्तव्या सर्वकामार्थं प्रापणाय सुरोत्तम ॥
अनेन विधिना शुक्र यथेष्टं लभते फलम् ।
[1]मङ्गला भैरवी दुर्गा वाराही त्रिदशेश्वरी ॥
उमा हैमवती कन्या कपाली कैटभस्वनी ।
काली ब्राह्मी महेशी च कौमारी मधुसूदनी ॥
वाराही वासवी [2]चैव नामान्येतानि वै जपेत् ।
पूजयेद्भोजयेत्कंन्याः शास्त्रदृष्टेन कर्मणा ॥
वस्त्रालङ्कारकं चापि कटकाः कटिसूत्रकाः ।
दातव्याश्चात्मनः शक्त्या देव्या भक्तैः सुखात्मभिः ॥
अथवा नवरात्रं च सप्त पञ्च त्रिकं च वा ।

[3]एते च नवरात्रादिविकल्पाः प्रत्यहं संकल्प एव कन्यादिभोजनं कार्यमित्येतत् पक्षापेक्षया ॥

1 मङ्गल्यभैरवा—ना.

2 चर्चा—उ.

3 Comment omitted in उ MS.

एकभक्तेन नक्तेनायाचितेनाप्युपोषितैः ॥
क्षपयेत पुमान् [1]शुक्र यावच्छुक्ला तु साष्टमी ।
पूजयेन्मङ्गलां तत्र मण्डले विधिवत्कृते ॥
सर्वसंभारसंपन्ने सर्वविद्याविधायके ।
सर्वकामप्रदे [1]शुक्र सर्वकामानवाप्नुयात् ॥
अर्थकामस्य चार्थं तु राज्यकामस्य राज्यदम् ।
आरोग्यपुत्रदं वत्स [2]सर्वपातकनाशनम् ॥
सर्ववर्णैश्च कर्तव्यं पुंस्त्रीबालनपुंसकैः ।
नाधयो व्याधयस्तस्य न च शत्रुभयं भवेत् ॥
सङ्गरेषु जयो नित्यं महानेकोऽपि जायते ।
सिध्यन्ति सर्वकार्याणि श्रवणान्नात्र संशयः ॥

इत्यष्टमीव्रतम् ॥

## [पुष्पाष्टमी]

[3]भविष्यपुराणे

महादेव उवाच—

शृणु देवि महापुण्यं मासपूजाफलं शुभम् ।
श्रावणे शुक्लपक्षस्य [4]चाष्टम्यां समुपोषितः[5] ॥
स्नापयेद्घृतक्षीराभ्यां करवीरैश्च पूजयेत् ।
कृत्वाग्निकार्यं विधिवत् तथा ब्राह्मणभोजनम् ॥

1 शक्र—उ.
2 महा for सर्व—उ.
3 हे. व्र. I., ८३७–८३९.
4 सप्तम्यां—हे.
5 था उपोषिता—ना ; य उपोषितः—हे.

[1]कन्याकर्तित[2]सूत्रेण कारयित्वा पवित्रकम् ।
कृत्वा विचित्रपुष्पैश्च[3] कुङ्कुमागरुचन्दनैः ॥
कृत्वोपवासं सप्तम्यामष्टम्यां विप्रभोजनम् ।
आरोपयति यो भक्त्या सोऽग्निष्टोमफलं लभेत् ॥
पुनर्भवति वै राजा भूतले नात्र संशयः ।
मासि भाद्रपदेऽष्टम्यां शुक्लपक्षे वरानने ॥
स्नापयित्वा तु मां भक्त्या पयसाथ घृतेन वा ।
अपामार्गेण [4]कृत्वा तु पूजां देवि विधानतः ॥
हंसयानं समारूढो मम लोकं [5]व्रजेद्दिवि ।
मासि चाश्वयुजेऽष्टम्यामर्क[6]पुष्पैस्तु योऽर्चयेत् ॥
[7]स्नापयेद्दधिगन्धेन कुङ्कुमेन विलेपयेत् ।
गैरिकं[8] यानमारूढो ध्वजमालाकुलं शुभम् ॥
[9]युक्तं मयूरप्रवरैर्मम याति स मन्दिरम् ।
कार्तिकस्य तु मासस्य शुक्लाष्टम्यां तु यो नरः ॥
स्नापयेन्मधु[10]क्षीराभ्यां जातीपुष्पैश्च पूजयेत् ।
[11]काञ्चनं[12] यानमारुह्य किङ्किणीजालमालिनम् ॥

1 The following three lines are omitted in उ.
2 कर्णित for कर्तित—हे.
3 गन्धैश्च for पुष्पैश्च—हे.
4 पूजां तु कृत्वा—हे.
5 व्रजेदिति—हे
6 सर्व for अर्क—हे.
7 This line is read after the next eight lines by Hemādri.
8 Hemādri comments : 'गैरिकं' सौवर्णम् ।
9 युक्तो मयूखप्रवरैः—हे ; युक्तं मधुरप्रवरैः—ना.
10 दधि for मधु—ना.
11 The following four lines are omitted in ना., Ms.
12 कटुकं—उ.

स याति[1] मे पुरं देवि गन्धर्वाप्सरसां प्रियः।
मार्गशीर्षे तु वै मासि पञ्चगव्येन यो नरः॥
[2]स्नापयित्वार्चयेद्भक्त्या [3]बकपुष्पैस्तु पूजयेत्।
कृतोपवासं सप्तम्यामष्टम्यां विधिवन्नरः॥
स त्रैलोक्यमतिक्रम्य यत्राहं तत्र गच्छति।
पौषमासे तु योऽष्टम्यां भक्त्या मां पूजयेन्नरः॥
उन्मत्तकस्य पुष्पैस्तु [4]स्नापयित्वा घृतेन तु।
विमानं[5] दिव्यमारुह्य पुष्पकं नाम नामतः॥
ममाऽऽलयं समासाद्य मोदते शाश्वतीः समाः।
माघमासे तथाष्टम्यां बिल्वपत्रेण योऽर्चयेत्॥
स्नापयित्वा तु मां भक्त्या [6]देवीमिक्षुरसेन च।
प्रभयार्कसमं[7] यानं कान्त्याऽऽत्रेयसमं तथा॥
आरूढो मोदते नित्यं मम लोके न संशयः।
फाल्गुनस्य तु मासस्य गन्धतोयेन यो नरः॥
अर्चयेद्द्रोणपुष्पैः स [8]इन्द्रस्यार्धासनं लभेत्।
चैत्रे मासि तथा देवि पुष्पतोयेन यो नरः॥
स्नापयित्वाऽर्चयेद्भक्त्या चार्कपुष्पैस्तु सुन्दरि।
बहुस्वर्णस्य यज्ञस्य विन्दते सफलं महत्॥
वैशाखे तु तथा मास[9] अष्टम्यां यस्तु मानवः।

1 परमं देवि—हे.
2 स्नापयित्वा च तं भक्त्या—हे.
3 रक्तपुष्पैस्तु—हे.
4 स्नापयित्वामृतेन तु—उ.
5 स यानं—उ, हे.
6 दिव्य for देवीम्—हे.
7 प्रतप्तार्कसमं—हे.
8 इन्द्रस्यासनार्धं—ना ; इन्द्रस्यावासनं—हे.
9 मासि—उ, हे.

कर्पूरागरुतोयेन स्नापयित्वा विधानतः ॥
[1]अर्चयेच्छुक्लमन्दारैरश्वमेधफलं लभेत् ।
ज्येष्ठे मासि तथाष्टम्यां दध्ना यः [2]स्नापयेत्तु माम् ॥
अर्चयेत् [3]पद्मपुष्पैस्तु स गच्छेत्परमां गतिम् ।
आषाढे यो नरोऽष्टम्यां नानातीर्थोदकैर्वरैः[4] ॥
स्नापयित्वाऽर्चयेद्भक्त्या [5]पुष्पैर्धुत्तूरकैस्तथा ।
[6]गन्धर्वोरगयक्षैस्तु पूज्यमानो[7]ऽमरैर्दिवि ॥
क्रीडते च मया सार्धं यावदिन्द्राश्चतुर्दश ।
य एवं वत्सरं देवि कारयेदष्टमीव्रतम् ॥
न तस्य पुनरावृत्तिः सत्यमेतद्ब्रवीम्यहम् ।
[8]नीलकण्ठं शिवं शम्भुं भीमं वापि महेश्वरम् ॥
विरूपाक्षं महादेवमुग्रं त्र्यम्बकमेव च ।
ईश्वरं च शिवं देवि सर्वलोकेषु पूजितम् ॥
एतानि [9]मम नामानि मासेष्वेतेषु कीर्तयेत् ।

[10]इति पुष्पाष्टमीव्रतम् ॥

1 अर्चयेच्छुभगन्धेन सोऽश्वमेधफलं—हे.
2 स्नापयेदुमाम्—हे.
3 पद्मपुष्पैश्च—हे.
4 नवैः for वरैः—हे ; अर्चयेत् for वरैः—ना.
5 पुष्पैर्धुत्तूरकस्य च—उ ; पुष्पैर्धुस्तूरकस्य च—हे.
6 नागयक्षैस्तथा देवि—ना.
7 नरो for अमरैः—हे.
8 नीलकण्ठं शम्भुं शर्वं भीमं वापि—ना ; नीलकण्ठं च शम्भुं च शर्वं भीमं—हे.
9 मासनामानि—हे.
10 इति भविष्यत्पुराणोक्तं पुष्पाष्टमीव्रतम्—हे.

## [दूर्वाष्टमी]

[1]भविष्यपुराणे

विष्णुरुवाच—

[2]ब्रह्मन् भाद्रपदे मासि शुक्लाष्टम्यामुपोषितः।
पूजयेच्छङ्करं भक्त्या यो नरः श्रद्धयान्वितः॥
स याति परमं स्थानं यत्र देवस्त्रिलोचनः।
गणेशं[3] पूजयेद्यस्तु [4]दूर्वया [5]सहितं मुने॥
फलानां सकलैर्दिव्यैर्गन्धपुष्पैर्विलेपनैः।
दूर्वां पूज्य महेशानं मुच्यते सर्वपातकैः॥
शुचौ देशे प्रजातायां दूर्वायां ब्राह्मणोत्तमः।
स्थाप्य[6] लिङ्गं ततो गन्धैः पुष्पैर्धूपैः समर्चयेत्॥
खर्जूरैर्नारिकेलैश्च मातुलुङ्गफलैस्तथा।
पूजयेच्छङ्करं भक्त्या दूर्वया विधिवद्द्विजम्॥
दध्यक्षतैर्द्विजश्रेष्ठ [7]अर्घ्यं दद्यात्त्रिलोचने।
दूर्वाशमीभ्यां संपूज्य मानवः श्रद्धयान्वितः॥
[8]स वै सुकृतजन्मा स्यात् सर्वदेवैस्तु वन्दितः।
[9]त्वं दूर्वेऽमृतजन्मासि [10]सर्वदेवैस्तु वन्दिता॥

1 हे. व्र. I., ८७३-८७५.

2 भगवन्—ना.

3 Hemādri comments : 'गणेशो' महेश्वरः।

4 दुर्गया—ना.

5 या हितं—हे.

6 स्नाप्य—हे.

7 प्रदद्यात्तु त्रिलोचने—हे.

8 सर्वे सकृज्जन्माभ्यासैः—ना.

9 Hemādri reads the seven lines beginning with 'विद्यां प्राप्नोति विद्यार्थी etc. before this line.

10 वन्दितासि सुरासुरैः—हे.

[1]पूजिता दह तत्सर्वं यन्मया दुष्कृतं कृतम् ।
एवं संपूज्य देवेशं दूर्वया त्विन्दुनन्दन ॥
ब्राह्मणेभ्यः फलं दद्यात् नारिकेलादि सुव्रतः ।
दधि प्राश्य गृहं गच्छेत् पूजयित्वा त्रिलोचनम् ॥
दूर्वा गौरी स्मृता राजन् शङ्करस्तु फलानि वै ।
यस्त्वस्यां तु तिथौ ब्रह्मन् पूजयेच्छङ्करं नरः ॥
स गच्छेच्च गृहं रम्यं दिव्यगन्धर्वपूजितम् ।
कृतोपवासं सप्तम्यामष्टम्यां पूजयेच्छिवम् ॥
[2]पूर्वोक्तेनैव विधिना सर्वकामान् स विन्दति ।
विद्यां प्राप्नोति विद्यार्थी पुत्रार्थी पुत्रमाप्नुयात् ॥
[3]धनार्थी प्राप्नुयान्नित्यं भार्यार्थी लभते च ताम् ।
मनसा यद्यदिच्छेत्तु तत्तदाप्नोति मानवः ॥
य एवं पूजयेद्दूर्वां भूतेशं मानवः फलैः ।
स सप्तजन्मपापौघान्मुच्यते नात्र संशयः ॥
कृत्वोपवासं सप्तम्यामष्टम्यां पूजयेच्छिवम् ।
दूर्वासमेतं विप्रेन्द्र दध्यक्षतफलैः शुभैः ॥
ततः संपूजयेद्विप्रान् फलैर्नानाविधैर्द्विज ।
अनग्निपक्वमश्नीयादन्नं दधि फलं तथा ॥
अक्षारलवणं [4]ब्रह्मन्नश्नीयान्मधुनान्वितम् ।

1 Hemādri omits the following nine lines but adds these four lines :

सौभाग्यं संततिं देहि सर्वकार्यकरो भव ।
यथा शाखाप्रशाखाभिर्विस्तृतासि महीतले ॥
तथा ममापि सन्तानं देहि त्वमजरामरे ।
सलिङ्गमन्त्रैरीशानमर्चयेत् प्रयतः शुचिः ॥

2 पूर्वोक्तेन विधानेन—उ.

3 धर्मार्थी—हे.

4 ब्रह्मन्नाश्नीयाद्—हे.

दद्यात् फलानि विप्रेषु फलाहारः स्वयं भवेत् ॥
प्रणम्य शिरसा दूर्वां शिवं च शिवमाप्नुते ।
य एवं कुरुते भक्त्या महादेवस्य पूजनम् ॥
गणत्वं [1]यात्यसौ ब्रह्मन् मुच्यते ब्रह्महत्यया ।
एवं पुण्या पापहरा चाष्टमी दूर्वसंज्ञिता ॥
चतुर्णामपि वर्णानां [2]स्त्रीजनस्य विशेषतः ।

[3]इति दूर्वाष्टमीव्रतम् ॥

## [कृष्णाष्टमी]

[4]देव्युवाच—

कृष्णाष्टम्यां विधानं वै निखिलं क्रियते तथा ।
क्रमेण मे तथा ब्रूहि यत्कर्तव्यं सुरेश्वर ॥

ईश्वर उवाच—

हेमन्ते त्वथ संप्राप्ते मासि मार्गशिरे तथा ।
नक्तं कृत्वा[5] शुचिर्भूत्वा गोमूत्रं प्राशयेन्निशि ॥
[6]आहारः प्राशनं तत्र [7]न चान्नं तत्र प्राशयेत् ।
तेन नक्तं समुद्दिष्टं प्राशितेनाशितेन च ॥[8]

1 याति स—ना.

2 स्त्रीजनानां—हे.

3 इति भविष्यत्पुराणोक्तं दूर्वाष्टमीव्रतम्—हे.

4 हे. व्र. I., ८२३–८२६.

5 Hemādri comments : 'नक्तं कृत्वा' नक्तकल्पः.

6 आहरेद्प्राशनं—हे.

7 यथान्नं च तथाशयेत्—हे.

8 Hemādri comments : 'तेन, नक्तं समुद्दिष्टं प्राशितेन च' इति, क्वचित्प्राशितेन क्वचिदप्राशितेनेत्यर्थः.

भूशय्यायां स्वपेद्रात्रौ[1] शङ्करं पूज्य भक्तितः ।
अतिरात्रस्य यज्ञस्य फलमष्टगुणं भवेत् ॥
जपेत[2] शङ्करं नाम सायं रात्रौ दिने तथा ।
पौषे गव्यं घृतं प्राश्य नक्तं कृत्वा तु मानवः ॥
भक्त्या तु पूजयेच्छम्भुं भावितस्तुतितत्परः ।
वाजपेयाष्टकं पुण्यं लभते नात्र संशयः ॥
माघे माहेश्वरं नाम क्षीरप्राशनमादिशेत् ।
अनाहारः स्वपेद्रात्रौ [3]पूजयित्वा महेश्वरम् ॥
[4]नामजप्त्या महेशस्य गोमेधाष्टकमाप्नुयात् ।
फाल्गुने तु महादेवं कृष्णायां [5]परिकीर्तयेत् ॥
तिलान् प्राश्य निराहारो निशि जप्त्वा समाहितः ।
जपन्नामाथ देवस्य संस्मरन् शङ्करं तथा ॥
राजसूयस्य यज्ञस्य फलमष्टगुणं भवेत् ।
जपन्नामेति[6] पूर्वत्र[7] महादेवेति कथ्यते ॥
चैत्रे स्थाणुं महापुण्यं [8]पूजयेद्भक्षयेन्मधु ।
रात्रौ संप्राश्य विधिवदनाहारः स्वपेन्निशि ॥
स्थाणुं जप्त्वा मह्नामन्त्रमश्वमेधाष्टकं लभेत् ।
कुशोदकं तु वैशाखे शिवं देवं प्रपूजयेत् ॥
मन्त्रं तं तु शिवं जप्त्वा नरमेधफलं लभेत् ।

1 कृष्णाष्टम्यां विधानं वै—हे.
2 स्मरेच्च—हे.
3 शंकरं पूज्य भक्तितः—हे.
4 नाम जप्त्वा—हे.
5 परिवर्तयेत्—उ.
6 जपन्नामानि—हे.
7 सर्वत्र—ना.
8 पूजयेच्च क्षपेन्मधु—उ ; पूजयन्भक्षयन्मधु—हे.

ज्येष्ठे पशुपतिं नाम गवां शृङ्गोदकं पिबेत् ॥
जप्त्वा पशुपतिं विप्र गवां कोटिफलं लभेत् ।
कृष्णाष्टम्यामथाषाढ उग्रं नाम प्रकीर्तयेत् ॥
प्राशयेद्गोमयं तत्र सौत्रामणिफलाष्टकम् ।
[1]इमं यो जपते मन्त्रं सर्वसिद्धिप्रदायकम् ॥[2]
शर्वेति श्रावणे प्रोक्तः [3]सर्वपापक्षयंकरः ।
[4]नक्तं तु प्राशयेदर्कं जपन्मन्त्रं [5]सुभावितः ॥
वर्षकोटिशतं साग्रं रुद्रलोके महीयते ।
त्र्यम्बकं तु [6]जपेद्देवं मासि भाद्रपदेऽष्टमीम् ॥
प्राशयेत बिल्वपत्रमब्द[7]दीक्षाफलं लभेत् ।
त्र्यम्बकं संस्मरेत्तत्र चैकचित्तः सुभावितः ॥
[8]मासि चाश्वयुजे वीर प्राशनं तण्डुलोदकम् ।
नाम्ना चेशं स्मरेद्देवं पुण्डरीकाष्टकं लभेत् ॥
रुद्रं तु कार्तिके मासि दधि प्राश्य सुभावितः ।
रात्रौ तु संस्मरेद्रुद्रं[9] सर्वपापप्रणाशनम् ॥
अग्निष्टोमस्य यज्ञस्य फलाष्टकमवाप्नुते ।
मन्त्रहीना क्रिया नास्ति मन्त्रहीनं[10] न सिध्यति ॥
मन्त्रेण हि विना देवि यत्नेनापि वृथा भवेत् ।

1 उग्रं जपति यो मन्त्रं—हे.
2 Hemādri adds a line after this : नक्तं तु प्राशयेदर्घ्यं स्मरन्मन्त्रं सुभावितः .
3 सर्वकामक्षयं फलम्—हे.
4 त्र्यम्बकं तु जपेदर्कं स्मरन्मन्त्रं—हे.
5 स्वभावतः—उ.
6 जपेद्यो वै—हे.
7 श्रुति for अब्द—हे.
8 उ omits the following three lines.
9 इन्द्रं for रुद्रं—उ.
10 मन्त्रहीनं क्रियाहीनं भक्तिहीनं—हे.

तस्मात्सर्वप्रयत्नेन मन्त्रमेवमुदीरयेत् ॥
समाप्ते तु व्रते देवि वर्षान्ते तु महाफलम् ।
अस्यैव[1] तु प्रसादेन पदं याति निरामयम् ॥
[2]अस्य मन्त्रस्य हेमन्ते शिशिरे चैव शोभने ।
व्रतं निवेदयेच्छम्भो त्वत्प्रसादात्सुरेश्वर ॥
संपूर्णं हि कृतं देव[3] व्रतं परमपूजितम् ।
एवं [4]विज्ञाप्य देवेशं सान्निध्यं [5]भज शङ्कर ॥
त्वत्प्रसादात् सुरेशान यथाशक्ति जपाम्यहम् ।
कन्दमूलफलैर्वापि वर्षान्ते तर्पणं स्मृतम् ॥
ब्राह्मणांश्च यथाशक्त्या शिवभक्तान् दृढव्रतान् ।
आमन्त्र्य[6] परया भक्त्या क्रियतां मे त्वनुग्रहः ।
व्रतस्य तर्पणं पुण्यं करिष्ये [7]शिवनोदितम् ।

'तर्पणं' पूरणम् ॥

इति संपूजयेत्पश्चात् भक्ष्यभोज्यैरनेकशः ॥
दातव्या चार्जुनी कृष्णा सुरूपा सुपयस्विनी ।
हेमशृङ्गी रौप्यखुरा[8] घण्टाभरणभूषिता ॥
वस्त्र[9]पुष्पपरीधाना पुष्पमालान्विता शुभा ।
गुरवे गौः प्रदातव्या श्रेयोऽर्थं सुरसुन्दरि ॥

1 Hemādri reads यस्यैव and comments : यस्य मन्त्रस्येति शेषः ।
2 हेमन्ते शिशिरे चैव तथा शरदि शोभने—हे.
3 देवि—ना.
4 निवेद्य—हे.
5 भव—हे.
6 अर्चयेत्—हे.
7 शिवचोदितम्—उ, हे.
8 रूप्यखुरी—हे.
9 युग्म for पुष्प—हे.

आचार्यं तु शिवं विन्द्याच्छिवमाचार्यरूपिणम् ।
उभयोरन्तरं नास्ति ह्याचार्यस्य शिवस्य च ॥
एतस्मात्कारणाद्देवि गुरुः पूज्यः [1]सदाशिवः ।
यः समुद्धरते [2]मर्त्यं घोरात् संसारसागरात् ॥
न तेन सदृशी माता न पिता न च बान्धवाः ।
यद्गुरोर्दीयते दानं [3]यद्गृह्णाति सदाशिवः ॥
तस्मात्सर्वप्रयत्नेन पूजनीयो गुरुः सदा ।
इति ते कथितः सर्वः कृष्णाष्टम्यां विधिः परः ॥
अनेन विधिना यस्तु कुरुते वत्सरं नरः ।
स सर्वकामसंपन्नः प्रयाति परमं पदम् ॥

[4]इति कृष्णाष्टमीव्रतम् ॥

## [5][कृष्णाष्टमी]

[6]श्रीविष्णुरुवाच—

[7]कृष्णाष्टम्यां प्रयत्नेन कृत्वा नक्तं विधानतः ।
[8]मासि मार्गशिरे चैव शङ्करं देवमर्चयेत् ॥
[9]पीत्वा शक्त्या तु गोमूत्रमनाहारो निशि स्वपेत् ।

1 सदा नृणाम्—उ, हे.

2 नित्यं—हे.

3 तद्गृह्णाति—हे ; यद्गृह्णीयात्—ना.

4 इति देवीपुराणोक्तं कृष्णाष्टमीव्रतम्—हे.

5 हे. व्र. I., ८१६–८१८ ; भवि. पु., उत्तरपर्व, अ, ५७, श्लो. ७–२२.

6 कृष्ण उवाच—हे., भवि. पु.

7 Line not found in Hemādri and भवि. पु.

8 मार्गशीर्षे शुभे मासि शंकरार्येति पूजयेत्—भवि. पु ; मार्गशीर्षे तथा मासि शंकरेत्यभिपूजयेत्—हे.

9 गोमूत्रप्राशनं कृत्वा स्वप्याद्भूमौ ततो निशि—भवि. पु. ; गोमयं प्राशयित्वा च स्वपेद्रात्रौ जितेन्द्रियः—हे.

अतिरात्रस्य यज्ञस्य [1]फलमष्टगुणं भवेत् ॥
एवं पौषेऽपि[2] संपूज्य [3]शंभुं नाम महेश्वरम् ।
कृष्णाष्टम्यां घृतं प्राश्य [4]राजसूयाष्टकं भवेत् ॥
माघे माहेश्वरं विप्र [5]कृष्णाष्टम्यां प्रपूजयेत् ।
निशि पीत्वा [6]तु गोक्षीरं [7]गोमेधफलमाप्नुयात् ॥
फाल्गुने च महादेवं संपूज्य प्राशयेत्तिलान् ।
राजसूयस्य यज्ञस्य [8]फलमष्टगुणं [9]भवेत् ॥
[10]चैत्रे च स्थाणुनामानं कृष्णाष्टम्यां [11]प्रपूजयेत् ।
[12]यवांश्च भर्जितान् प्राश्य सोऽश्वमेधफलं लभेत् ॥
[13]वैशाखे [14]शिवनामानमिष्ट्वा रात्रौ कुशोदकम् ।
[15]पीत्वा पुरुषमेधस्य फलं दशगुणं भजेत् ॥
ज्येष्ठे पशुपतिं पूज्य गवां शृङ्गोदकं पिबेत् ।
[16]गवां कोटिप्रदानस्य यत्फलं तदवाप्नुयात् ॥

1 फलमाप्नोति मानवः—हे., भवि. पु.
2 पुष्येऽपि—हे., भवि. पु.
3 शंभुनामानमीश्वरम्—ना.
4 वाजपेयफलं भजेत्—भवि. पु. ; वाजपेयफलं लभेत्—हे ; वाजपेयाष्टकं भवेत्—उ.
5 देवदेवस्य पूजयेत्—हे.
6 गवां क्षीरं for तु गोक्षीरं—भवि. पु.
7 गोमेधाष्टकमाप्नुयात्—भवि. पु.
8 प्राप्नोत्यविकलं फलम्—हे.
9 भजेत्—भवि. पु.
10 चैत्रे स्थाणुं समभ्यर्च्य यवान् संप्राश्य भक्तितः—हे.
11 शिवं यजेत्—भवि. पु.
12 यवाहारोऽश्वमेधस्य यज्ञस्य फलमाप्नुयात्—भवि. पु.; अश्वमेधस्य यज्ञस्य फलं प्राप्नोत्यसंशयम्—हे.
13 ना and उ omit the next two lines; supplied by printed भवि. पु.
14 शिवमभ्यर्च्य प्राशयेच्च—हे.
15 फलमेधात्फलं यज्ञाद्भक्तितः प्राप्नुयान्नरः—हे.
16 गवां लक्षप्रदानस्य नरःफलमवाप्नुयात्—भवि. पु. ; गोसहस्रप्रदानस्य फलमाप्नोत्युत्तमम्—हे.

आषाढे चोग्रनामानमिष्ट्वा प्राश्य च गोमयम्[1] ।
[2]वर्षाणां च शतं[3] साग्रं [4]शिवलोके महीयते ॥
[5]एवं तु श्रावणे मासि पूज्यार्कं प्राशयेन्निशि ।
[6]गोशतस्य च यज्ञस्य फलं प्राप्नोति मानवः ॥
[7]त्र्यम्बकं [च] भाद्रपदे कृष्णाष्टम्यां प्रपूजयेत् ।
[8]संप्राश्य बिल्वपत्रं तु [9]वाजपेयफलं लभेत् ॥
[10]मासे चाश्वयुजे प्रोक्तं प्राशनं तण्डुलोदकम् ।
[11]नाम्ना चेशं जपेद्देवं पुण्डरीकफलं लभेत् ॥[12]
[13]मासे तु कार्तिकेऽष्टम्यामीशानाख्यं प्रपूजयेत् ।
[14]पञ्चगव्यं सकृत्पीत्वा पञ्चयज्ञफलं लभेत् ॥
वर्षान्ते[15] भोजयेद्विप्रान् शिवभक्तिपरायणान् ।

1 इष्ट्वा संप्राश्य गोमयम्—भवि पु.; पूजयेद्भक्तितत्परः—हे.

2 गोमयं प्राशयेद्रात्रौ सौत्रामणिफलं लभेत—हे.

3 नियुतं—भवि. पु.

4 रुद्रलोके—भवि. पु.

5 श्रावणे सर्वनामानं पूजयित्वा जितेन्द्रियः—हे; श्रावणे शर्वनामानमिष्ट्वार्कं निशि भक्षयेत्—भवि. पु.

6 बहुस्वर्णस्य यज्ञस्य फलमाप्नोत्यसंशयम्—हे; बहुस्वर्णस्य यज्ञस्य नरः फलमवाप्नुयात्—भवि. पु.

7 मासि भाद्रपदेऽष्टम्यां त्र्यम्बकं नाम पूजयेत्—हे.; भवि. पु.

8 बिल्वपत्रं निशि प्राश्य—हे, भवि. पु.

9 ग्रामदानफलं लभेत्—हे; अन्नदीक्षाफलं भजेत्—भवि. पु.

10 आश्विने भवनामानं पूजयेद्भक्तितत्परः—हे; भवनामाश्विने पूज्यः प्राशयेत्तण्डुलोदकम्—भवि पु.

11 प्राशयेत्तण्डुलजलमग्निहोत्रफलं लभेत्—हे; पौण्डरीकस्य यज्ञस्य फलं शतगुणं लभेत्—भवि. पु.

12 Hemādri reads a different version after this; Cf: ८१७–८१९.

13 कार्तिके रुद्रनामानं संपूज्य प्राशयेदपः—हे; कार्तिके रुद्रनामानं संपूज्य प्राशयेद्दधि—भवि. पु.

14 चतुर्णामपि वेदानामध्यापनफलं लभेत्—हे; अग्निष्टोमस्य यज्ञस्य फलं प्राप्नोति मानवः—भवि. पु.

15 अब्दान्ते—भवि. पु.

पायसं मधुसंयुक्तं घृतेन [1]सुपरिप्लुतम् ॥
[2]शक्त्या हिरण्यवासांसि भक्त्या तेभ्यो निवेदयेत् ।
सतिलाः कृष्णकलशा भक्ष्यभोज्येन संयुताः ॥
द्वादशात्र प्रदातव्याश्छत्रोपानद्युगान्विताः ।
[3]निवेदयेच्च रुद्राय गां तु कृष्णां पयस्विनीम् ॥
वर्षमेकं [4]व्रतं कुर्यान्नैरन्तर्येण यो नरः ।
कृष्णाष्टमीव्रतं भक्त्या तस्य पुण्यफलं शृणु ॥
सर्वपापविनिर्मुक्तः सर्वैश्वर्यसमन्वितः ।
वसेच्छिवपुरे नित्यं न चेहायाति नाकभाक्[5] ॥

इति प्रकारान्तरेण कृष्णाष्टमीव्रतम् ॥

## [कृष्णाष्टमी]

[6]मत्स्यपुराणे

[7]सूर्य उवाच—

कृष्णाष्टमीमथो वक्ष्ये [8]सर्वपापप्रणाशिनीम् ।
शान्तिर्मुक्तिश्च भवति [9]यथा पुंसां विशेषतः ॥

1 समभिप्लुतम्—भवि. पु.

2 ना and उ MSS. omit the next three lines; supplied by printed भवि. पु.

3 निवेदयति रुद्राणां—भवि. पु.

4 ततः कुर्यात्—ना; चरेदेवं—भवि. पु.

5 मोदते भूपवान्नित्यं मर्त्यलोके शतं समाः—भवि. पु.

6 मत्स्यपु. अ. ५६, श्लो. १–११.

7 श्रीभगवानुवाच—मत्स्यपु.

8 सर्वपापविनाशिनीम्—ना.

9 जयः—मत्स्यपु.

शंकरं मार्गशिरसि शंभुं पौषेऽपि पूजयेत् ।
माघे महेश्वरं देवं महादेवं च फाल्गुने ॥
स्थाणुं चैत्रे शिवं तद्वद्वैशाखेऽप्यर्चयेन्नरः ।
ज्येष्ठे पशुपतिं तद्वदाषाढे चोग्रमर्चयेत् ॥
पूजयेच्छ्रावणे शर्वं नभस्ये त्र्यम्बकं ततः ।
हरमाश्वयुजे मासि तथेशानं च कार्तिके ॥
कृष्णाष्टमीषु सर्वासु [1]शक्त्या संपूजयेद्द्विजान् ।
गोभूहिरण्यवासोभिः शिवभक्त्यानुपोषितः ॥
[2]गोमूत्रं सघृतं क्षीरं तिलान्यवकुशोदकम् ।
[3]गोश्रृङ्गोदकरीषार्कबिल्वपत्रदधीनि च ॥
पञ्चगव्यं च संप्राश्य शंकरं पूजयेन्निशि ।
अश्वत्थं च वटं चैवोदुम्बरं [4]प्लक्षमेव च ॥
पलाशं जम्बुवृक्षं च विदुः षष्ठं महर्षयः ।
मार्गशीर्षादिमासाभ्यां [5]द्वाभ्यां द्वाभ्यामथ क्रमात् ॥
एकैकं [6]दन्तपवनं वृक्षेष्वेतेषु भक्षयेत् ।
[7]दद्यात् [8]समाप्ते दध्यन्नं वितानं ध्वजचामरम् ॥
देवाय [9]दद्याद्घण्टां च कृष्णां गां कृष्णवाससी ।
द्विजानामुदकुम्भांश्च पञ्चरत्नसमन्वितान् ॥

1 शक्तः—मत्स्यपु.
2 गोमूत्रघृतगोक्षीर॰—मत्स्यपु.
3 गोश्रृङ्गोदशिरीषार्क॰—मत्स्यपु. ; गोश्रृङ्गोदकमीशानं—ना.
4 पुष्पमेव—मा.
5 तथा for द्वाभ्यां—ना.
6 दन्तधवलं—ना ; दन्तधवनं—उ ; दन्तपवनं—मत्स्यपु.
7 The printed Matsyapurāṇa reads this line after the next line.
8 सदा मे—ना.
9 दद्यादर्घ्यं—मत्स्यपु.

गावः [1]कृष्णाश्च वासांसि फलानि विविधानि च ।
अशक्तस्तु पुनर्दद्याद्गामेकामपि शक्तितः ॥
वित्तशाठ्यं न कुर्वीत कुर्वन् दोषमवाप्नुयात् ।
कृष्णाष्टमीमुपोष्यैवं सप्तकल्पशतत्रयम् ॥
पुमान् संपूजितो देवैः शिवलोके महीयते ।

इति कृष्णाष्टमीव्रतम् ॥

## [कृष्णाष्टमी]

[2]भविष्यपुराणे

विष्णुरुवाच—

कन्यागते[3] सवितरि कृष्णपक्षेऽष्टमी तु या ।
सा च पापहरा पुण्या शिवस्यानन्दवर्धिनी ॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनम् ।
सर्वप्रीतिकरं स्याद्वै कृतं तस्यां त्रिलोचने ॥
विशेषतः कृतं श्राद्धं होमश्च विधिवन्मुने ।
तस्माच्छ्राद्धं प्रयत्नेन तस्यां [4]कुर्याद्विचक्षणः ॥
एकभक्तं च पञ्चम्यां नक्तं सूक्ष्मं विदुर्बुधाः ।
उपवासस्तु सप्तम्यामष्टम्यां पूजयेच्छिवम् ॥
पूजयित्वा शिवं भक्त्या [5]पितृश्राद्धं प्रकल्पयेत् ।
कृत्वा तु विधिवच्छ्राद्धं भुञ्जीत पितृसेवितम् ॥

1 कृष्णाः सुवर्णं च वासांसि विविधानि च—मत्स्यपु.
2 हे. व्र. I., ८२१-८२३.
3 कन्यां गते—उ.
4 कुर्यात्प्रयतः—हे.
5 पितुः श्राद्धं—हे.

यस्त्वस्यां कुरुते श्राद्धं पूजयित्वा त्रिलोचनम् ।
तस्य वर्षाणि तृप्ताः स्युः[1] पितरो दश पञ्च च ॥
एवं व्रतमिदं [2]कुर्यात् [3]स्वमेकं चैवमादरात् ।
नामभिः पूजयेद्देवं त्रिपुरान्तकरं परम् ॥
मासि भाद्रपदे शंभुं शङ्करं तु तथा परे ।
शिवं तु कार्तिके मासि [4]शर्वं मार्गशिरे तथा ॥
पौषे मासि तथेशानमुग्रं माघे प्रकीर्तितम् ।
फाल्गुने [5]रुद्रनामानं चैत्रे [6]भीमं प्रकीर्तितम् ॥
वैशाखे नीलकण्ठं च ज्येष्ठे नाम भवं परम् ।
महादेवं तथाषाढे श्रावणे त्र्यम्बकं द्विज ॥
एतानि मासनामानि प्राशनानि निबोध मे ।
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ॥
गोरोचनां पञ्चगव्यं मन्दारोन्मृत्तिकां तथा ।
तिलान् यवांस्तथा विप्र[7] प्राशयेत्कायशुद्धये ॥
वच्मि पुष्पाणि तं विप्र[8] देवदेवस्य प्रीतये ।
करवीरं तथा [9]जातीं प्रालेयानि कदम्बकम् ॥
उन्मत्तकं तथा बिल्वं शमीपत्रं [10]बकं तथा ।
मालतीकुसुमं विप्र तथा मुकुरकस्य[11] च ॥

1 स्थ:—हे.
2 कृत्वा—हे.
3 Hemādri comments : 'स्वमेकं' संवत्सरम् ।
4 सर्वं—हे.
5 तु इनामानं—हे.
6 रुद्रं—हे.
7 तिलान्नं च तथा क्षीरं—हे.
8 वह्निपुष्पाणि ते वीर—हे.
9 जातिं पिप्पलातिकदम्बकम्—हे.
10 कदम्बकम्—हे.
11 मुकुटकस्य—उ ; मुद्गरकस्य—हे.

कुशपुष्पं तथा पुण्यमगस्तिकुसुमं तथा ।
सिल्हकं विजयं धूपं माहिष्याज्यं च गुग्गुलम् ॥
य एवं पूजयेद्देवं शङ्करं त्रिपुरान्तकम् ।
स्वमेकमेकं विप्रेन्द्र स याति परमं पदम् ॥
ब्राह्मणान् पूजयेद्यस्तु वाचकं च विशेषतः ।
महादेवस्य वै भक्त्या भक्तान्[1] पाशुपतान् द्विजान् ॥
एवं यः कुरुते श्राद्धमष्टम्यामष्टकासु च ।
पूजयित्वा सुरेशानं शिवं विप्रैर्मनीषिभिः ॥
तृप्यन्ति पितरस्तस्य वर्षाणि दश पञ्च च ।
दिव्यानि मुनिशार्दूल सप्त सप्त च सप्त च ॥
एवं च[2] पालयेद्भक्त्या कृष्णाष्टम्यां ततः परम् ।
यं यं [3]कामयते कामं तं [4]तं प्राप्नोति मानवः ॥
पुत्रकामो लभेत्पुत्रं धनकामो धनानि च ।
विद्यार्थी लभते विद्यां कन्यार्थी कन्यकां पराम् ॥

[5]इति कृष्णाष्टमीव्रतम् ॥

## [कृष्णाष्टमी]

[6]ज्येष्ठे मासि द्विजश्रेष्ठ [7]कृष्णाष्टम्यां त्रिलोचनम् ।
यः पूजयति देवेशमीशलोकं व्रजेन्नरः ॥

1 भक्तान् भक्त्या—उ, हे.
2 य एवं—हे.
3 काममभीप्सेत—हे.
4 तमाप्नोति—उ, हे.
5 इति भविष्यत्पुराणोक्तं शिवकृष्णाष्टमीव्रतम्—हे.
6 हे. व्र. I., ८४०–८४१.
7 गुणाष्टम्यां—हे.

ज्येष्ठे मासि तथाषाढे श्रावणे च तथापरे ।
पूजयेच्चतुरो मासान् नीलोत्पलकदम्बकैः ॥
त्रिपुरान्तकरं शंभुं त्र्यम्बकान्धकसूदनम् ।
गन्धानां [1]च कदम्बेन पूजयेद्गुग्गुलेन च ॥
[2]देवरूपफलं[3] विप्र प्राशयेत् कायशोधनम् ।

'देवरूपं' देवफलम् ॥

देवस्य कीर्तयेन्नाम [4]शङ्करेति पुनः पुनः ॥
मासि चाश्वयुजे विप्र कार्तिके च तथा द्विज ।
मार्गशीर्षे तथा मासि पौषे मासि तथा हरम् ॥
पूजयेद्विधिवद्भक्त्या [5]चोन्मत्तकुसुमैर्विभुम् ।
कर्पूरागरुधूपेन देवेशं पूजयेद्धरिम् ॥
विरूपाक्षेति वै नाम प्राशयेद्विधिवद्यवान् ।
[6]सिह्लकं प्रवरं धूपं नैवेद्यं पायसं परम् ॥
माघे वै फाल्गुने मासि कृष्णाष्टम्यां त्रिलोचनम् ।
चैत्रवैशाखयोर्भक्त्या शतपत्रैः समर्चयेत् ॥
[7]पूजयेद्विधिवच्छम्भुं त्रिपुरान्तकरं हरम् ।
महाधूपेन धूपेन विधिवत्कल्पितेन च ॥
नैवेद्यैः खण्डवेष्टैश्च नाम ईशेति पूजयेत् ।
य एवं पूजयेद्देवं कृष्णाष्टम्यां महेश्वरम् ॥

1 गन्धानां कुङ्कुमेशं च—ना.

2 टेम्बुरूकफलं—हे.

3 Hemādri comments : 'टेम्बुरूकं' तिन्दुकफलम् ।

4 भास्करेति—हे.

5 Hemādri comments : 'उन्मत्तकुसुमैः' धुस्तूरपुष्पैः ।

6 Line omitted in Hemādri.

7 Hemādri reads this line after the next line; उ omits the following three lines.

रवमेकमेकं विप्रेन्द्र स याति परमं [1]पदम् ।
यदिष्टं देवदेवस्य [2]तच्छृणुष्व द्विजोत्तम ॥
उन्मत्तधूपो धूपस्तु[3] धूपः कृष्णागरुः सदा ।
श्रीखण्डः सर्वगन्धेषु नैवेद्यं पायसं सदा ॥
पूजाकारः पाशुपतः सर्वभोगविवर्जितः ।
कल्पज्ञो ब्राह्मणानां तु वाचकस्तस्य वल्लभः ॥
[4]य एवं पूजयित्वा तु सर्वेण विधिवद्धरम् ।[5]
वत्सरान्ते [6]महापूजां पुण्यं पुस्तकवाचनम् ॥
यः कारयति वै भक्त्या तस्य पुण्यफलं शृणु ।
[7]स गोलोकमवाप्नोति तेजसा शुक्रसन्निभः ॥

[8]इति कृष्णाष्टमीव्रतम् ॥

## [9][दम्पत्यष्टमी]

कार्तिके मासि विप्रेन्द्र पुत्रकामो नरो मुने ।
अष्टम्यां कृष्णपक्षस्य पूजयेद्विधिवद्विज ॥
उमया सहितं देवं कृत्वा दर्भमयं विभुम् ।
गन्धपुष्पोपहारैश्च वासोभिर्भूषणैस्तथा ॥

1 गतिम्—हे.
2 शृणु तद्द्विजसत्तम—हे.
3 उन्मत्तकेन धूपेन—हे.
4 एवं संपूज्य नृपते रुद्रेण विधिना हरिम्—हे.
5 Hemādri comments: पूजा लिङ्गे शङ्करादिनाम्ना ।
6 बलिं पुण्यं तथा—हे.
7 स्वर्गलोकमवाप्नोति—हे.
8 इति भविष्यत्पुराणोक्तं तिन्दुकाष्टकाष्टमीव्रतम्—हे.
9 हे. व्र. I., ८४१–८४४.

नीलवैडूर्यसंकाशान्[1] समूलान् पुष्पवर्जितान् ।
[2]विवत्सकांस्तथा साग्रानृजून्दर्भान् द्विजोत्तम ॥[3]
गृहीत्वा कारयेद्देवं नीलकण्ठमुमापतिम् ।
उमां च तां सतीं देवीं विधिवद्ब्रह्मसत्तम[4] ॥
पूजयेद्गन्धमाल्यैस्तु फलैर्भक्ष्यैरनेकशः ।
नानाप्रेक्षणकैश्चैव मुखवाद्यैश्च सुव्रत ॥
एवं यः कुरुते भक्त्या ह्युमामाहेश्वरं व्रतम् ।
[5]स्वमेकमेकं विप्रेन्द्र स याति [6]परमं पदम् ॥
चतुर्भिः पारणैरेवं स्वमेकं कीर्तितं बुधैः ।
प्रथमं तु त्रिभिर्मासैः पारणं कार्तिकादिभिः ॥
कार्तिके मार्गशीर्षे तु पौषे मासि तथा [7]मुने ।
उन्मत्तकस्य पुष्पैस्तु [8]धूपैश्चैव यथोदितैः ॥
[9]पूजयेद्गन्धमाल्यैस्तु फलैर्भक्ष्यैरनेकशः ।
नानाप्रेक्षणकैश्चैव मुखवाद्यैश्च सुव्रत ॥
य एवं कुरुते भक्त्या पूजयेद्विधिवच्छिवम् ।
श्रीखण्डचन्दनेनैनं श्वेतेन तु विलेपयेत् ॥
साज्यं तु गुग्गुलं दद्यान्नैवेद्यं पायसं परम् ।
स्नानं तु पञ्चगव्येन प्राशनं च प्रवर्तयेत् ॥

1 नीलवैडूर्यसंकाशैः—ना, उ.
2 वैतस्तिकान्—हे.
3 साग्रान् ऋजून् ब्राह्मणसत्तम—ना, उ.
4 ब्रह्मवित्तम—उ.
5 Hemādri comments : 'स्वमेकः' संवत्सरः ।
6 परमां गतिम्—हे.
7 परे—हे.
8 फलैर्भक्ष्यैरनेकशः—हे.
9 Hemādri omits the following three lines.

महादेवेति वै नाम [1]देवी गौरीति पठ्यते ।
[2]माघे तु फाल्गुने मासि तथा चैत्रे द्विजोत्तम
मालतीकुसुमैर्देवं कुसुमैर्मुद्गरस्य च ।
विरूपाक्षेति वै नाम देव्या नाम उमेति च ॥
पूजयेद्विधिवद्देवं धूपेनागरुणा विभुम् ।
कुङ्कुमेन तथा भक्त्या विधिवच्चोपलेपयेत् ॥
दध्ना शाल्योदनं दद्यान्नैवेद्यं शूलपाणये ।
[3]कुशोदकं तथाश्नीयादात्मनः कायशुद्धये ॥
वैशाखे तु तथा ज्येष्ठेऽप्याषाढे च जपेद्धरम् ।
करवीरस्य पुष्पैस्तु तथा रक्तोत्पलैर्मुने ॥
प्राजापत्येन धूमेन [4]रसालामोदकैस्तथा ।
शिवः शिवा च वै नाम्नी[5] तयोर्विप्र प्रकीर्तिते ॥
स्नानप्राशनयोः शस्ता घृतकृष्णतिला बुधैः ।
अगरुं सिह्लकं धूपं प्राजापत्यमिति स्मृतम् ॥
श्रावणादिषु मासेषु जातीपुष्पकदम्बकैः ।
पूजयेद्विधिवद्देवं त्रिपुरान्तकरं परम् ॥
[6]चतुःसमेन देवेशमर्चयेद्विधिवन्मुने ।
धूपेनागरुमिश्रेण कृशरापूपपायसैः ॥
एभिर्यः पूजयेद्देवं चतुर्भिः पारणैर्हरम् ।
चतुर्वर्गमवाप्नोति कामयानो न संशयः ॥

1 देव्या नाम उमेति च—ना.
2 ना Ms. omits the following three lines.
3 उ Ms. omits the following three lines.
4 Hemādri comments : 'रसाला' शिखरिणी ।
5 नन्दी—ना, उ.
6 चतुर्मासेन—ना ; Hemādri comments : 'चतुःसमेन' त्वक्पत्रैलाकेसरेण ।

अकामयानश्च पुनस्तुरीयं [1]लभते फलम् ।

[2]'तुरीयो' मोक्षः ॥

कामयानो [3]यथाकामं काममाप्नोति मानवः ॥
पुत्रकामो लभेत्पुत्रं [4]द्रव्यार्थी विपुलं धनम् ।
विद्यार्थी विपुलां विद्यां नूनमाप्नोति शङ्करात् ॥
कृत्वैवं [5]व्रतमेकं तु वर्षान्ते प्रीणयेद्धरिम् ।
नानाप्रेक्षणकैर्ब्रह्मन् [6]ब्राह्मणानां च तर्पणैः ॥
दाम्पत्यं भोजयेद्विप्र प्रीतये शङ्करस्य च ।
कल्पज्ञं वाचकं विप्रं सपत्नीकं विचक्षणः ॥
वाचकं कल्पयेच्छम्भुं [7]तत्पत्नीं ललितां मुने ।
प्रीणयित्वा तु दाम्पत्यं भक्ष्यभोज्यैरनेकशः ॥
कुसुम्भरक्तवस्त्राणि ताभ्यां दद्याद्द्विजोत्तम ।
[8]नानाविधैर्गन्धपुष्पैः पूजयित्वा द्विजोत्तमम् ॥
दक्षिणां च पुनर्दद्यात् सौवर्णप्रतिमाद्वयम् ।
वाचकाय महादेवं [9]तत्पत्न्यै ललितां मुने ॥
य एवं पूजयेच्छम्भुं भक्त्या श्रद्धासमन्वितः ।
स दिव्यं यानमारूढः [10]शुक्रजोद्भवमुत्तमम् ॥

1 केवलं लभेत्—हे; लभते परम्—उ.
2 Comment reproduced by Hemādri.
3 यथा मोक्षं—हे.
4 धनकामो लभेद्धनम्—हे.
5 वर्षमेकं तु—हे.
6 ब्राह्मणांश्चान्नतर्पणैः—हे.
7 स्वपत्नीं—हे.
8 Line omitted in ना MS.
9 तत्पत्नीं—हे.
10 सुवर्णोद्भवमुत्तमम्—हे.

तेजसा [1]शुक्रसङ्काशः प्रभया हरिसन्निभः ।
स गच्छेत्परमं स्थानमचलं शूलपाणिनः ॥
तस्मादेत्य भवेद्राजा भूतले [2]क्ष्माधिपेश्वरः ।

[3]इति दम्पत्यष्टमीव्रतम् ॥

## [कालाष्टमी]

[4]वामनपुराणे

[5]पुलस्त्य उवाच—

नभस्ये मासि च तथा या स्यात्कृष्णाष्टमी शुभा ।
[6]युक्ता मृगशिरेणैव सा तु कालाष्टमी मता ॥
तस्यां [7]पुरैकलिङ्गेषु तिथौ स्वपिति शङ्करः ।

'[8]एकलिङ्गानि' वृषभगणपतिरहितानि[9] पश्चिमाभिमुखानि प्रसिद्धानि ॥

वसन्ते सन्निधाने तु तत्र पूजाऽक्षया स्मृता ॥
स्नायीत विद्वान् विधिवद्गोमूत्रेण जलेन च ।
स्नात्वा संपूजयेत्पुष्पैः [10]कुटजस्य त्रिलोचनम् ॥

1 शुक्रसंकाशः—ना.
2 भूतलेश्वरः—हे.
3 इति भविष्यत्पुराणोक्तं दाम्पत्याष्टमीव्रतम्—हे.
4 हे. व्र. I., ८४९–८५३.
5 अगस्त्य उवाच—ना.
6 स्मृता—हे ; तथा—ना.
7 सर्वैकलिङ्गेषु—हे.
8 Comment reproduced by Hemādri.
9 सहितानि for रहितानि—हे.
10 धुत्तूरस्य—हे.

धूपः केसरनिर्यासैर्नैवेद्यं [1]मधुसर्पिषा ।

[2]'केसरो' बकुलः ॥

प्रीयतां मे विरूपाक्ष इत्युच्चार्य च दक्षिणाम् ॥
विप्राय दद्यान्नैवेद्यं सहिरण्यं द्विजोत्तमः ।
तद्वदाश्वयुजे मासि सोपवासो जितेन्द्रियः ॥
नवम्यां गोमयस्नानं कुर्यात्पूजां च पङ्कजैः ।

[3]'तद्वदाश्वयुजे मासि सोपवास' इत्यभिधानात्पूर्वमासेऽप्युपवासो बोद्धव्यः ॥

धूपयेत् [4]सर्जनिर्यासैर्नैवेद्यं मधु मोदकम् ॥
कृत्वोपवासमष्टम्यां नवम्यां स्नानमाचरेत् ।
प्रीयतां मे विरूपाक्षो दक्षिणा च तिलैः कृता ॥
कार्तिके [5]पयसा स्नानं करवीरेण वाऽर्चनम् ।
धूपं [6]श्रीवासनिर्यासैर्नैवेद्यं मधुपायसम् ॥
सनैवेद्यं च रजतं दातव्यं दानमग्रजे ।

[7]'अग्रजे' ब्राह्मणे । 'श्रीवासः' [8]सरलवृक्षः ॥

प्रीयतां भगवान् स्थाणुरिति वाच्यमनन्तरम् ॥
कृत्वोपवासमष्टम्यां नवम्यां स्नानमाचरेत् ।

1 धूप for मधु—ना, उ.
2 Comment reproduced by Hemādri.
3 Comment reproduced by Hemādri.
4 सर्व for सर्ज—ना.
5 पायसस्नानं—ना.
6 श्रीवत्सनिर्यासैः—उ.
7 Comment reproduced by Hemādri.
8 सरलद्रवः—ना.

मासि मार्गशिरे स्नानं [1]तत्रार्चा रुद्रजा स्मृता ॥
धूपं [2]श्रीवृक्षनिर्यासैर्नैवेद्यं [3]मधुपायसम् ।
नैवेद्यं रक्तशाली च दक्षिणा परिकीर्तिता ॥
नमोऽस्तु प्रीयतां शर्व इति वाच्यं च पण्डितैः ।

[4]'अर्चा' पूजा । 'रुद्रजा' शमीपुष्पजा । 'श्रीवृक्षो' बिल्वः ॥

पौषे स्नानं च हविषा पूजा स्यात्पारणेन तु[5] ॥
धूपो मधूकनिर्यासैर्नैवेद्यं मधुशष्कुली ।
[6]समुक्ता दक्षिणा प्रोक्ता प्रीणनाय जगद्गुरोः ॥
वाच्यं नमस्ते देवेश त्र्यम्बकेति प्रकीर्तयेत् ।

'हविषा' घृतेन ॥

माघे कुशोदकस्नानं मृगमदेन वार्चनम् ॥
धूपो कदम्बनिर्यासो नैवेद्यं सतिलोदनम् ।
[7]पयः कुसुम्भं नैवेद्यं सरुक्मं प्रतिपादयेत् ॥
प्रीयतां मे महादेव उमापतिरितीरयेत् ।
एवमेकं समुद्दिष्टं षड्भिर्मासैस्तु पारणम् ॥
[8]पारणान्ते त्रिणेत्रस्य स्नपनं कारयेत्क्रमात् ।

1 करवीरेण चार्चनम्—ना, उ.
2 श्रीवास for श्रीवृक्ष—ना.
3 मधुमोदकम्—हे.
4 Comment reproduced by Hemâdri.
5 स्यात्तुरगेण तु—उ.
6 सामुद्रं—हे.
7 पयः कुम्भेन—हे
8 पारणान्तेऽत्रिगोत्रस्य—हे.

गोरोचनाचन्दनकुङ्कुमेन
देवं समालभ्य च पूजयेच्च ।
[1]प्रीयस्व दीनोऽस्मि भवन्तमीशं
शशाङ्कनाथं प्रणतोऽस्मि नित्यम् ॥
ततस्तु फाल्गुने मासि कृष्णाष्टम्यां यतव्रतः ।
उपवासः समुद्दिष्टः कर्तव्यो द्विजसत्तम ॥
द्वितीयेऽह्नि ततः स्नानं पञ्चगव्येन कारयेत् ।
पूजयेत्कुन्दपुष्पैस्तु [2]धूपनं चन्दनेन तु ॥
नैवेद्यं सघृतं दद्यात्ताम्रपात्रे गुडोदनम् ।
दक्षिणां च द्विजातिभ्यो नैवेद्यसहितां तथा[3] ॥
वासोयुगं प्रयच्छेच्च रुद्रमुच्चार्य[4] नामतः ।
चैत्रे चोदुम्बरफलैः स्नानं मन्दारकार्चनम् ॥
गुग्गुलं महिषाख्यं च [5]घृताक्तं धूपयेद्बुधः ।
समोदकं तथा सर्पिः प्रीणनं विनिवेदयेत् ॥
दक्षिणां चैव नैवेद्यं [6]मृगाजिनमुदाहरेत् ।
[7]आद्ये श्रवणमन्ते चापीदमुच्चार्य [8]नामतः ॥
प्रीणनं देवनाथस्य कुर्याच्छ्रद्धासमन्वितः ।
वैशाखे स्नानमुद्दिष्टं[9] सुगन्धिकुसुमाम्भसा ॥

1 त्रायस्व—हे; प्रियश्च—ना.
2 धूपयेत्—हे.
3 मुने—हे.
4 ब्राह्मणेभ्यः प्रदद्याच्च रुद्रमभ्यर्च्य—हे.
5 घृताङ्गं—ना.
6 उमाकान्ताय दापयेत्—हे; मृगाजिनमुदाहृतम्—ना.
7 नन्दीश्वर नमस्तेऽस्तु—हे; नागेश्वर नमस्तेऽस्तु—उ.
8 नारद—हे, उ.
9 स्नानमुदितं—उ, हे.

पूजनं शङ्करस्योक्तं [1]व्रतं नक्तादिभिः प्रभो ।
धूपं [2]सूर्याख्यपुष्पं च नैवेद्यं [3]सफलं घृतम् ॥

[4]'सूर्याख्यपुष्पं' अर्कपुष्पम् ॥

नाम जप्तव्यमीशस्य[5] [6]कालघ्नेति विपश्चिता ।
जलकुम्भान् सनैवेद्यान् [7]ब्राह्मणाय निवेदयेत् ॥
[8]उपानद्युगलं छत्रं दानं दद्याच्च भक्तितः ।
नमस्ते भगनेत्रघ्न [9]पुष्पदन्तविनाशन ॥
इदमुच्चारयेद्भक्त्या प्रीणनाय जगत्पतेः ।
आषाढे [10]स्नानमुदितं श्रीफलैरर्चनं [11]सदा ॥
धुत्तूरकस्य कुसुमैर्धूपार्थं सिह्लकं तथा ।
नैवेद्यं [12]सफलाः पूपा दक्षिणाः सघृतास्तथा ॥
नमस्ते [13]दैत्यदर्पघ्न इदमुच्चारयेत्ततः[14] ।
श्रावणे मृगमदेन स्नानं कृत्वार्चयेद्धरिम्[15] ॥
श्रीवृक्षपत्रैः सफलैर्धूपं दद्यात्तथाऽगरुम् ।

1 भूतमञ्जरिभिर्विभो—हे.
2 सूर्याख्यपुष्पैस्तु—हे.
3 सकलं—उ.
4 Comment reproduced by Hemādri.
5 ईशेति—
6 कार्येण च—ना.
7 ब्राह्मणेभ्यो—हे.
8 उपानद्युगं छत्रं—ना.
9 पूष्णो दन्तविनाशन—उ.
10 स्नानमुद्दिष्टं—हे.
11 तथा—उ.
12 सघृताः—उ, हे.
13 दक्षयज्ञघ्न—हे; दक्षदर्पघ्न—उ.
14 तथा for ततः—ना.
15 हरम्—उ.

नैवेद्यं सघृतं दद्याद्दधिपूर्णं समोदकम् ॥
[1]दध्योदनं सकृशरं कृष्णधानाः सशष्कुलीः ।
[2]दक्षिणां वृषभं धेनुं दद्याच्च कपिलां शुभाम् ॥
कनकं रक्तवसनं प्रदद्याद्ब्राह्मणाय च ।
गङ्गाधरेति विख्यातं नाम शम्भोस्तु पण्डितैः ॥
[3]अमीभिः षड्भिरपरमासैः पारणमुत्तमम् ।
एवं संवत्सरं पूर्णं संपूज्य वृषभध्वजम् ॥
अक्षयांल्लभते लोकान्माहेश्वरपरो नरः ।
इदमुक्तं व्रतं पुण्यं [4]सर्वक्षेमकरं शुभम् ॥
स्वयं [5]चन्द्रेण देवर्षे तत्तथा न तदन्यथा ।

[6]इति कालाष्टमीव्रतम् ॥

## [कालीव्रतम्]

कालिकापुराणे

देव्युवाच—

साधु भक्तोऽसि धर्मज्ञ कालरात्रिव्रतं मम ।
शृणु वक्ष्याम्यहं तेभ्यः कर्तव्यं विधिवद्यथा ॥
मासि चाश्वयुजेऽष्टम्यां कृष्णपक्षे जितेन्द्रियः ।
सत्यवाक् स्थिरचित्तात्मा नियमस्थो भवेत्सुधीः

1 दध्योदनं कृशरकः कटिधानाः सशष्कुलाः—ना.
2 दक्षिणा श्वेतवृषभं धेनुं च कपिलां—हे.
3 अमीभिः षड्भिर्मासैः पारणमुत्तमं स्मृतम्—ना.
4 सर्वाक्षयकरं—हे.
5 रुद्रेण—हे.
6 इति वामनपुराणोक्तं कालाष्टमीव्रतम्—हे.

कृत्वादौ मण्डपं श्रीमद्भूमिभागे समे शुभे ।
चतुरस्रं समं शुक्लं पताकाध्वजशोभितम् ॥
सूत्रेण सूत्रितं कृत्वा कुण्डं हस्तप्रमाणतः ।
[1]ततो हरेत्सुसंभारान् दर्भांश्चैव तिलांस्तथा ॥
पलाशं पिप्पलस्यापि समिधः सप्तविंशति ।
धन्वाकृतिसमं[2] तत्र कारयेद्विधिवच्छुभम् ॥
गर्गरीकलशांश्चैव वैभवांश्च हरेः शुभान् ।

'गर्गरी' मण्डली ॥

पिटकं सूर्पपत्राणि वैदलानि शुभानि च ॥
नैवेद्यं पुष्पतोयार्घं द्रव्याणि तु वराणि च ।
आहरेत्सर्वमेतद्धि व्यजनं च सुशोभनम् ॥
सुरभीणि च पुष्पाणि जातीनीलोत्पलानि च ।
अन्यानपि[3] पवित्रांश्च कुशादीनाहरेद्बहून् ॥
गन्धानि चैव चित्राणि धूपान् गुग्गुलपूर्वकान् ।
प्रणीतान् विष्टरांश्चैव चरुं च [4]स्रुवमेव च ॥
एवं संस्कृत्य संभारांश्चतुरः सत्कुलोद्भवान् ।
अधिवासार्थमाचार्यान् मामुद्दिश्य प्रकल्पयेत् ॥
ये शुद्धा विगतक्रोधा देवब्राह्मणपूजकाः ।
अर्हाश्च सत्कुले जाताः सत्यशौचक्रियान्विताः ॥
चतुर्भिरीदृशैर्वत्स आचार्यैर्नियमस्थितैः ।
सप्तरात्रोषिता पूज्या चान्वहं नक्तभोजनैः ॥

1 ना omits the following two lines.

2 अयं for समं—ना.

3 आम्रानपि—ना.

4 भवमेव च—ना.

ततो नियममादाय तत्कुण्डे धनुराकृतौ ।
होमं तु [1]कारयेत्तद्वद्विप्रैः शांकरसंभवैः ॥
तदभावे न चैवेह होमं कुर्यात्स्वयं शृणु ।
यदीच्छेदूर्ध्वगमनं विभूतिं चेष्टदायिनीम् ॥
तदभावेऽपरान् विप्रान् होमवद्भूमिमंर्चनैः ।
कारयेत् स ध्रुवं ज्ञात्वाप्यव्यङ्गां कुलजां तथा ॥

[2]'शांकरसंभवाः' शांकरवंशजाः साम्बगणाधिपादयः ॥

साम्बं गणाधिपं मातृभूपालं वृषभध्वजम् ।
आदावेतांश्च संपूज्य ततो होमं समाचरेत् ॥
हेतुरूपेण देवेशं सर्वकर्मसु सिद्धये ।
[3]आग्नेयं मातृभिः सार्धं स्वरूपेण हरं यजेत्[4] ॥

'भूपालः' क्षेत्रपालः । 'आग्नेयः' कार्तिकेयः ॥

विंशतीः सप्त पालाशीरुदिते जुहुयात्तदा ।
पुनश्चास्तं गते भानावश्वत्थाः समिधस्तथा ॥

'विंशति' 'सप्ते'त्यनुषङ्गः ॥

अर्धरात्रे तिलैः कृष्णैराज्येनाक्तैस्तु भक्तितः ।
अष्टोत्तरशतं यावत् कारयेद्धोममुत्तमम् ॥
मन्त्रेणानेन तत्रैव सर्वासु भवनाशिना ।
वरदेन सुसिद्धेन पुष्टिशान्तिविधायिना ॥

1 कारयेत्तद्वत् सविप्रैः—ना.
2 Comment corrupt in Mss.
3 आह्वार्य—ना ; आग्नेयं—उ.
4 जपेत्—ना.

ओं ह्रीं नमः कृष्णवाससे शतसहस्रकोटिसिंहवाहन महाबले अपराजिते प्रत्यङ्गिरे सर्वसैन्यपरिकर्मिणि मन्त्रच्छेदिनि सर्वसत्त्वोन्मादिनि सर्वभूतदमनि सर्वदोषान् ध्वंसय ध्वंसय सर्वविघ्नानुच्छेदयोच्छेदय निकृन्तय निकृन्तय सर्वदुष्टान् भक्षय भक्षय ज्वालाजिह्वे करालवक्त्रे सर्वगात्रान् स्फोटय स्फोटय शृङ्खलीः स्फोटय[1] स्फोटय प्रत्यङ्गिरे नमोऽस्तु ते स्वाहा ॥

होमं कृत्वा बलिं [2]दद्याच्चरुं सर्वदिशासु च ।
कृशराज्यपुरोऽक्तेन पयसा योजितेन च ॥
कुर्यात्सप्तदिनं चैव सप्तमे दिग्भवेषु च ।
[3]वारुणाः पञ्च पञ्चाशन्निर्बद्धादधिकं कुले ॥

'कृशराज्यपुरोऽक्तेन' इति, वारुणेत्यस्य [4]उपरितनस्यानुषङ्गः । 'पुरो' गुग्गुलुः । 'निर्बद्धात्' प्रतिदिननियतात् ॥

[5]बहुभिः सकुलोत्पन्नैः स्तुतिरेव च चत्वरे ।
उषित्वा वाथ नक्तेन स्थातव्यं त्वर्चनाय वै ॥
यदग्रेः पूजनं वत्स कर्तव्यं विधिवत्सदा ।
धर्मयज्ञोद्भवैर्विप्रैः स्तुत्यर्थं [6]तत्प्रभो शृणु ॥
दिनानि सप्त सप्तैव चन्दनागरुणा तथा ।
देव्याश्च परया भक्त्या क्षालयेन्मुखमण्डलम् ॥

1 त्रोटय—ना.

2 दत्वा चरुं—ना.

3 Line corrupt in both ना and उ : आहुती: पञ्च सन्निबद्धा दधिकुण्डले—ना ; आहुती वारुणा: पञ्च पञ्चाशत् बद्धादधिकं कुले—उ.

4 विपरितनस्य—ना.

5 चतुर्भि:—उ.

6 तच्च भो—उ.

लेखा लेख्यस्य [illegible] क्षालनाय मुखस्य च ।
प्रतिमा मृन्मयी या तु स्थाप्यतां पूजयेत्सदा ॥
प्रक्षाल्य मन्त्रपूतेन संसृज्य मलवाससी ।
मधुना मधुपर्केण कारयेत्पूज्य यत्नतः ॥
ततोऽमृतं पुनर्योज्य मुखं गात्रं च कारयेत् ।
कृत्वा चैव तु भक्ष्याणि विधिना विनियोजयेत् ॥
पयसा पायसं गव्यमाज्येन मधुना युतम् ।
कारयेत्खण्डसंयुक्तं मदर्थममृतं शुभम् ॥
नानाभक्ष्याणि संयोज्याप्योदनं तु क्रमात्ततः ।
व्यञ्जनानि च पानानि पुनर्धूपं च दापयेत् ॥
प्रदक्षिणं ततो भूयो दण्डवत्प्रणिपत्य च ।
धर्मकालोद्भवेनाशु स्तोतव्याः स्वस्तवेन वै ॥
कृत्वा भक्त्या च तत्रैव ब्राह्मणान् विधिवत्ततः ।
काञ्चनैर्वासयेद्वासः समांशैर्धर्मसंज्ञितः ॥
पुनर्गीतं तथा नृत्यं राज्यं चैव विशेषतः ।
देव्या याः पुरतोऽत्यर्थयत्नादेवं तु कारयेत् ॥
सर्वमेतत्कृतं वत्स गृह्णामि भक्तितः सदा ।
[1]सर्वस्वं चैव मे युक्तं [2]प्रच्छन्नं न स्पृशाम्यहम् ॥
प्रीत्यर्थं मम मन्त्रेण शुचिः स्नात्वा जितेन्द्रियः ।
दान्तः क्षान्तिसमायुक्तस्तरसा भक्तिमाचरेत्[3] ॥
न धारयेन्मलं काये यतस्तत्पापमीरितम् ।
न च तेन भवेत्स्वर्गो न तयोर्मोक्ष एव च ॥
एवं निष्पादयित्वा तु गृहं गच्छेच्छनैस्ततः ।

1 सर्वसंधैव—ना.
2 मच्छक्त्या—उ.
3 तस्माद्भक्तिं समाचरेत्—उ.

गत्वा प्राश्य [1]शुचिर्विप्रः पञ्चगव्यं मुदान्वितः ॥
अष्टौ चैव कुमारीश्चाप्यष्टौ च द्विजसत्तमान् ।
भोजयेद्विधिवत्त्वादौ मामुद्दिश्य च मातरः ॥
अष्टौ चैव द्विजान् भोज्य व्रतस्थान् शिवधर्मकान् ।
उद्दिश्य शंकरं देवमुमां चैव विनायकम् ॥
संतोष्य भक्षयेद्भक्त्या होतारं च विशेषतः ।
ततः क्षमापयेत् पश्चात्प्रणिपत्य मुहुर्मुहुः ॥
एतत्सामान्यमुद्दिष्टं शक्त्या विस्तरतो भवेत् ।
दीनांश्च कृपणांश्चैव कारुण्यात्तत्र भोजयेत् ॥
यद्दत्तं वेदवद्विप्रे यद्दत्तं ब्रह्मचारिणे ।
तपोनिधिषु यद्दत्तं कारुण्याच्चैव यत्तथा ॥
तत्सर्वमक्षयं दानं वैमल्येन विधानतः ।
नूनं चैवेश्वरे दत्तं सत्यमेव न संशयः ॥
अर्हानर्हांश्च संभोज्याः सर्वे चैवोत्सवे मम ।
आशया परया तृप्ताः स्त्री वान्ये वा किलाखिलाः ॥
बन्धुभिश्च ततः सार्धं मुदया परया पुनः ।
हुतभुग्यज्ञशेषं तु भुञ्जीत प्रयतात्मवान् ॥
अकाले कौमुदीं कुर्यात् कृष्णपक्षे च यः सदा ।
मासि चाश्वयुजेऽष्टम्यामारभेत् पर्वगोचरे ॥
उषित्वा वाथ नक्तेन चैकभक्तेन वा पुनः ।
विहाय पापसङ्घातं स गच्छेत्परमां गतिम् ॥
ब्राह्मणाः क्षत्रिया वाथ वैश्या वा शूद्रजातयः ।
[2]चरिष्यन्ति व्रतं चैतत् तेऽपि यास्यन्त्यनामयम् ॥

1 शुचिर्भूत्वा—उ.
2 भविष्यति—ना.

[1]एवं च विधिवत्कुर्वन् पुत्रवान् सधनो भवेत्।
[2]न लिम्पन्त्यापदो घोराः शत्रुभिर्न च बाध्यते ॥
कालीव्रतमिदं ख्यातं कर्तव्यं तत्कुलोद्भवैः ।
शान्तिपुष्टिक्षमाकामैर्विद्याकामैः प्रयत्नतः ॥
सिंहायुतसहस्रेण पूज्यमानेन चासुरैः ।
विमानेनार्कवर्णेन दिवं गच्छेद्यथाऽऽचरेत् ॥
एतद्व्रतं [3]सदा त्वं हि मयोक्तं पापनाशनम् ।
भक्त्या च परया वत्स कर्तुमर्हस्यतन्द्रितः ॥
अन्त्यजादिषु संबन्धे यः करिष्यति शंकरम् ।
हीनवर्णेन कुर्वंश्च स्यादनेन स कारकः ॥

इति कालीव्रतम ॥

## [सोमव्रतम्]

[[4]अथान्यत्संप्रवक्ष्यामि व्रतं श्रेयस्करं परम् ।
तस्योदाहरणं पुण्यं विधिवत् प्रनिबोधत ॥]
वारे सोमस्य चाष्टम्यां [5]पक्षौ सः सोममर्चयेत् ।
विधिना चन्द्रचूडाङ्कं प्राज्यान्नेन सचन्द्रकम् ॥[6]
दक्षिणार्धे हरं ध्यायेद्वामार्धे च [7]हरिं विभुम् ।[8]

1 एते for एवं—ना.

2 न च लिप्येत्पापदोषा:—ना.

3 महत् पाहि—ना.

4 हे. व्र. I., ८२९–८३१ ; भवि. पु. उत्तरपर्व, अ. ५९, श्लो. १–१५.

5 पक्षोऽसौ—ना, उ ; पक्षोभौ—हे.

6 Hemādri comments :
'पक्षोभौ' अत्र उभयत्र पक्षे नियमो अष्टमीसोमवारयो: संयोगमात्रं विवक्षितम् । 'प्राज्यान्नं' आज्यबहुलमन्नम् ।

7 रविं—ना.

8 Hemādri comments: सोमसचन्द्रकवामार्धहरिमिति विशेषणत्रयेण चन्द्रहरिरूपत्वं वामार्धस्योक्तम् .

[1]घृताद्यैरैक्षवाद्यैश्च लिङ्गं स्थाप्य च पूर्ववत् ॥
चन्दनेनेन्दुयुक्तेन दक्षिणार्धं विलेपयेत् ।
कुङ्कुमागरुणा वामं[2] घनमर्घ्यं तथैव च ॥[3]
काञ्चनेन [4]सवज्रेण हरभागं तथाऽऽर्चयेत् ।
समौक्तिकेन नीलेन हरेर्भागं विशेषतः ॥
पश्चात्पुष्पैः शुभैर्वेष्ट्य कारयेत्पुष्पमण्डलम् ।
नीराजनं पुनः कुर्यात् पञ्चविंशत्प्रदीपकैः ॥
उभाभ्यां चित्तवृत्तेन विधिना च मुहुर्मुहुः ।[5]
[6]आज्यसिद्धैः शुभैर्भक्ष्यैर्नैवेद्यं च निवेदयेत् ॥
व्रतिनो ब्राह्मणांश्चैव पूजयित्वा विभावसुम् ।[7]
मिथुनानि च संभोज्य यथाशक्त्या च दक्षयेत् ॥
अष्टम्यां पितरावर्च्य विधिनानेन सुव्रत ।
वत्सरं च तदन्ते तु कर्तव्यं यन्निबोध तत् ॥
प्रागुक्तविधिना पूज्य [illegible]युगद्वयम् ।
दद्याद्वितानके चैव पताकाघण्टिके तथा ॥
धूपसंचारणे वापि [8]दीपवृक्षौ तु शोभनौ ।
एवमादि नियोज्यैव पूर्ववद्भोज्यमाचरेत् ॥
अब्दपञ्चकमेवं हि यः करिष्यत्यसंशयम् ।
उभाभ्यां लोकमासाद्य पदं यास्यत्यनामयम् ॥

1 घृताद्यैरैक्षवान्तैश्च—हे.

2 चाग्रं—ना.

3 Hemādri comments: 'इन्दुयुक्तेन' कर्पूरयुक्तेन, 'घनं' उशीरम्.

4 Hemādri reads सचन्द्रेण and comments: 'सचन्द्रेण' हीरकयुक्तेन.

5 Hemādri comments: 'उभाभ्यां' देवीदेवाभ्याम् । 'चित्तवृत्तेन' हरिहरध्यायिना । 'विधिना' नीराजनस्य ।

6 अक्षसिद्धैः—उ.

7 Hemādri comments: 'विभावसुः' अग्निः ।

8 Hemādri comments: 'दीपवृक्षौ' वृक्षाकारौ दीपाधारौ.

[1]असंशयस्ततो जीवन्नियमेन समाचरेत् ।
इहैव [2]स हरिः साक्षान्नररूपीति लक्षयेत् ॥
[3]न स्पृशन्त्यापदस्तं च न च दुःखी भवेत्खलु ।
ज्वरग्रहादिभिर्नैव पीड्यतेऽसौ कदाचन ॥

[4]'पक्षौ' उभौ पक्षौ प्राप्य । 'प्राज्यान्नं' आज्यबहुलमन्नम् । 'घृताद्यैः' पञ्चामृतसंज्ञकैः । 'इन्दुयुक्तेन' कर्पूरयुक्तेन । 'घनम्' उशीरम् । 'सवज्रेण' हीरकयुक्तेन । 'उभाभ्याम्' (देवी)देवाभ्याम् । चित्तयुक्तेन हरिहरध्यायिना । 'विधिना' नीराजनस्य । 'पितरौ' ताविव देवौ । 'धूपसंचारणं' धूपदहनपात्रम् ॥[5]

[6]इति सोमव्रतम् ॥

## [7][शंकरार्कव्रतम्]

अथ चानेन मार्गेण शुभां तामेव चाष्टमीम् ।
संप्राप्यादित्ययोगेन प्राग्विधानेन [8]चाभ्यसेत् ॥
किं तु दक्षिणनेत्रस्थं भास्करं चाऽर्चयेद्बुधः ।
[9]पद्मरागेण हैमेन योज्येदं लेपनं शृणु ॥

1 असंशयस्था जीवन्ति—हे.
2 सरितः—हे.
3 न स्पृशेत्पापदं चान्नं—हे.
4 Commentary reproduced by Hemādri.
5 Hemādri adds at the end : तत्र व्रते नाममन्त्रैः पूजाहोमौ ।
6 इति कालिकापुराणोक्तं सोमव्रतम्—हे.
7 हे. व्र. I., ८३१–८३२ ; ना Ms. omits शंकरार्कव्रतम् and सौर्यव्रतम्.
8 वा नरः—हे.
9 पद्मनागेन—उ.

[1]नेत्रस्य च ललाटाधः कुङ्कुमं रक्तचन्दनम् ।
[2]वृत्तं च योज्य मध्ये तु हरं पूर्ववदर्चयेत् ॥[3]
अभावे [4]पद्मरागाणां हैमं सर्वत्र योजयेत् ।
रुद्रबीजं परं मूलं यतस्तस्यैव सर्वदा ॥
[5]रक्तमाल्याम्बरं [6]शुक्लं नैवेद्यं च घृतप्लुतम् ।
शेषः पूर्वविधानेन कर्तव्यो विधिविस्तरः ॥
[7]किं त्वत्रोपोष्य कुर्वीत सप्तम्यां संयतेन्द्रियः ।
[8]शंकरार्कं पुनः पूज्य घृतं गव्यं च पारयेत् ॥
एतत्प्राग्विधिना कार्यं [9]पञ्चपक्षायणे विधौ ।
कुर्वन् सूर्यादिलोकेषु भुक्त्वा भोगान् व्रजेत्परम् ॥
एतत्तीर्त्वा प्रतापी स्याद्ददानः[10] स्वजनप्रियः ।
[11]अस्मिन् लोके न बाध्येत धनवान्पुत्रवान्भवेत् ॥

[12]इति शंकरार्कव्रतम् ॥

## इत्यष्टमीव्रतानि ॥

1 नेत्रे न्यस्य for नेत्रस्य च—हे.

2 मित्रं for वृत्तं—ना.

3 Hemādri comments : अर्धचन्द्राकारं तन्मध्ये वृत्तं च लेपनं कृत्वा हेमनिबद्धं पद्मरागं वृत्तमध्ये निधाय सूर्यरूपनेत्रं कुर्यादित्यर्थः ।

4 सर्वरामानां—उ.

5 शुक्लं for रक्त—हे.

6 वल्कं for शुक्लं—हे.

7 Hemādri reads किं त्वत्रोष्य प्रकुर्वीत and comments : 'उष्य' उपोष्य ।

8 शंकरार्कयुतः—हे.

9 पञ्चाभूत्पयणावधौ—उ ; पञ्चवृक्षायणौ विधौ—हे.

10 अदीनः for ददानः—हे.

11 अस्मिंल्लोके च धनवान् लोकवांश्च भवेत्पुनः—हे.

12 इति कालिकापुराणोक्तं शंकरार्कव्रतम् ।

# अथ नवमीव्रतानि

## [शौर्यव्रतम्]

तत्र वराहपुराणे[1]

अगस्त्य उवाच—

अतः परं प्रवक्ष्यामि शौर्यव्रतमनुत्तमम् ।
येन भीरोरपि[2] महाशौर्यं भवति तत्क्षणात् ॥
मासि चाश्वयुजे शुद्धा नवमी सा ह्युपोषिता ।
सप्तम्यां कृतसंकल्पः स्थित्वाष्टम्यां निरोदनः[3] ॥
नवम्यां प्राशयेत्पिष्टं प्रथमं भक्तितो नृप ।
ब्राह्मणान्भोजयेद्भक्त्या देवीं चैव तु पूजयेत् ॥
दुर्गां देवीं महाभागां महामायां महाप्रभाम् ।
एवं संवत्सरं यावदुपोष्य [4]तु विधानतः ॥
व्रतान्ते भोजयेद्धीमान् यथाशक्त्या [5]कुमारिकाः ।
हेमवस्त्रादिभिस्तास्तु[6] भूषयित्वा[7] स्वशक्तितः ॥
पश्चात्क्षमापयेत्तां तु देवी मे प्रीयतामिति ।
एवं कृते[8] भ्रष्टराज्यो लभेद्राज्यं न संशयः ॥
अविद्यो लभते विद्यां भीरुः शौर्यं च विन्दति ।

[9]इति शौर्यव्रतम् ॥

1 हे. व्र. I., ९५७–९५८; वरा. पु., अ. ६४, श्लो. १–६.
2 भानोरपि—उ.
3 निबोध तत्—उ.
4 विधिवन्नृप—हे.
5 कुमारकान्—हे.
6 स्नातुं for तास्तु—हे.
7 पूजयित्वा—हे.
8 एवं कृत्वा—हे.
9 इति वराहपुराणोक्तं शौर्यव्रतम्—हे.

## [उभयनवमीव्रतम्]

भविष्यपुराणे

[1]सुमन्तुरुवाच

योऽब्दमेकं प्रकुर्वीत नवम्यां नक्तमादरात् ।
इह [2]भोगान्नरो भुङ्क्त्वा परत्र च दिवं व्रजेत् ॥
पौषे मासि च संप्राप्ते यः कुर्यान्नक्तभोजनम् ।
जितेन्द्रियः सत्यवादी कामक्रोधविवर्जितः ॥
पक्षयोर्नवमीं यत्ना[3]दुपवासेन पालयेत् ।
त्रिकालं पूजयेदार्यां गन्धपुष्पोपहारकैः ॥
कृत्वाग्निकार्यं विधिवद्भूमौ शय्यां प्रकल्पयेत् ।
मासान्ते स्नपनं कुर्याद्भगवत्यै[4] घृतादिभिः ॥
कृत्वा ध्यानं महापूजां चण्डिकायै प्रकल्पयेत् ।
नैवेद्यं तण्डुलप्रस्थं क्षीरसिद्धं निवेदयेत् ॥
कुमारीर्भोजयेच्चाष्टौ विप्रान् भागवतांस्तथा ।

[5]'भागवतान्' [6]भगवतीभक्तान् ॥

कृत्वा पिष्टमयीं देवीं नाम्ना चार्येति पूजयेत् ॥
चतुर्भुजां शूलधरां [7]गन्धपुष्पैः सगुग्गुलैः ।
स्नानं कृत्वा तिलैर्विप्र तिलानां प्राशनं तथा ॥
य एवं पूजयेदार्यां तस्य पुण्यफलं शृणु ।

1 हे. व्र. I., ९२१–९२८.
2 भोगानवाप्याभ्यान्—उ, हे.
3 अब्दात् for यत्नात्—ना.
4 भवान्यै च for भगवत्यै—हे.
5 Comment reproduced by Hemādri.
6 भगवतो भक्तान्—ना.
7 कुन्दपुष्पैः—हे.

सूर्यकोटिप्रतीकाशं विमानवरमास्थितः ॥
गच्छेद्दुर्गापुरं रम्यं यत्रास्ते चण्डिका स्वयम् ।
क्रीडते देवगन्धर्वैर्यावदाभूतसंप्लवम् ॥
त्रिःसप्तकुलजैः सार्धं भोगान् [1]स्वर्गे यथेप्सितान् ।
पुनरेत्य भुवं वीर राजा भवति भूतले ॥
माघमासे तु संप्राप्ते प्रकुर्यान्नक्तभोजनम् ।
कृशरां घृतसंयुक्तां भुञ्जानः [2]सञ्जितेन्द्रियः ॥
उपवासपरोऽष्टम्यां पक्षयोरुभयोरपि ।[3]
पूजयेत्त्र्यम्बिकां भक्त्या कृत्वा गोधूमचूर्णतः ॥
दुर्गामष्टभुजां वीर त्र्यम्बिकामिति नामतः ।
गन्धपुष्पोपहारैस्तु सर्वै रक्तैस्तु पूजयेत् ॥
धूपं कृष्णागरुं दद्यान्मांसं दद्याच्च माहिषम् ।
धान्यं सिद्धार्थकाः स्नाने [4]प्राशने च यवाः स्मृताः ॥
य एवं माघमासे तु पूजयेत्त्र्यम्बिकां नरः ।
[5]दिव्यं विमानमारूढः[6] सूर्यलोके महीयते ॥
प्राप्ते तु फाल्गुने मासि यः कुर्यान्नक्तभोजनम् ।
यवान्नं भुञ्जमानस्तु(?) त्यक्त्वा दूरेण योषितः ॥
कृत्वोपवासमष्टम्यां पक्षयोरुभयोर्नृप ।
पूजयेद्विधिवद्दुर्गां नाम्ना गौरीति वै नृप ॥
कृत्वा ताम्रमयीं वीर द्वात्रिंशार्धभुजां शुभाम् ।

1 भुक्त्वा for स्वर्गे—हे.

2 संयतेन्द्रियः—हे.

3 See foot-note No. 5.

4 प्राशयेच्च—ना.

5 Hemādri reads the following five lines after उपवासपरोऽष्टम्याम् etc.

6 विमानवरमारूढः—हे

पीतैस्तु पूजयेत्पुष्पैश्चन्दनागरुमिश्रितैः ॥
दध्योदनं तु नैवेद्यं धूपोऽयं सिह्लकः परः ।
स्नानप्राशनयोर्धान्यं गोमूत्रं कायशोधनम् ॥
नवम्यां च महादेवीं [1]स्नपनं तु घृतादिभिः ।
कुमारीं[2] भोजयेद्भक्त्या ब्राह्मणांश्च स्वशक्तितः ॥
य एवं पूजयेद्भक्त्या दुर्गां देवीं नृपोत्तम ।
स याति परमं स्थानं यत्र सा चण्डिका स्थिता ॥
चैत्रे मासे तु संप्राप्ते यः कुर्यान्नक्तभोजनम् ।
पिष्टकं पयसा युक्तं भुञ्जानः शालिसंभवम् ॥
पूजयेद्भगवतीं भक्त्या कृत्वा वै चन्दनस्य च ।
गन्धपुष्पोपहारैस्तु विंशार्धभुजसंमिताम् ॥
ज्वालामुखी तु वै नाम्ना कुङ्कुमागरुचन्दनैः ।
धूपं चागरुकर्पूरं भगवत्यै निवेदयेत् ॥
दद्यात्पशुमुखं भक्त्या नैवेद्यं विधिवन्नृप[3] ।
स्नाने कुशोदकं [4]धान्यं प्राशनं च नराधिप ॥
इत्थं संपूज्य देवेशीं कुमारीं भोजयेत्ततः ।
ब्राह्मणांश्च यथाशक्त्या ततो भुञ्जीत वाग्यतः ॥
पद्मरागगणैर्युक्तं सौवर्णमणिवेदिकम् ।
विमानवरमारूढो [5]विष्णुलोके महीयते ॥
वैशाखे मासि राजेन्द्र [6]नवम्यां पक्षयोर्द्वयोः ।

1 स्नानं कृत्वा—हे.
2 कुमारीः—हे.
3 ततो भुञ्जीत वाग्यतः—ना.
4 धर्म्यं—हे.
5 ब्रह्मलोके—हे.
6 पक्षयोरुभयोर्द्वयोः—हे.

उपवासपरो भक्त्या [1]पूजनीया तु चण्डिका ॥[2]
नाम्ना भगवतीत्येवं कृत्वा [3]वासमयीं विभो ।
रूपेणाष्टभुजां शुभ्रां पूर्णचन्द्रनिभाननाम् ॥
[4]मुद्गराणां च स्रग्भिस्तु पूजयेद्विधिवन्नृप[5] ।
[6]चन्दनागरुकर्पूरैर्धूपेन विजयेन च ॥
नैवेद्यं गुडपूपाश्च धूपं वा गुग्गुलं नृप ।
एवं संपूज्य विधिवत् [7]कुमारीभोजनं ततः ॥
[8]गोपुच्छे क्षालनजलं स्नानप्राशनयोर्मतम् ।
[9]हंसकुन्देन्दुसंकाशस्तेजसा[10] ध्रुवसन्निभः ॥
विमानवरमारूढो देवीलोके महीयते ।
ज्येष्ठे मासि नृपश्रेष्ठ यः कुर्यान्नक्तभोजनम् ॥
[11]शाल्यन्नमम्भसोपेतं भुञ्जानः पयसा सह ।
उपवासपरो भक्त्या नवम्यां पूजयेदुमाम्[12] ॥
[13]ब्राह्मणी त्विति वै नाम्ना श्वेतरूपेण रूपिणीम् ।
पद्मपत्रेक्षणां भक्त्या नलिनैर्विविधैरपि ॥

1 पूजयानं तु चण्डिकाम्—उ ; पूजयामास चण्डिकाम्—हे.

2 Hemādri comments : अष्टम्यां नक्तं नवम्यामुपवासप्रकाराद्वेदितव्यमुत्तरेष्वपि मासेषु ।

3 पक्षमयीं—हे.

4 मुकुराणां स्रजोभिस्तु—ना ; मुद्गराणां स्रजाभिस्तु—हे.

5 पूजयेच्छिवनायिकाम्—हे.

6 नानागरुकर्पूरधूपेन—हे.

7 कुमारीभोजयेत्ततः—हे.

8 Line omitted by Hemādri.

9 पुष्पेषुतनुसंकाश—हे.

10 तेजस्वी—हे.

11 शाल्युत्तमं श्रतं शुभ्रं—हे.

12 इमम् for उमाम्—हे.

13 Hemādri omits the following two lines.

कुङ्कुमागरुकर्पूरैर्धूपेनागरुणा सह[1] ।
अशोकवर्तिकमुखैर्नानाभक्ष्यैस्तु पूजयेत् ॥
[2]कुमारीं पूजयेच्चापि स्वशक्त्या ब्राह्मणांस्तथा ।
गोक्षीरप्राशनात्पूतस्ततो भुञ्जीत वाग्यतः ॥
भोजयित्वा स्त्रियः शक्त्या कुमारीश्च विशेषतः ।
प्रभयादित्यसंकाशस्तेजसा वह्निसंभवः ॥
विमानवरमारूढो ब्रह्मलोके महीयते ।
आषाढे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् ॥
भुञ्जानः खण्डखाद्यानि पायसं च नराधिप ।
उपवासपरो भक्त्या नवम्यां पक्षयोर्द्वयोः ॥
पूजयेच्छ्रद्धया दुर्गामैन्द्रीनाम्ना तु नामतः ।
[3]ऐरावतगतां शुभ्रां श्वेतरूपेण पक्षिणीम् ॥
कृत्वा स्वर्णमयीं भक्त्या [4]नानाभरणभूषिताम् ।
नानापुष्पविशेषैस्तु [5]भक्ष्यैर्नानाविधैस्तथा ॥
यक्षकर्दमगन्धैस्तु धूपैः सागरुचन्दनैः ।
एवं संपूज्य चेन्द्राणीं कुमारीं भोजयेत्ततः ॥
स्त्रियो विप्रान् यथाशक्त्या ततो भुञ्जीत वाग्यतः ।
[6]पञ्चगव्यकृतस्नानः पञ्चगव्यकृताशनः ॥
ध्यायमानस्तथा चैन्द्रीं [7]स्वपेद्भूमौ नराधिप ।

1 अथवा for सह—हे.
2 Hemādri omits the following five lines.
3 ऐरावणगतिं—हे.
4 नानानयनभूषिताम्—उ, हे.
5 यक्षैः for भक्ष्यैः—ना.
6 पञ्चगव्यं ततः स्नातः—उ, ना.
7 स्वयंभूमौ—हे.

य एवं पूजयेद्दुर्गां [1]शक्त्या श्रद्धासमन्वितः ॥
[2]ऐरावतसमारूढ इन्द्रस्यानुचरो भवेत् ।
श्रावणे मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् ॥
क्षीरषष्ठिकभक्तेन सर्वभूतहिते रतः ।
उपवासपरो वीर नवम्यां पक्षयोर्द्वयोः ॥
[3]पूजयेद्विधिवद्भक्त्या श्रद्धया चण्डिकां नृप ।
कौमारीमिति वै नाम्ना नामतः पूजयेत्सदा[4] ॥
कृत्वा रौप्यमयीं भक्त्या[5] घोरां वै पापनाशिनीम् ।
[illegible]य पुष्पैस्तु गन्धैश्चागरुचन्दनैः ॥
[6]धूपेन च महाङ्गेन मोदकैश्चापि पूजयेत् ।

'महाङ्गो धूपः' धूपप्रकरण उक्तः ॥

कुमारीं पूजयेद्भक्त्या स्त्रियो विप्रांश्च भक्तितः ॥
भुञ्जीत वाग्यतः पश्चाद्बिल्वपत्रकृताशनः ।
एवं संपूजयेद्देवीं श्रद्धया पर[illegible]ः ॥
स याति परमं स्थानं यत्र देवो गृहस्थितः ।
नरो भाद्रपदे मासि यः कुर्यान्नक्तभोजनम् ॥
भुञ्जानः पायसं वीर कालशाकं च श्रद्धया ।
उपवासपरो नित्यं नवम्यां पक्षयोर्द्वयोः ॥
पूजयेद्वैष्णवीं भक्त्या शङ्खचक्रासिधारिणीम् ।
जातीपुष्पैर्महाबाहो गन्धैः श्रीखण्डमिश्रितैः ॥

1 भक्त्या—हे.
2 Hemādri omits the following three lines.
3 पूजयेद्ब्राह्मणं भक्त्या—ना.
4 मतः संपूजयेत्सदा—ना.
5 शक्त्या—उ.
6 Hemādri omits the following six lines.

श्री[1]खण्डागरुकर्पूरैः सिल्हकेन च धूपयेत् ।
नैवेद्यं [2]घृतसंपूर्णं यथाशक्त्या निवेदयेत् ॥
मांसेन [3]प्रीणनं तस्यास्ततः पूज्याश्च कन्यकाः ।
गोशकृत् प्राश्य विधिवत् ततो भुञ्जीत वाग्यतः ॥
प्रीणयित्वा द्विजान् शक्त्या योषितश्च नराधिप ।
य एवं पूजयेद्भक्त्या वैष्णवीं सततं [4]नरः ॥
विमानवरमारूढो विष्णुलोके महीयते ।
राजन्नाश्वयुजे मासि यः कुर्यान्नक्तभोजनम् ॥
गुडान्नं [5]प्रभुञ्जीत जितात्मा [6]सयंतेन्द्रियः ।
उपवासपरो भूत्वा नवम्यां पक्षयोर्द्वयोः ॥
माहेश्वरीं पूजयेत्तु कृत्वा रुक्ममयीं शुभाम् ।
वृषभं च [7]ततो वीर श्वेतपुष्पोपलेपनैः ॥[8]
अजानां महिषाणां च मेषाणां च तथा वधात् ।
प्रीणयेद्विधिवद्देवीं मांसशोणिततर्पणैः ॥
कुमारीं भोजयेद्भक्त्या[9] ब्राह्मणान् योषितस्तथा ।
भक्ष्यभोज्यैरनेकैश्च मांसैश्च विधिवन्नृप ॥
[10]पूजयित्वा तु यां दुर्गां बिल्वपत्रैश्च द्रोणकैः ।
बिल्वपत्राशनात् पूतस्ततो भुञ्जीत वाग्यतः ॥

1 शङ्खं चागरुकर्पूरैः—ना, उ.
2 पायसैर्युक्तं—ना.
3 प्राशनं—ना.
4 नृप—हे.
5 प्रभुञ्जानो—हे; प्रयुञ्जानो—उ.
6 स जितेन्द्रियः—ना.
7 तथा—उ, हे.
8 Hemādri adds one line after this :
धूपनं च महाङ्गेन खण्डखाद्यादिभोजनैः ।
9 शक्त्या for भक्त्या—उ.
10 Hemādri omits the following three lines.

एवं संपूजयित्वा तु भक्त्या माहेश्वरीं नृप ।
अश्वमेधसहस्रस्य फलं प्राप्य दिवं व्रजेत् ॥
[1]द्विजाङ्गप्रभया तुल्यः कान्त्या पुष्पायुधस्य च ।
पुष्पकं यानमारूढो मोदते शाश्वतीः समाः ॥
कार्तिके मासि राजेन्द्र यः कुर्यान्नक्तभोजनम् ।
क्षीरोदनं प्रभुञ्जानः सत्यवादी जितेन्द्रियः ॥[2]
पूजयेच्छ्रद्धया देवीं वाराहीं चक्रधारिणीम् ।
शतपत्रस्रजाभिश्च कुङ्कुमेन विलेपयेत् ॥
कृष्णागरुं सिह्लकं च धूपं देव्यै[3] निवेदयेत् ।
नैवेद्यं [4]खण्डवेष्टं तु नवम्यां पक्षयोर्द्वयोः ॥
एवं संपूज्य वाराहीं कुमारीं भोजयेत्ततः ।
ब्राह्मणांश्च यथाशक्त्या ततो भुञ्जीत वाग्यतः ॥
प्राशयित्वा तिलान् वीर दत्वा हुत्वा च शक्तितः ।
एवं संपूजयित्वा तु वाराहीं स्वर्गमाप्नुयात् ॥
क्रीडते विष्णुना सार्धं क्रीडमानैः सुरासुरैः ।
पुनरेत्य भुवं राजा सार्वभौमो भवेन्नृप ॥
राजन् मार्गशिरे मासि यः कुर्यान्नक्तभोजनम् ।
भुञ्जानः शष्कुलीर्नित्यं जितात्मा च जितेन्द्रियः ॥
पूजयेद्विधिवद्भक्त्या [5]चामुण्डां मुण्डसूदनीम् ।
नीलोत्पलैस्तथा पद्मैः बिल्वपत्रकदम्बकैः ॥
चन्दनागरुकर्पूरैर्गुग्गुलेन तथा नृप ।

1 द्विजेन्द्रप्रभया—हे.
2 Hemādri adds a line after this:
यवान्नं पयसा युक्तं भुञ्जानः संयतेन्द्रियः ।
3 देव्याः—ना.
4 खण्डवेष्टयांस्तु—हे.
5 चण्डसूदनीम्—उ ; मुण्डनाशनीम्—हे.

भक्ष्यैर्भोज्यैरनेकैश्च सुरामांसैरनेकशः ॥
रुधिरेण तथा वीर शिरोभिर्विविधैस्तथा[1] ।
[2]अजानां महिषाणां च स्वदेहस्य च भेदनात् ॥
नवम्यां विधिवद्भक्त्या पक्षयोरुभयोरपि ।
कुमारीर्भोजयेच्चापि ब्राह्मणान् योषितस्तथा ॥
पञ्चगव्यकृतस्नानोऽसृक् प्राश्य[3] (च) विधानतः ।
ततो भुञ्जीत राजेन्द्र भूमिं कृत्वा तु भाजनम् ॥
य एवं पूजयेद्भक्त्या चामुण्डां सततं नरः ।
स याति परमं स्थानं यत्र सा परमा कला ॥
सौवर्णं यानमारूढो[4] ध्वजमालाकुलं[5] शुभम् ।
मोदते दैवतैः सार्धं यावदिन्द्राश्चतुर्दश ॥
पुनरेत्य महाराज[6] राजा भवति भूतले ।
[7]प्रभयोज्ज्वलसंकाशस्तेजसा [8]वह्निसन्निभः ॥
[9]कान्त्या चन्द्रमसो वीर बुद्ध्या धिषणशुक्रयोः ।

इत्युभयनवमीव्रतम्[10] ॥

1 नृप for तथा—उ, हे.
2 गजाविमहिषाणां च—हे.
3 सम्यक् प्राश्य for असृक् प्राश्य—हे.
4 यानमारुह्य—उ, हे.
5 कृतं for आकुलं—हे.
6 महीं वीर—हे.
7 प्रभयाम्बुजसंकाशः—उ ; प्रभया भृगुसंकाशः—हे.
8 रविसन्निभः—हे.
9 कान्त्या चन्द्रसमो वीर युद्धे चन्द्रसमो भवेत् ।
रूच्या यमसमो वीर बुध्या धिषणशुक्रयोः ॥—हे.
10 इति भविष्यत्पुराणोक्तमुभयनवमीव्रतम्—हे.

## [1][अथ नामनवमीव्रतम्]

नवम्यां शुक्लपक्षे तु कृते नक्ते विशेषतः ।
मासि चाश्वयुजे वीर दुर्गा देवीति पूजयेत् ॥
बिल्वपत्रैः [2]स्रजाभिश्च द्रोणपुष्पैस्तु सर्वशः ।
[3]गुग्गुलेनाज्यदिग्धेन भक्ष्यभोज्यैरनेकशः ॥
[4]परमान्नेन रत्नेन महिषाजैर्विघातितैः ।
संप्रीणनं तथा कुर्याद्देव्या वै भक्तिमाचरन् ॥
भोजयित्वा नवम्यां तु ब्राह्मणानां च कन्यकाः ।
[5]ब्राह्मणांश्च स्त्रियश्चान्या यथाविभवशक्तितः ॥
पञ्चगव्यं ततः प्राश्य नक्तं भुञ्जीत वाग्यतः ।
य एवं पूजयेदत्र दुर्गां [6]भक्तिसमन्वितः ॥
सोऽश्वमेधसहस्रस्य फलं प्राप्य दिवं व्रजेत् ।[7]
कृत्वोपवासमष्टम्यां मासि मार्गशिरे नृप ॥
नवम्यां पूजयेद्यस्तु भक्त्या[8] भगवतीं बुधः ।
नाम्ना भगवतीत्येवं जातीपुष्पैर्नराधिप ॥
कर्पूरागरुधूपेन मधुना पायसेन च ।
भोजयित्वा कुमारीस्तु स्त्रियो विप्रांश्च शक्तितः[9] ॥

1 हे. व्र. I., ९२८–९३३.

2 तथाद्भिश्च—हे.

3 गुग्गुलेनाथ दग्धेन—हे ; गुगुलेनाज्यस्निग्धेन—ना.

4 Line corrupt in ना and उ; reconstructed with the help of Hemādri.

5 ब्राह्मणानां स्वस्त्रियश्च—हे.

6 भक्त्या समन्वितः—हे.

7 Hemādri adds a line after this : कार्यमाश्विनवत्सर्वं कार्तिकेऽपि हि सत्तम ।

8 शक्त्या—हे.

9 भक्तितः—उ.

गोमयं प्राश्य विधिवत् ततो भुञ्जीत वाग्यतः ।
एवं च पूजयेद्भक्त्या नरो भगवतीं [1]तथा ॥
राजसूयफलं प्राप्य [2]स गच्छति नरो दिवम् ।
[3]पुष्येऽप्येवं महाबाहो नवम्यां स जितेन्द्रियः[4] ॥
पूजयेत्त्र्यम्बिकां चैव नाम्नानेन[5] नरः शिवाम् ।
करवीरस्य पुष्पैस्तु कुङ्कुमस्य च केसरैः ॥
निवेद्य सिल्हकं धूपं नैवेद्यं मांसपूपकाः[6] ।
[7]भोजयेद्द्विजकन्यास्तु स्त्रियो विप्रांश्च शक्तितः ॥
विधिवत्प्राश्य गोमूत्रं ततो भुञ्जीत वाग्यतः ।
य एवं पूजयेदत्र[8] वाजपेयशतं लभेत् ॥
माघशुक्लनवम्यां तु [9]पूजयेदम्बिकां बुधः ।
सर्वमङ्गलनामाख्यां [10]यूथिकाकुसुमैर्नृप ॥
प्रबोधाख्येन धूपेनाप्यथवा गुग्गुलेन च ।
नैवेद्यं चैव [11]पूपाश्च मत्स्यमांसं च भारत ॥
पूजयित्वा नरोऽप्येवं[12] विधिवत्सर्वमङ्गलाम् ।
कुमारी[13] भोजयेच्छक्त्या [14]स्त्रियो विप्रांश्च शक्तितः ॥

1 नरः—उ; नृप—हे.
2 ततः शिवपुरं व्रजेत्—हे.
3 पौषे for पुष्ये—ना.
4 संयतेन्द्रियः—उ.
5 नाम्ना तात—हे.
6 मांसपूरिकम्—हे.
7 पूजयेत् for भोजयेत्—हे.
8 मर्त्यो for अत्र—हे.
9 पूजयेच्चण्डिकां—उ, हे.
10 यूथिकाकुसुमैर्नृप—हे.
11 धूपं च—ना.
12 नरो ह्येवं—उ, हे.
13 कुमारीः—हे.
14 प्रीयतां सर्वमङ्गला—हे.

[1]शृङ्गप्रक्षालनं तोयं विधिवत्प्राश्य सुव्रत ।
अश्नीयाद्वाग्यतो ह्येवं ध्यायमानस्तु चण्डिकाम् ॥
य एवं पूजयेद्भक्त्या विधिवत्सर्वमङ्गलाम् ।
गोमेधानां शतं लब्ध्वा गोलोके स महीयते ॥
फाल्गुने मासि राजेन्द्र चण्डिकेति सदार्चयेत् ।
नाम्ना भगवतीं देवीं [2]कञ्जपुष्पैस्तु पूजयेत् ॥
धूपेनागरुणा वीर सिल्हकेनापि चार्चयेत् ।
नैवेद्यं मोदकान् [3]दत्वा मधु मांसं पयस्तथा ॥[4]
पूर्वोक्तान् भोजयित्वा तु यथाशक्त्या विधानतः ।
[5]य एवं पूज्य विधिवच्चण्डिकां [6]चण्डमुण्डनीम् ॥
अग्निष्टोमस्य यज्ञस्य फलं शतगुणं भवेत् ।
चैत्रे मासि महाबाहो आर्या भगवती स्मृता ॥
पूजयेद्विधिवद्भक्त्या पुष्पैर्मुद्गरकस्य च ।[7]
धूपेन कुसुमौघेन कासारेण च पूजयेत् ॥
[8][वैशाखे मासि राजेन्द्र नाम्ना भगवतीं यजेत् ।]
प्राशयेत्पुष्पतोयं तु ततो भुञ्जीत वाग्यतः ॥
[9]कुमारीं भोजयेद्भक्त्या योषितो ब्राह्मणांस्तथा ।

1 Hemādri omits the following three lines.

2 कुन्दपुष्पेण—हे ; कुञ्जपुष्पैस्तु—उ.

3 दद्यात्—हे.

4 Hemādri adds a line after this : गोक्षीरप्राशनात्पूतः पूतो भुञ्जीत वाग्यतः ।

5 एवं संपूज्य—हे.

6 मुण्डमण्डनाम्—हे.

7 Hemādri adds a line after this: धूपेनागरुमिश्रेण सिह्लकेनापि चार्चयेत्—हे.

8 Line omitted by ना and उ; supplied by Hemādri.

9 कुमारीर्भोजयेद्भक्त्या पालाशकुसुमैरियम् ।
धूपं कृत्वागरुं चैव नैवेद्यं घृतपूपकान् ॥—हे.

एवं पूज्याम्बिकां चात्र ज्योतिष्टोमफलं लभेत् ॥
ज्येष्ठे मासि प्रियां देवीं [1][पूजयेदम्बिकामुमाम् ।
कुशपुष्पोदकं प्राश्य ततो भुञ्जीत वाग्यतः ॥
कुमारीर्योषितो विप्रान्] पूजयेद्विधिवन्नृप ।
यूथिकाकुसुमैर्भक्त्या धूपेन हि बलेन च ॥

'बलेन' गन्धरसेन ॥

[2]शाल्योदनरसानां च श्रियै नैवेद्यमादिशेत् ।
एवं पूज्य श्रियं देवीं विष्णुलोके महीयते ॥
आषाढे शुक्लपक्षस्य नवम्यां पूजयेदुमाम् ।
[3]कर्णकोटीति नाम्नी वै [4]लम्बकर्णा प्रकीर्तिता ॥
शमीपत्रकदम्बैस्तु पूजयेद्विधिवन्नृप ।
[5][कर्पूरागरुमिश्रेण धूपेन च कपालिनाम् ॥
पूजयित्वा भगवतीं कुमारीं भोजयेत्ततः ।
स्त्रियश्चापि यथाशक्त्या ब्राह्मणांश्च नराधिप ॥
शमीपत्रं ततः प्राश्य ततो भुञ्जीत वाग्यतः ।
एवं पूज्य महाकालीं राजसूयफलं लभेत् ॥
श्रावणे मासि राजेन्द्र नवम्यां चण्डमर्दिनीम् ।
नारायणीति वै नाम्ना पूजयेत्सततं बुधः ॥
रक्तैस्तिलैः सबकुलैः सकदम्बैस्तथा नृप ।
सघृतं गुग्गुलं धूपं नैवेद्यं घृतपायसम् ॥
एवं संपूज्य विधिवत्कुमारीर्भोजयेत्ततः ।

1 Portion in brackets omitted in ना and उ; supplied by Hemādri.
2 शाल्योदरजलाजाश्च—हे.
3 कर्णमौढीति—हे.
4 लम्बकर्णी—हे.
5 Portion in brackets omitted in ना and उ; supplied by Hemādri.

योषितश्च तथा विप्रान् शक्त्या च विधिवन्नृप ॥
भोजयित्वा घृतं प्राश्य नवम्यां विधिवन्नृप ।
एवं संपूजयेद्देवीं स गच्छेत्परमं पदम् ॥
मासि भाद्रपदे शुक्ले नवम्यां चन्द्रिकां सदा ।
महानन्देति वै नाम्ना पूजयेद्विधिवन्नृप ॥
श्वेतरक्तैस्तथा पीतैः सर्वपुष्पैश्च भारत ।]
कर्पूरागरुमिश्रेण गुग्गुलेन विशेषतः ॥
भक्ष्यभोज्यैरनेकैश्च मोदकैर्लोपिकादिभिः ।
एवं संपूज्य विधिवन्महानन्दां[1] नराधिप ॥

[2]'लोपिका' गोधूमचूर्णपिण्डिका ॥

कुमारीं पूजयेद्भक्त्या योषितो ब्राह्मणांस्तथा ।
भोजयित्वा ततो बिल्वं प्राशयेत्कायशोधनम् ॥
भूमिं तु भाजनं कृत्वा ततो भुञ्जीत वाग्यतः ।
एवं [3]संपूजयित्वा तु ब्रह्मलोके महीयते ॥
वर्षान्ते भोजयेद्विप्रान् दुर्गाभक्तिपरायणान् ।
पायसं मधुसंयुक्तं घृतेन च [4]परिप्लुतम् ॥
कुमारीं भोजयित्वा तु दद्याच्चात्र षडङ्गिनीम् ।[5]

'षडङ्गिनी' गौः ॥

[6]वर्षमेकं चरेदेवं नैरन्तर्येण यो नरः ॥
नामाख्यां नवमीं भक्त्या तस्य पुण्यफलं शृणु ।

1 महादेवीं—हे.
2 Comment reproduced by Hemādri.
3 त्रिः पूजयित्वा—हे.
4 पवित्रकम्—हे.
5 Hemādri adds: कपिलां कुरुशार्दूल शीलयुक्तां पयस्विनीम् ।
6 करोति वै वर्षमेकं—हे.

सर्वपापविनिर्मुक्तः सर्वैश्वर्यफलप्रदः ॥
वसेद्दुर्गापुरे नित्यं न चेहायाति वै पुनः ।
एवं यः कुरुते पुण्यां नवमीं नामसंज्ञिताम् ॥
स हि कामानवाप्याथ ब्रह्मलोके महीयते ।
अपुत्रो लभते पुत्रानधनो लभते धनम्[1] ॥
कन्यार्थी लभते कन्यां यशोऽर्थी लभते यशः ।

[2]इति नामनवमीव्रतम् ॥

## [अथ रूपनवमीव्रतम्]

[3]सुमन्तुरुवाच—

शूलं पिष्टमयं कृत्वा [4]ज्येष्ठे मासि नराधिप ।
कृत्वा तु राजतं पात्रं सुवर्णकृतकर्णिकम् ॥
निवेद्य श्रद्धया वीर भगवत्यै [5]प्रपूज्यताम् ।
कामतोऽपि कृतं पापं भ्रूणहत्यादि यद्भवेत् ॥
तत्सर्वं शूलदानेन देवी नाशयते ध्रुवम् ।
विमानवरमारूढो देवगन्धर्वपूजितः ॥
कल्पकोटिशतं साग्रं [6]स्वर्गलोके महीयते ।
चण्डिका [7]प्रीयतां मेति य एवं नृप यच्छति ॥

1 निर्धनश्च धनं लभेत्—हे.
2 इति भविष्यत्पुराणोक्तं नामनवमीव्रतम्—हे.
3 हे. व्र. I., ९३३-९३७.
4 मार्गे—हे.
5 प्रपूजितम्—हे.
6 दुर्गालोके—हे.
7 प्रीतिमाप्नोति यदीच्छेद्विपुलां श्रियम्—हे.

[1]क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
दुर्गापूजाग्निहवनं संतोषस्तेयवर्जनम् ॥
सर्वव्रतेष्वयं धर्मः सामान्येन व्यवस्थितः ।
विशेषमपि वक्ष्यामि प्रतिमासं व्रतं तु ते ॥
मार्गशीर्षे शुभे मासि हंसपिष्टविनिर्णयम् ।
गन्धमाल्यैरलंकृत्य ब्रह्माण्यै विनिवेदयेत् ॥
वर्षकोटिशतं साग्रं दुर्गालोके महीयते ।
पौषे गजं चतुर्दन्तं गन्धमाल्यैरलंकृतम् ॥
कृत्वा रुक्ममयं भक्त्या न्यस्य पात्रे हिरण्मये ।
इन्द्राण्यै विधिवद्दद्यान्नानामणिविभूषितम् ॥
य एवं पूजयेद्भक्त्या इन्द्राणीं श्रद्धया नरः ।
ऐरावतसमारूढः सौम्यलोके महीयते ॥
वर्षकोटिशतं साग्रं देवगन्धर्वपूजितः ।
माघे कृत्वा तु वै [2]मेषं सौवर्णमयमुत्तमम् ॥
कृत्वा रुक्ममये पात्रे स्वाहायै विनिवेदयेत् ।
[3]नानागन्धैः समायुक्तं नानापुष्पोपशोभितम् ॥
विनिवेद्य नरो भक्त्या ह्यग्निलोके महीयते ।
दिव्यं विमानमारूढो ध्वजमालाकुलां शुभाम् ॥
पुनरेत्य महीं राजा मण्डलाधिपतिर्भवेत् ।
मयूरं फाल्गुने मासि कृत्वा पिष्टमयं नृप ॥
गन्धमाल्यैरलंकृत्य [4]कुमार्यै विनिवेदयेत् ।
निवेद्य विधिवद्भक्त्या विमानवरमास्थितः ॥

1 Hemādri omits the following eight lines.
2 माषं—ना.
3 भक्तगन्धैः—है.
4 कौमार्यै—ना.

क्रीडते देवगन्धर्वैर्गुहेन च महात्मना ।
चैत्रे मासि महाबाहो गरुडं पिष्टजं कृतम् ॥
संपूजयित्वा विधिवद्वैष्णव्यै विनिवेदयेत् ।
स्रजाभिर्विविधैर्वीर गन्धमाल्योपशोभितैः ॥
तं निवेद्य महाबाहो विष्णुलोके महीयते ।
चित्रयानं समारुह्य [1]नानामणिकदम्बकैः ॥
वर्षकोटिशतं साग्रं [2]तेजसा प्रज्वलन्निव ।
कृत्वा मणिमयं वीर [3]हारं वै लोकपूजितम् ॥
गन्धमाल्योपहारैश्च पूजयित्वा विधानतः ।
[4]वाराह्यै विनिवेद्येह इन्द्रलोके महीयते ॥
वर्षकोटिशतं साग्रं तेजसा वह्निसन्निभः ।
वैशाखे मासि राजेन्द्र कृत्वा देवं प्रणम्य तु ॥
सर्वताम्रमयं भक्त्या सुवर्णमणिभूषितम् ।
[5]पूजयित्वा विचित्रैस्तु कुङ्कुमैर्गुग्गुलेन च ॥
[6]चामुण्डायै निवेद्येह चिन्तितं लभते फलम् ।
प्रयाति च परं लोकं यत्र सा चण्डिका स्थिता ॥
[7]सौरादिसर्वलोकेषु [8]भुक्त्वा भोगानशेषतः ।
क्रमादागत्य लोकेऽस्मिन् नरेन्द्रो जायते ध्रुवम् ॥
[9]बहुपुत्रो बहुधनः सर्वशत्रुभयंकरः ।

1 नानाम्नोदकदम्बकैः—हे.
2 ज्वलन्निव सुतेजसा—हे.
3 वाराहं for हारं वै—हे.
4 Hemādri omits the following four lines.
5 चित्रैस्तु कुसुमैरेव गुग्गुलेन सुगन्धिना—हे.
6 चामुण्डायेति नैवेद्यंहविष्यान्नैर्लभेत्फलम्—हे.
7 Hemādri omits the following two lines.
8 भक्त्या—उ.
9 पलायते च चौरादि सर्वशत्रुर्भयंकरः—हे.

कृत्वा पिष्टमयं [1]वीर कच्छपं रत्नभूषितम् ॥
भूषयित्वा [2]स्रजाभिस्तु पुष्पाणां चन्दनेन च ।
निवेद्य भक्त्या वारुण्यै रुद्रलोके महीयते ॥
शङ्खकुन्देन्दुसंकाशं विमानवरमास्थितः ।
वर्षकोटिशतं साग्रं [3]क्रीडयित्वा नराधिपः ॥
पुनरेत्य [4]महीं राजा मण्डलाधिपतिर्भवेत् ।
कृत्वा मृगं पिष्टमयमाषाढे रत्नभूषितम् ॥
स्वर्णशृङ्गं रौप्यखुरं वायव्यै विनिवेदयेत् ।
पूजयित्वा तु विधिवत् [5]पुष्पधूपोपलेपनैः ॥
निवेद्यैवं[6] महाबाहो वायुलोके महीयते ।
नरयानं पिष्टमयं कृत्वा राजन् सुशोभनम् ॥
[7]अनेकरूपकोपेतं श्रावणे मासि भूपते ।
पुष्पमालाकुलं दिव्यं ध्वजमालाकुलं तथा ॥
गन्धपुष्पोपहारैश्च पूजयित्वा विधानतः ।
कौबेर्यै विनिवेद्येह चाश्वमेधफलं लभेत् ॥
प्रयाति च परं स्थानं [8]दुर्गादेवीप्रपूजितम् ।
कृत्वा भाद्रपदे मासि सर्वहेममयं विभो ॥
[9]महिषं दिव्यसंस्थानं गन्धमाल्योपशोभितम् ।

1 ज्येष्ठे—हे.
2 रजोभिस्तु—उ; रजोभिश्च—हे.
3 क्रीडित्वा स नराधिपः—उ.
4 महीं राजन्—उ; महाराजो—हे.
5 पुष्पधूपविलेपनैः—हे.
6 नैवेद्येन—हे.
7 अनेकावरकोपेतं—हे.
8 दुर्गालोके महीयते—हे.
9 महिष्यं—ना.

याम्यै निवदयेद्भक्त्या भगवत्यै विधानतः ॥
एवं निवेदयेद्भक्त्या सूर्यलोके महीयते ।
मासि[1] चाश्वयुजे वीर [2]मृन्मयं वृषभं शुभम् ॥
[3]कृत्वा निवेदयेद्भक्त्या माहेश्वर्यै विधानतः ।
विल्वपत्रस्रजाभिस्तु पूजयित्वा विधानतः ॥
आश्विन्यैश्चैव[4] गोधूमैर्भक्ष्यभोज्यैरनेकशः ।
नानावस्त्रसमायुक्तं कृत्वा पुष्पमयं [5]शुभम् ॥
विचित्रयानमारूढो रुद्रलोके महीयते ।
कल्पकोटिशतं साग्रं [6]स्वर्गे वसति क्रीडयेत् ॥
[7]अप्सरोगणसंयुक्तः क्रीडन् सुरगणैः सह ।
[8]काममागत्य लोकेऽस्मिन् राजा भवति भूतले ॥
[9]सप्तधान्यसमायुक्तं सर्वबीजरसादिभिः ।
[10]वलवद्वर्तनं वीर वितानच्छत्रशोभितम् ॥
[11]गन्धमाल्यैश्च बहुभिः पूजितं च तथा नृप ।
कृत्वा [12]रौप्यमयं भक्त्या विधिवच्चन्द्रमण्डलम् ॥
सुवर्णमणिमुक्ताढ्यं रोहिण्यै विनिवेदयेत् ।

1 तथा—हे.

2 भगवत्ये विधानतः—हे.

3 Hemādri omits the following two lines.

4 सुस्निग्धैश्चैव—हे.

5 द्विज—हे.

6 क्रीडयित्वा गणैः सह—हे.

7 Line omitted by Hemādri.

8 क्रमादागत्य—हे.

9 सप्तधातुसमायुक्तं—हे.

10 Hemādri reads: 'बाहुले बहुलं वीर' and comments: 'बाहुले कार्तिके; नलवद्वर्तनं—उ.

11 गन्धमाल्यैश्च धूपैश्च बहुभिः पूजितं तथा—उ

12 रुक्ममयं—हे.

य एवं कुरुते भक्त्या तस्य पुण्यफलं शृणु ॥
वेदागमेषु[1] यत्पुण्यं कथितं मुनिभिः पुरा ।
तत्पुण्यं कोटिगुणितं प्राप्नुयान्नात्र संशयः ॥
स याति परमं स्थानं [2]यत्र सा चण्डिका स्थिता ।
देवदानवगन्धर्वैः स्तूयमानो गणादिभिः ॥
कल्पकोटिशतं साग्रं क्रीडते सह दैवतैः ।
चन्द्रलोकादिलोकेषु भोगान् भुक्त्वा यथेप्सितान् ॥
पुण्यक्षयादिहागत्य [3]पुनरेव महीपतिः ।
सुरूपः सुभगो नित्यं [4]चण्डिकावरदानतः ॥
[5]यञ्च कामं समुद्दिश्य नरनारीनपुंसकाः ।
[6]पूजयन्ति यदा देवीं तत्सर्वं तु लभन्ति ते ॥
मृन्मयं दारवं शैलमिष्टकाभिः कृतं तथा ।
गृहं संचर राजेन्द्र यथाविभवविस्तरैः ॥
सर्वोपकरणोपेतं सर्वधान्यप्रपूरितम् ।
भगवत्यै गृहं दत्वा सर्वान् कामानवाप्नुयात् ॥
य एवं कुरुते नक्तं [7]स्वयमेककमादरात् ।
नवम्यामुपवासं तु कुर्वाणो विधिवन्नृप ॥
रूपाणि यच्छमानस्तु पूर्वोक्तानि नराधिप ।
अश्वमेधसहस्रस्य राजसूयशतस्य च ॥
लब्ध्वा फलं महाबाहो ब्रह्मलोके महीयते ।

1 वेदान्तेषु च—हे.
2 चण्डिका परमा यतः—हे.
3 राजा भवति भूतले—उ, हे.
4 चन्द्रिका for चण्डिका—हे.
5 कल्पकोटिं—हे ; पञ्चकामं—ना.
6 Hemādri omits the following four lines.
7 स्वयकमेकमादरात्—उ ; एकभक्तमथापि वा—हे.

कल्पकोटिसहस्राणि पूज्यमानः सुरासुरैः ॥
पुण्यक्षयादिहागत्य [1]पुनरेव महीपतिः ।
राजा भवति दुर्धर्षः सप्तद्वीपाधिपो नृप ॥

[2]इति रूपनवमीव्रतम् ॥

## [अथ रथनवमीव्रतम्]

[3]सुमन्तुरुवाच—

[4]कृत्वैवाश्वयुजे मासि [5]शुक्लपक्षे नराधिप ।
नवम्यामुपवासं तु [6]दुर्गादेवीं प्रपूजयेत् ॥
पुष्पधूपोपहारैश्च ब्राह्मणानां च तर्पणैः ।
पूजयित्वा रथं कृत्वा नानावस्त्रोपशोभितम् ॥
शोभितं ध्वजमालाभिश्छत्रचामरदर्पणैः ।
नानापुष्पस्रजाभिस्तु सिंहैर्युक्तां मनोरमाम् ॥
कृत्वा स्वर्णमयीं दुर्गां महिषासनशोभिताम् ।[7]
विन्यस्य रथमध्ये तु पूजयेत्कृतलक्षणाम् ॥
तं रथं राजमार्गेण शङ्खभेर्यादिनिःस्वनैः ।
नवम्यां भ्रामयित्वा तु [8]नयेद्दुर्गालयं नृप ॥

1 राजा भवति भूतले—उ.

2 इति भविष्यत्पुराणोक्तं रूपनवमीव्रतम्—हे.

3 हे. व्र. I., ९४६–९४८.

4 कृत्वा चाश्वयुजे—उ.

5 कृष्णपक्षे—हे.

6 दुर्गां देवीं—उ.

7 Hemādri comments: दुर्गारूपं तु विष्णुधर्मोत्तरात्—
आलीढस्थानसंस्थानां तथा राजन् चतुर्भुजाम् ।
स्रुचः पात्रकरां देवीं शूलखड्गधरां तथा ॥
चतुर्थश्च करस्तस्यास्तथा कार्यस्तु सामिषः ॥ इति ।

8 नयेद्दुर्गातपं—हे.

तत्र जागरपूर्वं तु प्रदीपाद्युपशोभिताम् ।
नानाप्रेक्षणकैर्वीर नृत्यमानैश्च [1]पुत्रकैः ॥
जागरं कारयेत्तत्र पूजयानश्च चण्डिकाम् ।
प्रभाते स्नपनं कृत्वा तद्भक्तानां च शोभितम्[2] ॥
रथं शोभासमायुक्तं भगवत्यै निवेदयेत् ।
भुक्त्वा च बान्धवैः सार्धं [3]प्रणम्यार्यां गृहं व्रजेत् ॥
सर्वव्रतानां प्रवरं सर्वपापप्रणाशनम् ।
नवमीरथव्रताख्यं सर्वकामार्थसाधनम् ॥
सर्वयज्ञेषु यत्पुण्यं सर्वतीर्थेषु यत्फलम् ।
[4]तत्सर्वं सकलं विद्यान्नवमीव्रतपालनात् ॥
कल्पकोटिशतं साग्रं विष्णुलोके महीयते ।
पुनरेत्य महीं राजा सार्वभौमो भवेदिति ॥
[5]नानोपकरणैर्युक्तां दन्तदारुमयीं शुभाम् ।
शक्त्या[6] निवेदयेद्यस्तु भगवत्यै नराधिप ॥
संपूज्य गन्धपुष्पाद्यैर्विधिवच्चण्डिकां नृप ।
[7]दुकूलतूलवस्त्राणां परिसंख्या तु यावती ॥
तावद्वर्षसहस्राणि [8]दुर्गालोके महीयते ।
वृषं शूलाङ्कितं यस्तु भगवत्यै निवेदयेत् ॥
आसप्तमं सप्तकुलं गृह्य देवालयं व्रजेत् ।

1 बालकैः—हे.
2 भोजनम्—हे.
3 प्रणम्यार्यागृहं—हे.
4 तत्फलं लभते विद्वान्—हे.
5 रक्त for नाना—हे.
6 शय्यां—हे.
7 त्वक्कृतं तूलवस्त्राणां—ना ; दुकूलवस्त्रलूतानां—हे.
8 स्वर्गलोके—उ.

यश्चोभयमुखीं [1]गां च भगवत्यै सुशोभनाम् ॥
सप्तद्वीपां धरां दत्वा यत्फलं तदवाप्नुयात् ।
पादद्वयं शिरोऽर्धं वा यावद्भूतस्य निर्गतम् ॥
तावद्गौः पृथिवी ज्ञेया [2]तद्दाता स्यान्महीप्रदः ।

[3]इति रथनवमीव्रतम् ॥

## [4][अथ वरनवमीव्रतम्]

नवम्यां नववर्षाणि राजन् पिष्टाशनो भवेत् ।
तस्य तुष्टा भवेद्देवी [5]सर्वकामप्रदा शुभा ॥
अग्निपक्वमभुञ्जानो यावज्जीवं व्रती भवेत् ।
इह चामुत्र वरदा [6]तत्राक्षतफलं भवेत् ॥

[7]इति वरनवमीव्रतम् ॥

## [महानवमीव्रतम्]

[8]नवम्यां शुक्लपक्षे तु सोपवासो जितेन्द्रियः[9] ।
मासि चाश्वयुजे वीर कार्तिके [10]कार्तिकोत्तरे ॥

1 गङ्गां—हे.
2 तद्दानात्—उ.
3 इति भविष्यत्पुराणोक्तं रथनवमीव्रतम्—हे.
4 हे. व्र. I., ९३७.
5 सर्वकामफलप्रदा—हे.
6 तस्मात्तु तत्फलं—उ; तस्यानन्तफलं ददेत्—हे.
7 इति भविष्यत्पुराणोक्तं वरव्रतम्—हे.
8 हे. व्र. I., ९३७—९३९.
9 नवम्यां तु सिते पक्षे नियतः संजितेन्द्रियः—हे.
10 Hemâdri Comments: 'कार्तिकोत्तरे' मार्गशीर्षे—हे; कृत्तिकोत्तरे—ना.

पुष्ये च पूजयेद्देवीं जातीपुष्पैर्विधानतः ।
धूपार्थे गुग्गुलं दद्यान्नैवेद्यं गुडपूपकान् ॥
दुर्गेति नाम जप्तव्यं [1]पुरतोऽष्टशतं नृप ।
माघे च फाल्गुने मासि [2]चैत्रे चैत्रोत्तरे नृप ॥
शुक्लपक्षे तथाष्टम्यामुपवासपरायणः ।
मालतीकरवीरैश्च बिल्वपत्रैश्च पूजयेत् ॥
धूपेनागरुकर्पूरसिल्हकैर्वृषणेन च ।
नैवेद्यं पायसं मांसं मङ्गलायै निवेदयेत् ॥
सर्वमङ्गलनामेति[3] जप्तव्यं नाम भारत ।
ज्येष्ठे मासि तथाषाढे श्रावणे श्रावणोत्तरे ॥[4]
चण्डिकां पूजयेद्भक्त्या[5] चण्डमुण्डप्रणाशिनीम् ।
बिल्वपत्रैः समुकुलैः[6] शतपत्रिकया तथा ॥
प्रबोधेनैव धूपेन नैवेद्ये मोदकान् न्यसेत् ।
स्वमेकमेकं यस्त्वेवं पूजयेदम्बिकां नरः ॥
नवम्यां शुक्लपक्षे तु सोपवासो जितेन्द्रियः ।
अश्वमेधसहस्रस्य राजसूयशतस्य च ॥
फलं प्राप्नोति राजेन्द्र [7]स्वर्गलोकं च गच्छति ।
विमानं दिव्यमारूढः [8]सौवर्णं किङ्किणीयुतम् ॥

1 प्रयतोऽष्टशतं—हे.

2 विप्रो? चित्रोत्तरे—ना.

3 सर्वमङ्गल इत्येवं—हे.

4 Hemādri comments: 'चैत्रोत्तरे' वैशाखे। 'सिह्लकः' तुरुष्कः। 'वृषणं' कस्तूरिका। 'श्रावणोत्तरे' भाद्रे। श्रवणोत्तरे—ना.

5 पूजयेद्भाद्रे—हे.

6 मुद्गरुकैः—हे.

7 सूर्यलोकं—हे.

8 सौवर्णिकिङ्किणीचितम्—उ, हे.

क्रीडित्वैवं महाराज राजा भवति भूतले ।
प्रथमे पारणे दुर्गा द्वितीये सर्वमङ्गला ॥
तृतीये चण्डिका प्रोक्ता राजन् भगवती बुधैः ।
प्रथमं पञ्चगव्यं च स्नानप्राशनयोर्मतम् ॥
द्वितीयं बिल्वपत्रैश्च तृतीयं मधुसर्पिषा ।
मासि मासि महाबाहो कुमारीर्ब्राह्मणान्नृप ॥
स्वशक्त्या भोजयेद्राजन् भक्ष्यभोज्यैरनेकशः ।
पारणान्ते महाभोज्यं कर्तव्यं विधिवन्नृप ॥
गन्धपुष्पोपहारैश्च चण्डिकां पूजयेत्ततः ।
[1]नानाप्रेक्षणकैर्वीर ब्रह्मघोषैस्तु पुष्कलैः ॥
[2]पुण्याख्यानकथाभिश्च[3] पूजया वाचकस्य च ।
विशेषतः स्वमेकान्ते व्रते चीर्णे नराधिप ॥
महानवम्यां विधिवद्भक्ष्यभोज्यैरनेकशः ।
नवरात्रोपवासेन त्रिरात्रे वाथवा नृप ॥
पूर्वोक्तेन विधानेन महिषाजनिपातनैः ।
कुमारीभोजनैर्वीर ब्राह्मणानां च तर्पणैः ॥
गोमहिष्यजदानैश्च बिल्वपत्रस्रजादिभिः ।
[4]स्वमेकमेकमेवं तु व्रतेनानेन योऽर्चयेत् ॥
महानवमीसंज्ञेन [5]दुर्गाभक्त्या नराधिप ।
स याति परमं स्थानं विमानवरमास्थितः ॥

1 नानाप्रेक्षणकैर्वीर ब्राह्मणानां च तर्पणैः—हे.
2 Hemâdri omits the following seven lines.
3 पुण्याख्याकथिताभिश्च—उ.
4 एवमेकं स्वमेकं तु—हे.
5 दुर्गाभक्तान्—हे.

[1]यत्र देवी भगवती पूज्यमाना पुरःस्थिता ।

[2]इति महानवमीव्रतम् ॥

## [अथानन्दानवमीव्रतम्]

[3]सुमन्तुरुवाच—

आनन्दा नन्दिनी नन्दा महानन्दा महीपते ।
तथान्या नवमी पुण्या पञ्चमी महती स्मृता ॥
फाल्गुनामलपक्षस्य नवमी या महीपते ।
आनन्दा सा महापुण्या सर्वपापहरा मता ॥
कृत्वैकभक्तं पञ्चम्यां षष्ठ्यां नक्तं तथा नृप ।
अयाचितं तु सप्तम्यामुपवासो परेऽहनि ॥
य एवं पूजयेद्भक्त्या नवम्यां विधिवन्नृप ।
सोपवासोऽर्चयेद्देवीं स याति परमं पदम् ॥
[4]श्रीखण्डं चन्दनं वीर कर्पूरमगरुं तथा ।
अनेन भूषयेद्देवीं धूपं दद्यात्तथागरुम् ॥
मुद्गराणां स्रजाभिस्तु पुष्पैरन्यैश्च पूजयेत् ।
नैवेद्यं पायसं दद्याद्रसालामोदकं तथा ॥
पञ्चगव्यं प्रशस्तं हि स्नानप्राशनयोर्नृप ।
जप्तव्यं नाम वै देव्या अरुणाभा भयापहा ॥
इत्येतत्प्रथमं प्रोक्तं पारणं पापनाशनम् ।
मासैश्चतुर्भिरादीयं द्वितीयं पारणं शृणु ॥

1 यत्र साक्षाद्भगवती पूज्या माल्यतिलै रसैः—हे.

2 इति भविष्यत्पुराणोक्तं दुर्गानवमीव्रतम्—हे.

3 हे. व्र. I., ९४८–९५०.

4 Hemādri reads: श्रीखण्डं चन्दनं वीर धूपं दद्यात्तथागुरुः for the following two lines.

[1]'आदीयं' आद्यम् ॥

भोजयेद्द्विप्रकन्याश्च नवम्यां ब्राह्मणांस्त्रियः ।
मासि मासि महाबाहो यथाशक्त्या यथाविधि ॥
आषाढे श्रावणे मासि मासि भाद्रपदे तथा ।
[2]तथा चाश्वयुजे मासि पूजयेद्भगवतीं विभो ॥
कृत्वैकभक्तं पञ्चम्यां षष्ठ्यां नक्तं तथा नृप ।
अयाचितं तु सप्तम्यामुपवासो परेऽहनि ॥
सोपवासो नवम्यां तु पूजयेद्विधिवच्छिवाम् ।
सोऽश्वमेधफलं प्राप्य विष्णुलोके महीयते ॥
जातीपुष्पस्रजाभिश्च तथा रक्तैश्च चन्दनैः ।
कस्तूरिकाकृतैर्गन्धैर्देवीमालेपयेत्तथा ॥
[3]माहिष्याज्यं गुग्गुलं च धूपं परमपूजितम् ।
नैवेद्यं गुडपूपाश्च खण्डवेष्टाश्च शक्तितः ॥
बिल्वपत्रोदकं स्नाने प्राशने च प्रकीर्तितम् ।
दुर्गाख्यं नाम जप्तव्यं सर्वपापभयापहम् ॥
इत्येवं पूजयित्वार्यां पूजयित्वा गुरुं तथा ।
कुमारीं[4] भोजयेच्छक्त्या ब्राह्मणान् योषितस्तथा ॥
एवं यः पूजयेद्भक्त्या यथाविभवमात्मनः ।
[5]स सिंहयानमारूढो ब्रह्मलोकं प्रयाति वै ॥

1 Hemādri comments : 'आदीयं' आद्यम् ?

2 ना reads one line : तथा चाश्वयुजे मासि पूजयेद्विधिवच्छिवाम् for the following four lines.

3 माहिष्याख्यं—उ, हे.

4 कुमारीः—हे.

5 स सिंहासनमारूढो—हे.

तृतीयं पारणं वच्मि [1]सर्वपापहरं शिवम् ।[2]
कार्तिकादि महापुण्यं दुर्गायाः प्रीतिवर्धनम् ॥
नानाविधानां पुष्पाणां जलजानां विशेषतः ।
स्रजाभिरर्चयेद्देवीं [3]जगत्तोषणकारिणीम् ॥
कुङ्कुमागरुकर्पूरैः सुगन्धैश्च प्रलेपयेत् ।
[4]सोमगर्भैस्तथा [5]भक्ष्यैर्विष्णोश्चापि प्रपूजयेत्[6] ॥
धूपो [7]बिल्वशिरः शस्तः सघृतो गुग्गुलस्तथा ।
[8]तिलैर्होमस्तथा कार्यस्तिलानां प्राशनं वरम् ॥
जपेन्नाम तथा देव्याः [9]सर्वपापप्रणाशनम् ।
अपराजिताख्यमतुलं [10]जपतां सततं नृणाम् ॥
एवं यः कृच्छ्रपादेन नवमीं समुपासते ।
मासि मासि महाबाहो वत्सरं यावदेव हि ॥
[11]स हि पुत्रानवाप्याथ ब्रह्मलोके महीयते ।

इत्यानन्दानवमीव्रतम् ॥

1 सर्वपापविनाशनम्—हे.
2 Hemādri adds : ध्यायेच्छिवं सदा शान्तं सच्चिदानन्दविग्रहम् ।
3 त्र्यम्बकां जगतोऽम्बिकाम्—हे.
4 मांसगर्भैस्तथा—हे.
5 वेष्टैः for भक्ष्यैः—उ.
6 श्रीवेष्टैश्चापि पूजयेत्—हे.
7 बिल्वागरुः—हे.
8 तिलस्नानं तिलैर्होमः—हे.
9 सर्वपापक्षयंकरम्—उ, हे.
10 जपेदन्ते व्रतं नृणाम्—हे.
11 Hemādri reads :
स हि पुत्रानवाप्याग्र्यान् धनं धान्यं बलं यशः ।
विपुलां च तथा कीर्तिमारोग्यमतुलां श्रियम् ॥
ततस्त्विन्द्रपुरं याति सिंहासनसमन्वितः ।
तेजसाम्बुजसंकाशः प्रभयाम्बुजसंनिभः ॥
य इदं शृणुयान्नित्यमानन्दाकल्पमादितः ।
स हि कामानवाप्याग्र्यान् ब्रह्मलोके महीयते ॥

## [अथ नन्दिनीनवमीव्रतम्]

सुमन्तुरुवाच—

मासि मार्गशिरे मासि शुक्लपक्षे तु या भवेत् ।
सा नन्दिनी महापुण्या नवमी परिकीर्तिता ॥
यस्त्वस्यां पूजयेद्देवीं त्रिरात्रोपोषितो नरः ।
सोऽश्वमेधमवाप्येह विष्णुलोके महीयते ॥
प्रथमे पारणे वच्मि [1]चण्डिकापूजने विधिम् ।
जातीपुष्पस्रजाभिस्तु नानापुष्पकदम्बकैः ॥
पूजयेद्विधिवद्दुर्गां सर्वदानवसूदनीम् ।
नानाविधैर्गन्धपुष्पैः[2] कर्पूरागरुमिश्रितैः ॥
प्रलेपयेद्यथाशक्त्या सिल्हकेन (च) धूपयेत् ।
भक्ष्यं भोज्यं तथा लेह्यं चोष्यं पेयं स्वशक्तितः ॥
नैवेद्यं च महाबाहो दुर्गादेव्यै निवेदयेत् ।
पञ्चगव्यकृतस्नानो जपमानस्तथाम्बिकाम् ॥
पूजयेद्विधिवद्दुर्गां ततः शाण्डिलिनीसुताम् ।
कुमारीं भोजयेद्वीर ब्राह्मणान्योषितस्तथा ॥
भुञ्जीत वाग्यतः पश्चाद्भूमिं कृत्वा तु भाजनम् ।
इति ते कथितं वीर पारणं प्रथमं मया ॥
द्वितीयं शृणु राजेन्द्र समासाद्वदतो मम ।
मासेषु राजन् सर्वेषु ज्येष्ठा ज्येष्ठे [3]समाहितः ॥
पूजयेद्विधिवद्दुर्गां नानापुष्पादिधूपकैः ।
मुद्गराणां कदम्बैश्च जाती(पु)ष्पकदम्बकः ॥

1 चन्द्रिकापूरणे—ना.
2 धूपैः for पुष्पैः—ड.
3 समासतः—हे.

चन्दनागरुकर्पूरैर्दुर्गां देवीं [1]प्रपूजयेत् ।
श्रीवेष्टैः पयसा वीर पायसेन तथाम्बुजैः ।
चण्डिकां पूजयेद्भक्त्या कुशादध्योदनेन च ।
नारायणीति वै नाम त्रिकालं तु जपेद्बुधः ॥
प्राशयेद्गोमयं शस्तं दूर्वाङ्कुरसमन्वितम् ।
स्नानमामलकैः शस्तं सर्वपापप्रणाशनम् ॥
पञ्चगव्येन वा स्नानं कर्तव्यं कायशोधनम् ।
य एवं कुरुते [2]राजन् नन्दिनीं नवमीं [3]व्रती ॥
सुधीः सुचन्द्रयानेन स्वर्गलोके महीयते ।
बृन्दारकगणैः सार्धं क्रीडते शाश्वतीः समाः ॥
पुनरेत्य महाबाहो राजा भवति भूतले ।
विक्रमेण हरेस्तुल्यो विभुत्वेन हरेस्तथा ॥
तेजसा च हरेस्तुल्यो गाम्भीर्ये सागरस्य च ।
बहुपुत्रो बहुधनः कीर्तिमान् राजवल्लभः ॥
भुक्त्वा तु विपुलान् भोगान् पुनः स्वर्गमवाप्नुयात् ।

इति नन्दिनीनवमीव्रतम् ॥

## [अथ नन्दानवमीव्रतम्]

[4]सुमन्तुरुवाच—

मासि भाद्रपदे या तु नवमी बहुलोत्तरा ।[5]

1 प्रकल्पयेत्—उ.

2 वर्षे—उ.

3 नृप—उ.

4 हे. व्र. I., ९५२–९५४.

5 Hemādri reads बहुलेतरा and comments: बहुलः कृष्णपक्षः । तदितरा शुक्ला ।

सा तु नन्दा महापुण्या कीर्तिता पापनाशिनी ॥
तस्यां यः पूजयेद्दुर्गां विधिवत्कुरुनन्दन ।
सोऽश्वमेधफलं विन्द्याद्विष्णुलोकं च गच्छति ॥
एकभक्तस्तु सप्तम्यामष्टम्यां समुपोषितः ।
जातीपुष्पैः [1]कुन्दयूथैः पूजयेद्विधिवच्छिवाम् ॥
दूर्वोपरि स्थितां देवीं यथानामविनिर्मिताम् ।
खर्जूरैर्नारिकेलैश्च [2]पुष्पैश्चामलकैस्तथा ॥
पूजयेत्सप्तधान्येन पिण्याकेन च सुव्रत ।
दध्ना [3]शुद्धेन धूपेन दूर्वाङ्कुरैश्च धूपयेत् ॥
प्रजागरं ततो रात्रौ नन्दायाः पुरतो नृप ।
नानाप्रेक्षणकैः [4]कुर्याद्ब्रह्मघोषैश्च पुष्कलैः ॥
नन्दाख्यं च जपेन्मन्त्रमष्टोत्तरशतं विभो ।

'नन्दाख्यम्' [5]"ओं नन्दायैः नमः" इति मन्त्रः ॥

प्रभाते तु नवम्यां वै पूजयित्वा तु चण्डिकाम् ॥
प्रीणयित्वा गुरून् शक्त्या कुमारीं[6] भोजयेत्ततः ।
एवं चाश्वयुजे मासि कार्तिके कार्तिकोत्तरे ॥[7]
पूजयेच्चतुरो मासान् नन्दां भगवतीं विभो ।
स्नाने कुशोदकं प्रोक्तं [8]प्राशयेच्च नराधिप ॥
इत्येतत्कथितं वीर प्रथमं पारणं शुभम् ।

1 कदम्बैश्च—उ, हे.
2 त्रपुसामलकैस्तथा—हे.
3 साज्येन—हे.
4 कुर्युः—ना.
5 "ओं नन्दायै नमः स्वाहा हुं फडिति"—हे.
6 कुमारीः—हे.
7 Hemādri comments: 'कार्तिकोत्तरे' मार्गशीर्षे ।
8 प्राशने च—हे.

द्वितीयं श्रृणु मे पौषे [1]पारणं पापनाशनम् ॥
चण्डिकां पूजयेदत्र नाम्ना कनकनन्दिनीम् ।
नानास्रजाभिः कुसुमैः कुङ्कुमागरुचर्चिताम् ॥
नानाविधैर्भक्ष्यभोज्यैर्धूपेनागरुणा तथा ।
पञ्चगव्यकृतस्नानः सोपवासो जितेन्द्रियः ॥
पूजयित्वा महादेवीं रात्रौ स्वपिति भूतले ।
पुनर्नवम्यां संपूज्य विधिवत्कनकनन्दिनीम् ॥
[2]कृत्वा तु [3]शाण्डिलीपुत्र [4]कुमारीं भोजयेत्ततः ।
वैशाखादिषु मासेषु पूजयेद्विधिनाच्युताम् ॥
[5]मुद्गराणां स्रजाभिश्चाप्यशोकानां च भारत ।
कुङ्कुमागरुकर्पूरैश्चन्दनेन विलेपयेत् ॥
धूपेनागरुमिश्रेण पयसा पायसेन च ।
अच्युताख्यं जपेन्नाम सर्वपापहरं शुभम्[6] ॥
गोरोचनाम्बुना स्नानं प्राशनं गोमयस्य च ।
कृत्वोपवासं सप्तम्यां पूजयित्वा तथाच्युताम् ॥
नवम्यां भोजयेच्छक्त्या कुमारीं ब्राह्मणांस्त्रियः ।
य एवं कुरुते नन्दां नवमीं विधिवद्विभो ॥
स्वमेकमेकं विधिवच्चिन्तितं लभते फलम् ।

[7]इति नन्दानवमी ॥

1 पारणास्नानप्राशनम्—हे.
2 हुत्वा—हे.
3 Hemādri comments: 'शाण्डिलीपुत्रीं' अभिम् ।
4 कुमारीः—हे.
5 मुकुराणां—ना.
6 शिवम्—उ, हे.
7 इति भविष्यत्पुराणोक्तं नन्दानवमीव्रतम्—हे.

## [अथ महानन्दानवमी]

[1]माघे मासे तु या शुक्ला नवमी लोकपूजिता ।
महानन्देति सा प्रोक्ता सर्वानन्दकरी नृणाम् ॥
तस्यां स्नानं तथा दानं तथा होममुपोषितम् ।
सर्वं तदक्षयं प्रोक्तं यदस्यां क्रियते नरैः ॥
श्वेतपुष्पस्रजाभिस्तु नन्दां भगवतीं यजेत् ।
[2]कुसुमेन तथा वीर धूपेनागरुणा तथा ॥
मोदकैर्विविधैर्वीर फलैर्नानाविधैरपि ।
तिलकल्ककृतस्नानो होमयेद्विधिवत्तिलान् ॥
पूजयेच्चतुरो मासान् नन्दां भगवतीं शुभाम् ।[3]
कुमारीं भोजयेद्भक्त्या योषितो ब्राह्मणांस्तथा ॥
ज्येष्ठादिपारणे वीर जातीपुष्पकदम्बकैः ।
पूजयेद्विधिवद्दुर्गां नाम्ना विन्ध्यनिवासिनीम् ॥
प्राशयेत् पञ्चगव्यं तु स्नानं तेनैव पुण्यदम् ।
पायसं मधुसर्पिभ्यां तथा दध्योदनं परम् ॥
कार्तिकादिषु मासेषु पूजयेद्वै स्मिताननाम् ।
कुन्दपुष्पस्रजाभिस्तु करवीरैश्च सुव्रत ॥
कस्तूरिकाकृतैर्गन्धैर्धूपेनागरुणा तथा ।
घृतपूरैः खण्डवेष्टैः श्रीफलैश्चापि पूजयेत् ॥
गोश्रृङ्गक्षालनात् स्नानात् पूजयेच्च नराधिप ।
पूजयेद्विधिवद्देवीं भक्त्या श्वेतमुखीं विभो ॥[4]

1 हे. व्र. I., ९५५–९५६.
2 कुङ्कुमेन—हे.
3 शिवाम्—हे.
4 श्वेतमुखो भवेत्—ना.

य एवं पूजयेद्वर्षं चण्डिकां समुपोषितः ।
स सर्वकामान्वा प्राप्य[1] ब्रह्मलोके महीयते ॥
क्रीडित्वा [2]ब्राह्मणैः सार्धं राजा भवति भूतले ।[3]
धनधान्यसमृद्धस्तु पुत्रवान् कीर्तिमान् भवेत् ॥
[4]इति महानन्दानवमी ॥

## [अथ महानवमीव्रतम्]

सुमन्तुरुवाच—

माघे वाश्वयुजे शुक्ला नवमी या नराधिप ।
सा महानवमी वीर महापातकनाशिनी ॥
तस्यां या क्रियते वीर नरैः स्नानादिकं विभो ।
तत्सर्वमक्षयं तस्यां तद्वै सिद्धिकरं तथा ॥
द्वादश्यामेकभक्तं तु नक्तं कुर्यात्परेऽहनि ।
अयाचितं चतुर्दश्यामुपवासः परेऽहनि ॥
एवं कृच्छ्रं चरेत्प्राज्ञो यावद्वै नवमीं विभो ।
अथवा नवरात्रं चाप्युपवासपरायणः ॥
पूजयेद्विधिवद्दुर्गां बिल्वपत्रैर्नराधिप ।
द्रोणपुष्पैस्तथा वीर जातीपुष्पैश्च पूजयेत् ॥
कृत्वा दुर्गागृहं भक्त्या नानावर्णादिशोभनम् ।
नानारत्नसमाकीर्णं पुष्पदामोपशोभितम् ॥
नानाघण्टासमाकीर्णं ध्वजमालोपशोभितम् ।
एवं कृत्वा गृहं देव्यास्तत्क्षणाद्दिव्यनिर्मितम् ॥

1 अप्यान् for प्राप्य—हे.
2 ब्रह्मणः सोर्धरात्रं तत्र प्रपूजितः—हे.
3 Hemādri adds : पूजयेद्विधिवद्देवीं भक्त्या भवति भूतले—हे.
4 इति भविष्यत्पुराणे महानवमीव्रतम्—हे.

तथा चाभिनवां वीर त्रिशूलाकृतिमेव हि ।
नानाविधैर्भक्ष्यभोज्यैश्चन्दनागरुकुङ्कुमैः ॥
खर्जूरैर्नारिकेलैश्च तथान्यैर्विविधैः फलैः ।
इत्थं पूज्य नरो दुर्गां सवृषां पूजयेत्ततः ॥
पूरिकालिपिकाभिश्च खण्डवेष्टैः समोदकैः ।
इत्थं संपूजयेद्दुर्गां मासान्वै चतुरो बुधैः ॥
भूरिणा मद्यमांसेन पशुपातं तथैव हि ।
महिषाजशिरोभिश्च मेषाणां च तथार्चयेत् ॥
इत्येष कथितो वीर प्रथमे पारणे विधिः ।
द्वितीयस्यापि ते वच्मि पारणस्य समासतः ॥
माघादिषु च मासेषु पूजयेद्विधिवच्छिवाम् ।
नानाविधैः सुगन्धैश्च कुसुमैर्नृप मोदकैः ॥
गुडपुष्पैश्च धूपेन गुग्गुलेन च धूपयेत् ।
भक्ष्यभोज्यैरनेकैश्च कुमारीं भोजयेत्ततः ॥
ज्येष्ठादिषु च मासेषु नानापुष्पकदम्बकैः ।
पूजयेद्विधिवद्भक्त्या श्रद्धया विन्ध्यवासिनीम् ॥
विलेपयेत्तथा गन्धैर्धूपेनागरुणाऽर्चयेत् ।
चन्दनं कुङ्कुमं कुष्ठं तगरं सिल्हकं तथा ॥
अण्डजं वृषणं चैव कर्पूरागरुमुस्तकम् ।
कृष्णागरुं महाबाहो योऽर्चयेच्चण्डिकां श्रियम् ॥
गुडोदनेन पयसा पायसेन तथार्चयेत् ।
कुमारीं भोजयेद्भक्त्या पायसेन घृतेन च ॥
एवं संपूजयेद्दुर्गां वत्सरं कुरुनन्दन ।
सोऽश्वमेधफलं विन्द्यादिति सत्यं न संशयः ॥

इति महानवमीव्रतम् ॥

# अथ दशमीव्रतानि

## [सार्वभौमव्रतम्]

तत्र वराहपुराणे[1]

अगस्त्य उवाच—

सार्वभौमव्रतं चान्यत्कथयामि समासतः ।
येन सम्यक्कृतेनाशु सार्वभौमो भवेन्नृप ॥
कार्तिकस्य तु मासस्य दशमी शुक्लपक्षगा ।
तस्यां नक्ताशनो [2]नित्यं दिक्षु शुद्धबलिं हरेत् ॥

[3]'शुद्धबलिः' पवित्रद्रव्यैः पूजोपहारः ॥

विचित्रकुसुमैर्भक्ष्यैः पूजयेच्च द्विजांस्तथा ।[4]
सर्वा [5]भवत्यः सिध्यन्तु मम जन्मनि जन्मनि ॥
एवमुक्त्वा बलिं [6]दत्वा तासु शुद्धेन चेतसा ।
ततोऽर्धरात्रे भुञ्जीत दध्यन्नं च सुसंस्कृतम् ॥
पूर्वं पश्चाद्यथेष्टं च एवं संवत्सरं नृप ।
यः करोति नृपो नित्यं [7]तस्य दिग्विजयो भवेत् ॥

[8]इति सार्वभौमव्रतम् ॥

1 हे. व्र. I., ९८२–९८३; वरा. पु. अ. ६५, श्लो. १–६.
2 मर्त्यो—हे; भूत्वा—वरा. पु.
3 Comment reproduced by Hemādri.
4 The printed वरा. पु. adds: दिशां तु प्रार्थनां कुर्यान्मन्त्रेणानेन सुव्रतः ।
5 भवन्त्यः सिध्यन्ति—हे.
6 तासु दत्वा—हे.
7 तस्मै—हे.
8 इति श्रीवराहपुराणोक्तं सार्वभौमव्रतम्—हे.

## अथैकादशीव्रतानि

तत्र वराहपुराणे

अगस्त्य उवाच—

एकादश्यां तु यत्नेन नक्तं कुर्याद्यथाविधि ।
मार्गशीर्षे तु शुक्लादावारभ्याब्दं विचक्षणः ॥
तद्व्रतं धनदस्येष्टं कृतं वित्तं प्रयच्छति ।

नरसिंहपुराणे—

उपवासो मुनिश्रेष्ठ एकादश्यां विधीयते ।
नरसिंहं समभ्यर्च्य सर्वपापैः प्रमुच्यते ॥

इत्येकादशीव्रतम् ॥

## अथ द्वादशीव्रतानि

तत्र विष्णुः—[४९, १-८]

[1]मार्गशीर्षे तु शुक्लायामेकादश्यामुपोषितो द्वादश्यां च भगवन्तं वासुदेवं समर्चयेत्। सुपुष्पधूपानुलेपनदीपनैवेद्यब्राह्मणतर्पणैः[2]। व्रतमेतत् संवत्सरं कृत्वा पापेभ्यः पूतो भवति। यावज्जीवं कृत्वा श्वेतद्वीपमाप्नोति। उभयपक्षद्वादशीष्वेवं संवत्सरेण स्वर्गलोकमवाप्नोति[3]। यावज्जीवं कृत्वा विष्णुलोकम्। एवं पञ्चदशीष्वपि ॥

ब्रह्मभूयममावास्यां पौर्णमास्यां तथैव च ।
[4]योगभूतं परिचरन् केशवं महदाप्नुयात् ॥

इति द्वादशीव्रतम् ॥

1 मार्गशीर्षशुक्लैका०—मु. वि. स्मृ.
2 ०नैवेद्यैर्ब्राह्मण०—मु. वि. स्मृ.
3 स्वर्गलोकं प्राप्नोति—मु. वि. स्मृ.
4 योगभूमं—ना.

## [अथ मत्स्यद्वादशीव्रतम्]

वराहपुराणे[1]

सत्य(तपा) उवाच—

कोऽसौ धरण्यां संचीर्ण उपवासो महामुने ।
कानि व्रतानि च तथा त्वेतन्मे वक्तुमर्हसि ॥

दूर्वासा उवाच—

[2]मार्गस्य शुक्लपक्षे तु दशम्यां नियतात्मवान् ।
स्नात्वा देवार्चनं [3]कृत्वा त्वग्निकार्यं यथाविधि ॥
शुचिवासाः प्रसन्नात्मा हव्यं चान्नं सुसंस्कृतम् ।
भुक्त्वा पञ्चपदं गत्वा [4]पुनः शौचं तु पादयोः ॥
कृत्वाष्टाङ्गुलमानं तु क्षीरवृक्षसमुद्भवम् ।
भक्षयेद्दन्तकाष्ठं तु ततश्चाचम्य यत्नतः ॥
स्पृष्ट्वा [5]खानि तथाद्भिश्च चिरं ध्यात्वा जनार्दनम् ।
शङ्खचक्रगदापाणिं [6]पीतवासःकिरीटिनम् ॥
प्रसन्नवदनं देवं सर्वलक्षणलक्षितम् ।
[7]ध्यात्वा जलं गृहीत्वा तु भानुरूपं जनार्दनम् ॥
दृष्ट्वार्घ्यं दापयेत्पश्चात्[8] करतोयेन मानवः ।
एवमुच्चारयेद्वाचं तस्मिन् काले महामुने ॥

1 हे. व्र. I., १०२२–१०२६ ; वरा. पु., अ. ३९, श्लो. २५–७६.
2 यदा मार्गशिरे मासि—वरा. पु.
3 धीमान् for कृत्वा—वरा. पु.
4 पुनः सौवर्णपादयोः—ना.
5 Hemādri comments : 'खानि' इन्द्रियाणि ।
6 पीताम्बरधरं विभुम्—वरा. पु ; पीतवस्त्रं किरीटिनम्—हे.
7 ध्यात्वा पुनर्जलं हस्ते गृह्य भावैर्जनार्दनम्—वरा. पु.
8 दद्यादर्घ्यं च देवाय—वरा. पु.

एकादश्यां निराहारो [1]भूत्वाहनि परे ह्यहम् ।
भोक्ष्यामि पुण्डरीकाक्ष शरणं मे भवाच्युत ॥
एवमुक्त्वा ततो रात्रौ देवदेवस्य सन्निधौ ।
जपन्नारायणायेति [2]स्वपेत्तत्र विधानतः ॥
ततः प्रभाते विमले नदीं गत्वा समुद्रगाम् ।
इतरां वा तडागं वा [3]गृहीत्वा नियतात्मवान् ॥
आनीय मृत्तिकां शुद्धां मन्त्रेणानेन मानवः ।
धारणं पोषणं त्वत्तो भूतानां देवि सर्वदा ॥
तेन सत्येन मां दिव्ये[4] पापान्मोचय मृत्तिके ।[5]
ब्रह्माण्डोदरतीर्थानि [6]करैः स्पृष्टानि ते रवे ॥
[7]भवन्ति पुण्यानि यतो मृत्तिकामालभेत्ततः ।[8]
त्वयि सर्वे रसा नित्यं स्थिता वरुण सर्वदा ॥
तेनेमां मृत्तिकां प्लाव्य मां पूतं कुरु मा चिरम् ।[9]
एवं मृदं रविं तोयं [10]प्रसाद्यात्मानमालभेत् ॥
त्रिः कृत्वा शेषमृदया [11]कुण्डमालिख्य वै जले ।
[12]ततः स्नात्वा नरः सम्यक् [13]मन्त्रवचोपचारतः

1 स्थित्वा चैवापरेऽहनि—वरा. पु; भूत्वाहमपरेऽहनि—हे.
2 जपेत्तत्र—ना; स्वयं भूमौ—हे.
3 गृहे वा—हे, वरा. पु.
4 मे पापं—वरा. पु.
5 Hemādri adds: मृत्तिकामन्त्रः ।
6 त्वया पृष्टानि देवते—वरा. पु.
7 तेनेमां मृत्तिकां त्वत्तो गृह्य स्थास्येय मेदिनि—वरा. पु.
8 Hemādri adds: आदित्यस्य मृत्तिकादर्शनमन्त्रः ।
9 Hemādri adds: मृत्तिकाभ्युक्षणमन्त्रः ।
10 प्रगृह्य for प्रसाद्य—वरा. पु.
11 सर्वाङ्गं लेपयेद्बुधः—वरा. पु.
12 वारुणैरेव मन्त्रैस्तु स्नानं कुर्याद्यथाविधि—वरा. पु.
13 चक्रवर्त्युपचारतः—ना.

[1]स्नात्वा चावश्यकं कृत्वा पुनर्देवगृहं व्रजेत् ।
तत्राराध्य [2]महायोगं [3]परं नारायणं शुभम् ॥
केशवाय नमः पादौ कटिं दामोदराय च ।
[4]जानुभ्यां च नृसिंहाय उरः श्रीवत्सधारिणे ॥
कण्ठं [5]कौस्तुभनाथाय वक्षः श्रीपतये तथा ।
त्रैलोक्यविजयायेति बाहू सर्वात्मने शिरः ॥
रथाङ्गधारिणे चक्रं शङ्करायेति वारिजम् ।

[6]'वारिजम्' शङ्खम् ॥

[7]गम्भीरायेति च गदां पङ्कजं शान्तिमूर्तये ॥
एवमभ्यर्च्य देवेशं देवं नारायणं प्रभुम् ।
पुनस्तस्याग्रतः कुम्भांश्चतुरः स्थापयेद्बुधः ॥
जलपूर्णान् समाल्यांश्च [8]सितचन्दनलेपितान् ।
[9]चतुर्भिस्तिलपात्रैस्तु स्थगितान् [10]रत्नगर्भितान् ॥
चत्वारस्ते समुद्रास्तु कलशाः परिकीर्तिताः ।
तेषां मध्ये शुभं पीठं स्थापयेद्वस्त्रसंयुतम्[11] ॥

1 आचम्यावश्यकं कृत्वा—हे ; स्नात्वा चाचम्यकं कृत्वा—ना.
2 मया युक्तं—वरा. पु.
3 देवं—हे, वरा. पु.
4 ऊरुयुग्मं—हे, वरा. पु.
5 कौस्तुभवासाय—वरा. पु.
6 Comment reproduced by Hemādri.
7 Hemādri corrupt.
8 तिलपूर्णैः सकाञ्चनैः—वरा. पु.
9 Line omitted in वरा. पु.
10 रक्तगर्वितान्—ना.
11 संवृते for संयुतम्—उ ; गर्भितम्—वरा. पु.

[1]तस्मिंश्च रौप्यं सौवर्णं ताम्रं वा दारवं तथा ।
अलाभतस्तोयपूर्णं कृत्वा पात्रं ततो न्यसेत् ॥

[2]'अलाभतः' सौवर्णादीनामलाभे दारवमपि कुर्यादित्यर्थः ॥

सौवर्णं मत्स्यरूपेण कृत्वा देवं जनार्दनम् ।
[3]वेदवेदाङ्गसंयुक्तं श्रुतिस्मृतिविभूषणम् ॥[4]
तत्रानेकविधैर्भक्ष्यैः फलैः पुष्पैश्च शोभितम् ।
गन्धधूपैश्च मन्त्रैश्चाप्यर्चयित्वा यथाविधि ॥
रसातलगता वेदा यथा देव त्वयाहृताः ।
मत्स्यरूपेण तद्वन्मां भवादुद्धर केशव ॥
एवमुच्चार्य तस्याग्रे जागरं तत्र कारयेत् ।
यथाविभवसारेण प्रभाते विमले तथा ॥

'यथाविभवसारेण' यथावित्तानुसारेण ॥

चतुर्णां ब्राह्मणानां च चतुरो दापयेद्घटान् ।
पूर्वं च बह्वृचे दद्याच्छन्दोगे दक्षिणं तथा ॥
यजुःशाखान्विते दद्यात्पश्चिमं घटमुत्तमम् ।
[5]उत्तरं कामतो दद्यादेष एव विधिः स्मृतः ॥

1 वरा. पु., reads:
सौवर्णं राजतं पात्रं ताम्रं वा दारवं तथा ।
अलाभे सर्वपात्राणां पालाशं पत्रमिष्यते ॥
तोयपूर्णं तु तत्कृत्वा तस्मिन्पात्रे ततो न्यसेत् ।
सौवर्णं etc.

2 Comment reproduced by Hemādri.

3 सर्वावयवसंयुक्तं सर्वाभरणभूषितम्—वरा. पु.

4 Hemādri comments: तोयपूर्णं पात्रं कृत्वा तत्र मत्स्यरूपं जनार्दनं न्यसेदित्यन्वयः ।

5 उत्तरेऽथर्वणे दद्याद्—हे.

ऋग्वेदः प्रीयतां पूर्वे सामवेदस्तु दक्षिणे ।
[1]पश्चिमे तु यजुर्वेदोऽथर्ववेदस्तथोत्तरे ॥[2]
ताम्रपात्रैस्तु सतिलैः स्थगितान् [3]कारितान् घटान् ।

1 यजुर्वेद: पश्चिमतो अथर्वश्चोत्तरेण तु—हे.

2 The printed Varāhapurāṇa adds :
अनेन क्रमयोगेन प्रीयतामिति वाचयेत् ।
सौवर्णं मत्स्यरूपं तु आचार्याय निवेदयेत् ॥
गन्धधूपादिवस्त्रैश्च संपूज्य विविधक्रमात् ।
यस्त्विमं सरहस्यं च मन्त्रं चैवोपपादयेत् ॥
विधानं तस्य वै दत्वा फलं कोटिगुणोत्तरम् ।
. प्रतिपद्य गुरुं यस्तु मोहाद्विप्रतिपद्यते ॥
स कोटिजन्म नरके पच्यते पुरुषाधमः ।
विधानस्य प्रदाताह्यो गुरुरित्युच्यते बुधैः ॥
एवं दत्वा विधानेन द्वादश्यां विष्णुमर्च्य च ।
विप्राणां भोजनं दद्याद्यथाशक्त्या सदक्षिणम् ॥
*सतिलं ताम्रपात्रं तु स्थापितं कलशोपरि ।
*तत्सर्वं जलपात्रस्थं ब्राह्मणाय कुटुम्बिने ॥
*देवं दद्यान्महाभागस्ततो विप्रांश्च भोजयेत् ।
*भूरिणा परमान्नेन ततः पश्चात्स्वयं नरः ॥
*भुञ्जीत सहितो बालैर्वाग्यतः संयतेन्द्रियः ।
अनेन विधिना यस्तु धरणीव्रतकृन्नरः ॥
तस्य पुण्यफलं चाग्र्यं शृणु बुद्धिमतां वर ।
यदि वक्त्रसहस्राणि भवन्ति मम सुव्रत ॥
आयुश्च ब्रह्मणस्तुल्यं भवेद्यदि महाव्रत ।
तदानीमस्य धर्मस्य फलं कथयितुं भवेत् ॥
तथाप्युद्देशतो ब्रह्मन् कथयिष्यामि तच्छृणु ।
दश सप्त दशाब्दे च अष्टौ चत्वार एव च ॥
लक्षायुतानि चत्वारि एकस्यास्य चतुर्युगम् ।
तैरेकसप्ततियुगं भवेन्मन्वन्तरं मुने ।
चतुर्दशाहोरात्रस्तु तावती रात्रिरिष्यते ॥
एवं त्रिंशद्दिनो मासस्ते द्वादश समाः स्मृताः ।
तेषां शतं ब्रह्मणस्तु चायुर्नास्त्यत्र संशयः ॥

3 कारयेद्—हे.

* The star marked lines are found in the text with variations.

ततस्तं जलपात्रस्थं ब्राह्मणाय कुटुम्बिने ॥
दद्यादेवं महाभाग ततः पश्चात्तु भोजयेत् ।
ब्राह्मणान् पायसेनाग्र्यान् ततः पश्चात् स्वयं नरः ॥
भुञ्जीत सहितो [1]विप्रैर्वाग्यतः सञ्जितेन्द्रियः ।
यः सकृद्द्वादशीमेतां करोति विधिवन्मुने ॥
स ब्रह्मलोकमाप्नोति [2]तत्कालं चैव तिष्ठति ।[3]
ततो ब्रह्मोपसंहारे [4]तत्र यस्तिष्ठतेऽचिरम् ॥
पुनः सृष्टौ भवेद्देवो वैराजो नाम नामतः ।
ब्रह्महत्यादिपापानि चेह लोके कृतान्यपि ॥
अकामतः कामतो वा तानि नश्यन्ति तत्क्षणात् ।
इह लोके दरिद्रो वा राज्यभ्रष्टोऽथवा नृप ॥
उपोष्य तु विधानेन मेश्वरो राज्यभाग्भवेत् ।

[5]'मेश्वरः' [6]लक्ष्मीश्वरः ॥

वन्ध्या नारी भवेद्या तु अनेन विधिना शुभे ॥
उपोष्य तु भवेत्तस्याः पुत्रः परमधार्मिकः ।
अगम्यागमनं येन [7]जानताऽजानता कृतम् ॥
स इमं विधिमास्थाय तस्मात्पापाद्विमुच्यते ।
ब्रह्मक्रियाया लोपेन बहुवर्षकृतेन च ॥
उपोष्येमां सकृद्भक्त्या वेदसंस्कारमाप्नुयात् ।

1 भृत्यैः—हे.

2 Hemādri comments : 'तत्कालं' ब्रह्मकालम् .

3 Hemādri adds : द्वादशीदोऽत्र धरणीव्रतेष्वेकादशीपरः ।

4 तल्लयः for तत्र यः—हे ; तल्लये—वरा. पु.

5 Comment reproduced by Hemādri.

6 लक्ष्मीधरः—ना.

7 ज्ञानतोऽज्ञानतः कृतम्—ना ; कृतं जानाति मानदः—वरा. पु.

किं चात्र बहुनोक्तेन न तदस्ति महामुने ॥
प्राप्यं वा प्राप्यते नैव [1]पापं वा यन्न पश्यति ।[2]
अदीक्षिताय नो देयं विधानं नास्तिकाय च ॥
देववेदद्विषे वापि न श्राव्यं तु कदाचन ।
गुरुभक्ताय दातव्यं सर्वपापप्रणाशनम् ॥
इह जन्मनि [3]वै राज्यं धनं धान्यं वरस्त्रियः ।
भवन्ति विविधा यस्तु उपोष्यति विधानतः ॥

[4]इति मत्स्यद्वादशीव्रतम् ॥

## [अथ कूर्मद्वादशीव्रतम्]

[5]दूर्वासा उवाच—

[6]पौषमासस्य [7]या पुण्या द्वादशी शुक्लपक्षतः ।
तस्यां [8]प्रागिव [9]सङ्कल्प्य कुर्यात्स्नानादिकाः क्रियाः ॥
निर्वर्त्य [10]बोधयेद्रात्रावेकादश्यां जनार्दनम् ।

1 यन्न पश्यति वै मुने—ना ; पापवान्यत्र पश्यति—हे ; अप्राप्यं प्रापयति या अतः कार्या सदा नरैः—वरा. पु.

2 The printed Varāhapurāṇa adds :
अनेन विधिना ब्रह्मन् स्वयमेव ह्युपोषिता ।
धरण्या मया तात नात्र कार्या विचारणा ॥

3 वारोग्यं—हे ; सौभाग्यं—वरा. पु.

4 इति धरणीव्रते मत्स्यद्वादशीव्रतम्—हे.

5 हे. व्र. I., १०२६–१०२७ ; वरा. पु. अ. ४०, श्लो. २–११.

6 पुष्यमासस्य—हे.

7 या शुक्ला दशमीति निगद्यते—वरा. पु.

8 प्रागेव—वरा. पु.

9 संकल्पं—हे.

10 आराधयेद्रात्रौ—हे ; आराधयेद्भक्त्या—वरा. पु.

पृथक्[illegible]द्विजश्रेष्ठ देवदेवं जनार्दनम् ॥
कूर्माय पादौ प्रथमं तु पूज्य
नारायणायेति [1]कटिं हरेस्तु ।
सङ्कर्षणायेत्युदरं [2]हरेस्तु
उरो विशोकाय भवाय कण्ठम् ॥
सुबाहवे चैव भुजौ शिरश्च
नमो विशालाय [3]रथाङ्गशङ्खौ ।
[4]स्वनाममन्त्रेण सुधूपगन्धैः
[5]नानानिवेद्यैर्विविधैः फलैश्च ॥
अभ्यर्च्य देवं कलशं [6]तदग्रे
संस्थाप्य [7]माल्यासुरदामकण्ठम् ।
तं रत्नगर्भं तु पुरेव कृत्वा
स्वशक्तितो हेममयं तु [8]देवम् ॥
समन्दरं कूर्मरूपेण कृत्वा
[9]संस्थापयेत्ताम्रपात्रे घृतस्य ।
पूर्णे [10]घटोपर्यथ सन्निवेश्य
[11]श्वो ब्राह्मणायैवमेवं तु दद्यात् ॥[12]

1 हरेः कटिं तु—वरा. पु.
2 विशोकेत्युरो भवायेति तथैव कण्ठम्—वरा. पु.
3 नमोऽस्तु देवः—वरा. पु.
4 स्वनाममन्त्रैश्च—हे ; स्वनाममात्रेण—ना.
5 धूपादि[illegible]र्विवि[illegible]ः—वरा. पु.
6 तदर्थे—उ.
7 माल्यास्वृतदाम॰—हे ; मालासितव[illegible]युक्तम्—वरा. पु.
8 देवे—उ.
9 संस्थाप्य ताम्रे घृतपूर्णपात्रे—वरा. पु.
10 घटस्योपरि—वरा. पु.
11 तद्ब्राह्मणं पूज्य तथैव दद्यात्—वरा. पु.
12 Hemādri comments : घृतस्य पूर्णे ताम्रपात्रे समन्दरं कूर्मरूपं विधाय घटोपरि निवेश्य प्रभाते दद्यादित्यर्थः ।

श्वो ब्राह्मणान् भोज्य सदक्षिणांश्च
यथाशक्त्या प्रीणयेद्देवदेवम् ।
नारायणं [1]कूर्मरूपेण पश्चात्
स्वयं च भुञ्जीत सभृत्यवर्गः ॥
एवं कृते चेत्त्रिविधं हि पापं
विनश्यते [2]नात्र विचारणास्ति ।
संसारचक्रं प्रविहाय शुद्धं
प्राप्नोति लोकं तु हरेः पुराणम् ॥[3]
अनेकजन्मान्तरसंचितानि
नश्यन्ति पापानि नरस्य भक्त्या ।
प्रा[illegible]रूपं तु फलं [4]लभन्ते
नारायणस्तुष्टिमुपैति सद्यः ॥

[5]इति कूर्मद्वादशीव्रतम् ॥

## [अथ वराहद्वादशीव्रतम्]

[6][illegible]वासा उवाच—

एवं माघे सिते पक्षे [7]द्वादशीं धरणीभृतः ।
वराहस्य शृणुष्वान्यां[8] पुण्यां परमधार्मिक ॥

1 कूर्मपुराणे—हे.
2 नास्ति—ना.
3 वरा. पु., adds:
प्रयान्ति पापानि विनाशमाशु श्रीमांस्तथा जायते सत्यधर्मः ।
4 लभेत—हे.
5 इति धरणीव्रते कूर्मद्वादशीव्रतम्—हे.
6 हे. व्र. I., १०२७–१०२९; वरा. पु., अ. ४१, श्लो. १–१५.
7 द्वादश्यां—उ.
8 शृणुष्वाद्यां—वरा. पु.

[1]अगम्यागमनं येन जानताऽजानता कृतम् ।
स इमं विधिमास्थाय तस्मात्पापाद्विमुच्यते ॥
ब्रह्मक्रियाया लोपेन बहुवर्षकृतेन च ।
उपोष्येमां सकृद्भक्त्या वेदसंस्कारमाप्नुयात् ॥
किं चात्र बहुनोक्तेन महापरमधार्मिक ।
प्रागुक्तेन विधानेन संकल्प्यं स्नानमेव तु ॥
कृत्वा देवं समभ्यर्च्य चैकादश्यां विचक्षणः ।
[2]पुष्पैर्नैवेद्यगन्धैश्चाप्यर्चयित्वाऽच्युतं नरः ॥
पश्चात्तस्याग्रतः कुम्भं जलपूर्णं तु विन्यसेत् ।
वराहायेति पादौ तु माधवायेति वै कटिम् ॥
क्षेत्रज्ञायेति जठरं [3]विश्वरूपेत्युरो हरेः ।
सर्वज्ञायेति वै कण्ठं प्रजानां पतये शिरः ॥
प्रद्युम्नायेति च भुजौ दिव्यास्त्राय सुदर्शनम् ।
अमृतोद्भवाय शङ्खं चाप्येष एवार्चने विधिः ॥
एवमभ्यर्च्य मेधावी तस्मिन् कुम्भे तु विन्यसेत् ।
[4]सौवर्णरौप्यताम्रं वा पात्रं विभवशक्तितः ॥
[5]सर्वबीजैस्तु संपूर्णं स्थापयित्वा विचक्षणः ।
तत्र शक्त्या च सौवर्णं वराहं कारयेद्बुधः ॥
दंष्ट्राग्रेणोद्धरन्[6] पृथ्वीं सपर्वतवनद्रुमाम् ।

1 Hemādri and the printed Varāhapurāṇa omit the following five lines.

2 धूपैः for पुष्पैः—वरा. पु.

3 विश्वरूपं पुरोहितः—हे ; विश्वरूपायेत्युरो हरेः—वरा. पु.

4 Hemādri omits the portion in the middle by reading: सौवर्णं रौप्यं ताम्रं वा वराहं कारयेद्बुधः ।

5 सर्ववित्तैस्तु—वरा. पु.

6 उद्धृतां for उद्धरन्—हे. वरा. पु.

माधवं मधुहन्तारं वाराहं रूपमास्थितम् ॥
सर्वबीजयुते पात्रे रत्नगर्भघटोपरि ।
स्थापयेत्परमं देवं [1]जातरूपमयं हरिम् ॥
श्वेतवस्त्रयुगच्छन्नं [2]ताम्रपात्रे तु वैष्णवम् ।
स्थाप्यार्चयेद्गन्ध[3]पुष्पैर्नैवेद्यैर्विविधैः [4]फलैः ॥
पुष्पमण्डपिकां कृत्वा जागरं तत्र कारयेत् ।
प्रादुर्भावाद्धरेस्तत्र [5]वाचयेत्कामयेद्बुधः ॥
एवं [6]संस्तूयमानस्य प्रभातेऽभ्युदिते रवौ ।
शुचिः स्नातो हरिं पूज्य ब्राह्मणाय निवेदयेत् ॥
वेदवेदाङ्गविदुषे साधुवृत्ताय धीमते ।
विष्णुभक्ताय [7]विदुषे [8]विशेषेण तु दापयेत् ॥
[9]एवं विधानतो दत्वा हरिं वाराहरूपिणम् ।
[10]ब्राह्मणाय भवेद्यद्धि[11] फलं [12]तस्य निशामय ॥
इह जन्मनि सौभाग्यं श्रीः कान्तिः स्तुतिरेव[13] च ।
[14]ज्ञानवान् वित्तवान् भोगी ह्यपुत्रः पुत्रवान् भवेत् ॥

[15]इति वराहद्वादशीव्रतम् ॥

1 ज्ञानरूपमयं—ना.
2 तत्राभावे तु वैष्णवे—हे; ताम्रपात्रे तु वै मुने—वरा. पु.
3 बुधः for गन्ध—ना.
4 शुभैः—वरा. पु.
5 वाचयेद्गाययेद्बुधः—वरा. पु.
6 पूजां विधायाथ—वरा. पु.
7 विप्रर्षे—हे; शान्ताय—वरा. पु.
8 श्रोत्रियाय कुटुम्बिने—वरा. पु.
9 एवं सकुम्भं तं दत्वा—वरा. पु.
10 दत्वा चाथ—वरा. पु.
11 च तद्द्यात्—हे; लभेद्यत्तु—वरा. पु.
12 तन्मे—वरा. पु.
13 तुष्टिरेव—हे, वरा. पु.
14 दरिद्रो वित्तवान् सद्य अपुत्रो लभते सुतम्—वरा. पु.
15 इति धरणीव्रते वाराहद्वादशीव्रतम्—हे.

# अथ नरसिंहद्वादशी

[1]दूर्वासा उवाच—

तद्वच्च फाल्गुने मासि [2]शुक्लपक्षे तु द्वादशीम् ।
उपोष्य प्रोक्तविधिना हरिमावाहयेद्बुधः ॥
नरसिंहाय पादौ तु गोविन्दायोदरं तथा ।
कटिं विश्वभुजे [3]पूज्य अनिरुद्धेत्युरस्तथा ॥
कण्ठं च शितिकण्ठाय पिङ्गकेशाय वै शिरः ।
असुरध्वंसनायेति [4]चक्रं तोयात्मने तथा ॥
[5]शङ्खमित्येव संपूज्य गन्धपुष्पफलैस्तथा ।
तदग्रे [6]स्थाप्य कुम्भं तु सितवस्त्रयुगान्वितम् ॥
तत्रोपरि नृसिंहं तु सौवर्णं [7]रत्नभाजने ।
सौवर्णे शक्तितः कृत्वा दारुवंशमयेऽपि वा ॥[8]
रत्नगर्भघटे स्थाप्य तत्र पूज्य विधानतः ।
द्वादश्यां वेदविदुषे ब्राह्मणाय निवेदयेत् ॥

1 हे. व्र. I., १०२९-१०३० ; वरा. पु., अ. ४२, श्लो. १-७ ; १४-१६.
2 कृष्णपक्षे—हे.
3 तद्वत्—हे.
4 चक्रवोढ्रात्मने तथा—हे.
5 शेषमित्येव—ना.
6 स्थापयेच्छत्रं—ना ; स्थाप्य तु घटं—हे.
7 ताम्रभाजने—उ, हे.
8 Hemādri comments : नृसिंहरूपं तु विष्णुधर्मोत्तरेऽभिहितम्—
पीनस्कन्धकटिग्रीवः कृशमध्यः कृशोदरः ।
सिंहासनो नृदेहश्च नीलवासाः प्रभान्वितः ॥
आलीढस्थानसंस्थानः सर्वाभरणभूषणः ।
ज्वालामालाकुलमुखो ज्वालाकेसरमण्डलः ॥
हिरण्यकशिपोर्वक्षः पाटयन्नखरैः खरैः ।
नीलोत्पलाभः कर्तव्यो देवतानुगतस्तथा ॥
हिरण्यकशिपुर्दैत्यः संवृतोऽयमिति ध्रुवम् ॥ इति ।

एवं कृते फलं प्राप्तं यत्पुरा पार्थिवेन तु ।
वत्सनाम्ना तु तत्तेऽहं प्रवक्ष्यामि महामुने ॥
तस्य व्रतान्ते भगवान् [1]नृसिंहस्तोष्यतेऽपि च ।
चक्रं प्रादाच्च शत्रूणां विध्वंसनकरं मृधे ॥
तेनास्त्रेण स्वयं राज्यं जितवान् स नृपोत्तम ।
राज्ये स्थिताश्वमेधानां सहस्रमकरोत्प्रभुः ॥
अन्ते च ब्रह्मलोकाख्यं पदमागाच्च सत्तम ।
एषा धन्या पापहरा द्वादशी भवतो मुने ॥
कथितेमां प्रयत्नेन [2]श्रद्धां कुरु [3]यथेच्छकम् ।

[4]इति नरसिंहद्वादशी ॥

## अथ वामनद्वादशीव्रतम्

[5]दूर्वासा उवाच—

एवमेव मुने मासि चैत्रे संकल्प्य द्वादशीम् ।
उपोष्य धारयेद्भक्त्या देवदेवं जनार्दनम् ॥
[6]वामनायेति वै पादौ [7]विष्णवे कटिमर्चयेत् ।
वासुदेवेति जठरमुरः सङ्कर्षणाय च ॥
कण्ठं विश्वभृते पूज्य शिरो वै व्योमरूपिणे ।
बाहुं विश्वजिते पूज्य स्वनाम्ना शङ्खचक्रके ॥

1 नरसिंहस्तुतोष च—हे; नृसिंहस्तुष्यतेऽपि च—ना.
2 श्रुत्वा—हे.
3 यथेच्छसि—हे.
4 इति धरणीव्रते नृसिंहद्वादशीव्रतम्—हे.
5 हे. व्र. I., १०३०–१०३२; वरा. पु., अ. ४३, श्लो. १–१७.
6 रामनामेति—ना.
7 विष्णुं वे—ना.

अनेन विधिना [1]देवं देवदेवं [2]जगत्पतिम् ।
[3]प्राक् प्ररत्नोदरं कुम्भं सयुग्मं परितो न्यसेत् ॥

'युग्मम्' वस्त्रयुग्मम् ॥

[4]प्राक् प्रपात्रे च संस्थाप्य वामनं काञ्चनं बुधः ।
यथाशक्त्या कृतं ह्रस्वं सितयज्ञोपवीतिनम् ॥
कुण्डिकां स्थापयेत्पार्श्वे छत्रिकापादुके तथा ।
अक्षमालां च संस्थाप्य [5]बृसीकां च विशेषतः ॥
एतैरुपस्करैर्युक्तां प्रभाते ब्राह्मणाय तम् ।
दापयेत्प्रीयतां विष्णुः ह्रस्वरूपीत्युदीरयेत् ॥
मासनाम्ना तु संयुक्तं प्रादुर्भावाभिधानकम् ।
[6][प्रीयतामिति सर्वत्र विधिरेष प्रकीर्तितः ॥

'मासनाम्ना' मार्गशीर्षादिमासकेशवादिनाम्ना। 'प्रादुर्भावाभिधानकं'] मत्स्यरूपी कूर्मरूपीत्येवमादि ॥

श्रूयते च पुरा राजा हर्यश्वः पृथिवीपतिः ।
अपुत्रः स तपस्तेपे पुत्रमिच्छंस्तपोनिधिः ॥
तस्यैव कुर्वतस्त्विष्टिं पुत्रार्थे मुनिसत्तम ।
आजगाम हरिर्देवो द्विजरूपसमन्वितः ॥
[7]स उवाच नृपं राजन् किं ते व्यवसितं त्विति ।

1 पूज्य—हे.
2 जनार्दनम्—हे.
3 प्राग्वंशेनोदरं—हे.
4 प्रागुक्तपात्रे—हे ; प्राग्र्यप्रपात्रे—उ.
5 वृषिकां—ना ; यष्टिकां—हे.
6 Portion in brackets omitted by ना and उ ; supplied from Hemādri.
7 ना Ms. omits the following three lines.

पुत्रार्थमिति चोवाच तं विप्रः प्रत्युवाच ह ॥
इदमेवं विधानं तु कुरु राजन् प्रयत्नतः ।
स विप्र एवमुक्त्वा तु क्षणादन्तर्हितस्ततः ॥
राजापि तच्चकारार्थं [1]मन्त्रवित्तं द्विजातये ।
दरिद्राय स्वयं प्रादाज्ज्योतिर्गर्भाय धीमते ॥
यथादितेरपुत्रायाः स्वयं पुत्रत्वमागतः ।
भगवंस्तेन सत्येन ममाप्यस्तु सुतो वरः ॥

'विधानं' वामनद्वादशीव्रतविधिम् । 'मन्त्रवित्' 'यथादितेरपुत्राया' इत्यादिमन्त्रज्ञः । 'तं' वामनम् ॥

अनेन विधिनोक्तेन तस्य पुत्रोऽभवन्मुने ।
उग्राश्व इति विख्यातश्चक्रवर्ती महाबलः ॥
अपुत्रो लभते पुत्रान् [2]धनार्थी लभते धनम् ।
भ्रष्टराज्यो लभेद्राज्यं ततो विष्णुपुरं व्रजेत् ॥

[3]इति वामनद्वादशीव्रतम् ॥

## [[4]अथ जामदग्न्यद्वादशीव्रतम्]

दूर्वासा उवाच—

वैशाखेऽप्येवमेवं तु संकल्प्य विधिना नरः ।
तद्वत्स्नानं मृदा कृत्वा ततो देवालयं व्रजेत् ॥
तत्राराध्य हरिं भक्त्या चैभिर्मन्त्रैर्विचक्षणः ।
जामदग्न्याय पादौ चाप्युदरं सर्वधारिणे ॥

1 मन्त्रविदे—ना.

2 धनहीनो लभेद्धनम्—हे.

3 इति धरणीव्रते वामनद्वादशीव्रतम्—हे.

4 हे. म. I., १०३२–१०३४; वरा. पु., अ. ४४, श्लो. १–२१.

मधुसूदनायेति कटिम् उरः श्रीवत्सधारिणे ।
क्षत्रान्तकाय बाहू च मणिकण्ठाय कण्ठकम् ॥
[1]स्वनाम्ना [2]शङ्खचक्रे तु शिरो ब्रह्माण्डधारिणे ।
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ॥
[3]विन्यसेत्स्थगितं वस्त्रयुग्मेन च विशेषतः ।
वैणवेन तु पात्रेण तस्मिन् [4]संस्थापयेद्धरिम् ॥
जामदग्न्येन रूपेण कृत्वा सौवर्णमग्रतः ।
दक्षिणे परशुं हस्ते तस्य देवस्य कारयेत् ॥
सर्वगन्धैश्च संपूज्य पुष्पैर्नानाविधैस्तथा ।
ततस्तस्याग्रतः कार्यं जागरं [5]भक्तिमान्नरः ॥[6]
प्रभाते विमले सूर्ये ब्राह्मणाय निवेदयेत् ।[7]
आसीद्राजा महाभागो वीरसेनो महाबलः ॥
अपुत्रः स पुरा तीव्रं तपस्तेपे महायशाः ।
चरन्तं तत्तपो घोरं याज्ञवल्क्यो महामुनिः ॥
आजगाम महायोगी तं द्रष्टुं [8]नाम दूरतः ।

राजोवाच—

कथं मे भविता पुत्रः स्वल्पायासेन वै द्विज ।
एतन्मे कथय प्रीत्या भगवन् प्रणतस्य वै ॥

1 सुनाम्ना—ना.
2 कण्ठवक्त्रे तु—ना.
3 उ repeats the above 3 lines.
विन्यसेत्स्थापितं वस्त्रं युग्मया च विशेषतः—ना.
4 संस्थाप्य तं हरिम्—ना.
5 शक्तिमान्नरः—हे.
6 Hemādri adds : प्रीयतां मधुसूदनो जामदग्न्यरूपीति मन्त्रः ।
7 Hemādri adds : एवं नियमयुक्तस्य यत्फलं तन्निबोध मे ।
8 नातिदूरतः—उ ; वानियोगतः—हे.

एवमुक्तो मुनिस्तेन पार्थिवेन यशस्विना ।
आचख्यौ द्वादशीं चेमां वैशाखे सितपक्षजाम् ॥
स हि राजा विधानेन [1]पुत्रकामी विशेषतः ।
उपोष्य लब्धवान् पुत्रं नलं परमधार्मिकम् ॥
योऽद्यापि कीर्त्यते लोके [2]पुण्यश्लोको नृपोत्तमः ।
प्रासङ्गिकं फलं [3]ह्येतद्व्रतस्यास्य महामुने ॥
यत् पुत्रो [4]जायते वित्तविद्यावान् कान्तिरुत्तमा ।
इह जन्मनि किं चित्रं परलोके शृणुष्व मे ॥
कल्पमेकं ब्रह्मलोक उषित्वाप्सरसां गणैः ।
क्रीडन्ति ते पुनः सृष्टौ जायन्ते चक्रवर्तिनः ॥
त्रिंशत्कल्पसहस्राणि [5]जीवन्ते नात्र संशयः ।

[6]इति जामदग्न्यद्वादशीव्रतम् ॥

## [अथ राघवद्वादशीव्रतम्]

[7]दूर्वासा उवाच—

ज्येष्ठे मासेऽप्येवमेव सङ्कल्प्य विधिमान्नरः ।
अर्चयेत्परमं देवं पुष्पैर्नानाविधैः शुभैः ॥
ओं नमो राघवायेति पादौ पूर्वं समर्चयेत् ।

1 पुत्रकाम्ये निवेशयेत्-
2 पुत्रश्लोको—ना.
3 फलं गृह्य व्रतस्यास्य-
4 जायते काचिद्विद्यावान्—ना.
5 जायन्ते—ना.
6 इति धरणीव्रते जामदग्न्यद्वादशीव्रतम्—हे.
7 हे. व्र. I., १०३४–१०३५; वरा. पु., अ. ४५, श्लो. १–१०.

त्रिविक्रमायेति कटिं [1]धृतविश्वाय चोदरम् ॥
उरः संवत्सरायेति [2]कण्ठं [3]संवर्तकाय च ।
सर्वास्त्रधारिणे बाहू स्वनाम्नाब्जरथाङ्गके[4] ॥
सहस्रशिरसेऽभ्यर्च्य शिरस्तस्य महात्मनः ।
एवमभ्यर्च्य विधिवद्घृतकुम्भं[5] प्रकल्पयेत् ॥
[6]प्राग्वद्वस्त्रयुगच्छन्नौ सौवर्णौ रामलक्ष्मणौ ।[7]
अर्चयित्वा विधानेन प्रभाते ब्राह्मणाय वै ॥
तौ दातव्यौ सुमनसा कामात्तत्पुरुषेण तु ।
अपुत्रेण पुरा दृष्टो राज्ञा दशरथेन तु ॥
वसिष्ठः पुत्रकामाय [8]प्रसङ्गात्पुरमागतः ।
इदमेव विधानं तु कथयामास स द्विजः ॥
[9]प्राग्रहस्यं विदित्वा तु स राजा कृतवानिदम् ।
तस्य पुत्रः स्वयं जज्ञे रामाख्यो मधुसूदनः ॥
[10]चतुर्धासावभूद्विष्णुः परितोषान्महामुने ।
एतदैहिकमाख्यातं [11]पारत्रिकमतः शृणु ॥

1 घृतवस्त्राय वै हरम्—हे.
2 करं—उ.
3 संवत्सराय च—ना.
4 Hemādri comments : 'अब्जरथाङ्गके' शङ्खचक्रके ।
5 यथाशक्त्या for घृतकुम्भं—ना.
6 प्राग्वच्च छत्रसौवर्णौ प्रसन्नौ रामलक्ष्मणौ—ना.
7 Hemādri comments : अनयोः स्वरूपं विष्णुधर्मोत्तरात्—
रामो दाशरथिर्मौली राजलक्षणलक्षितः ।
भरतो लक्ष्मणश्चैव शत्रुघ्नश्च धनुर्धरः ।
तथैव नूनं कर्तव्याः किं तु मौलिविवर्जिताः ॥ इति ।
'मौलिः' किरीटम् ।
8 प्रोवाच परमार्थतः—हे ; प्रोवाच पुत्रकामाय वसिष्ठः परमार्चितः—वरा. पु.
9 प्राग्रहस्यर्चयित्वा तु—ना.
10 चतुर्धासौ भवद्विष्टः—ना.
11 चारित्रिकम्—ना.

दिव्यान् भोगान् भुञ्जते स्वर्गसंस्थो
यावदिन्द्रा दश च द्विद्विसंख्याः[1] ।
अतीतकाले पुनरेत्य मर्त्ये
राजराजो जायते यज्ञयाजी ॥

'दश च द्विद्विसंख्या' चतुर्दशेत्यर्थः ॥

नश्यन्ति पापानि च तस्य पुंसः
कामानवाप्नोति [2]यथेप्सितांश्च ।
[3]निष्काम एतद्व्रतमेव चीर्त्वा
प्राप्नोति निर्वाणपदं स्थिरं तत् ॥[4]

[5]इति राघवद्वादशीव्रतम्[6] ॥

## [अथ कृष्णद्वादशीव्रतम्]

[7]दुर्वासा उवाच—

आषाढेऽप्येवमेवं तु सङ्कल्प्य विधिवन्नरः ।
[8]अर्चयेद्वरदं देवं गन्धपुष्पैर्विधानतः ॥
वासुदेवाय पादौ तु कटिं सङ्कर्षणाय च ।
[9]स्कन्धं च पापहतये त्वनिरुद्धाय वै उरः ॥

1 दश च द्वित्रिसंख्याः—उ; देवसङ्घाश्च सर्वे—वरा. पु.
2 यथातिरत्या—उ; यथासमीहान्—हे.
3 निष्काम एतच्च तमेव कृत्वा—ना.
4 Hemādri adds—एतद्व्रतमेव निर्वाणसाधनान्तरमनुष्ठायापीत्यर्थः ।
5 इति धरणीव्रते राघवद्वादशीव्रतम्—हे.
6 रामद्वादशीव्रतं—वरा. पु.
7 हे. व्र. I., १०३६–१०३७; वरा. पु., अ. ४६, श्लो. १–७.
8 अर्चयेत्परमं—हे.
9 प्रद्युम्नायेति जठरमनिरुद्धाय वै उरः—हे.

[1]ऊरुं च चक्रपाणये भुजौ भूपतये तथा ।
स्वनाम्ना शङ्खचक्रे तु पुरुषायेति वै शिरः ॥
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ।
विन्यसेद्वस्त्रसंयुक्तं[2] तस्योपरि ततो न्यसेत् ॥
काञ्चनं वासुदेवं तु [3]चतुर्धाङ्गं सनातनम् ।
तमभ्यर्च्य विधानेन गन्धपुष्पादिभिः क्रमात् ।
प्राग्वत्तु ब्राह्मणे दद्याद्वेदवादिनि सुव्रते ।
एवं नियमयुक्तस्य यत्पुण्यं तच्छृणुष्व मे ॥
वासुदेवो भवेद्राजा यदुवंशविवर्धनः ।
देवकी तस्य भार्यासीत् समानव्रतधारिणी ॥
[4]सा त्वपुत्राभवत् साध्वी पतिधर्मपरायणा ।
तस्याः कालेन महता नारदोऽभ्यागमद्गृहम् ॥
वसुदेवेन भक्त्या च पूजितो वाक्यमब्रवीत् ।
[5]कथयामास धर्मज्ञो देवकीवसुदेवयोः ॥
तावप्येतद्विधिं भक्त्या चक्रतुः श्रद्धयान्वितौ ।
तयोस्तुष्टः स्वयं विष्णुः पुत्रत्वं प्रजगाम ह ॥
एवमेषा पापहरा द्वादशी पुत्रदा स्मृता ।
इमामुपोष्य तु सुतान् विद्यां वित्तं लभेत च ॥
राज्यं च भ्रष्टराज्यस्तु पापिनः पापसंक्षयम् ।
यथा [6]भावोपनीतस्तु धरण्यां केशवेन वै ॥
मृतो विष्णुपुरे रम्ये मोदते कालमक्षयम् ।

1 चक्रपाणयेति भुजौ कण्ठं भूपतये तथा—हे.
2 युग्मं तु—हे.
3 चतुर्बाहुं—हे.
4 सा दुष्टता यानि तत्सर्वा मुनिधर्म०—ना.
5 The printed Varāhapurāṇa omits the following verses.
6 भारोपनीतस्तु—उ.

मन्वन्तराणि षट्त्रिंशत् ततः [1]काललये पुनः ॥
इह लोके भवेद्राजा सप्त वर्षायुतानि तु ।
दाता [2]पुत्रसमायुक्तो मृतो निर्वाणमाप्नुयात् ॥

[3]इति कृष्णद्वादशीव्रतम् ॥

## [अथ बुद्धद्वादशीव्रतम्]

[4]दूर्वासा उवाच—

[5][एवमेव श्रावणे तु मासि संकल्प्य द्वादशीम् ।]
अर्चयेत्परमं देवं गन्धपुष्पनिवेदनैः ॥
बुद्धाय पादौ संपूज्य श्रीधरायेति वै कटिम् ।
मनोभवाय[6] जठरमुरः संवत्सराय च ॥
सुग्रीवायेति [7]च कटिं भुजौ [8]वै [9]विश्ववाहनः ।
प्राग्वच्छस्त्राणि संपूज्य शिरो वै परमात्मने ॥
एवमभ्यर्च्य मेधावी [10]घटं च स्थापयेत्ततः ।
[11]तं सौवर्णमयं बुद्धं कृत्वा चैव विचक्षणः ॥[12]

1 कालात्यये—हे.

2 यज्वा क्षमायुक्तो—हे.

3 इति धरणीव्रते वासुदेवद्वादशीव्रतम्—हे.

4 हे. व्र. I., १०३७–३८; वरा. पु., अ. ४७, श्लो. १–६.

5 Line omitted by ना and उ; supplied by Hemādri. The printed Varāhapurāṇa reads a different version of *Buddhadvādaśī*.

6 पद्मोद्भवाय—हे.

7 कण्ठं तु—हे.

8 द्वौ for वै—हे.

9 विश्वबाहवे—उ.

10 तस्याग्रे पूर्ववद्घटम्—हे.

11 स्थापयेत्तत्र सौवर्णं बुद्धं कृत्वा विचक्षणः—हे.

12 Hemādri comments: बुद्धस्वरूपमुक्तं पुराणान्तरे—"बुद्धस्तु द्विभुजः कार्यो ध्यानस्तिमितलोचनः" इति.

तमप्येवं तु संपूज्य ब्राह्मणाय निवेदयेत् ।
अनेन विधिना पूर्वं द्वादशी समुपोषिता ॥
[1]शुद्धोदनेन बुद्धोऽभूत् स्वयं पुत्रो जनार्दनः ।
महतीं च [2]श्रियं प्राप्तः पुत्रपौत्रसमन्वितः ॥
भुक्त्वा राज्यश्रियं सोऽथ गतिं परमिकां गतः ।

[3]इति बुद्धद्वादशीव्रतम् ॥

## [अथ कल्किद्वादशीव्रतम्]

[4]दुर्वासा उवाच—

तद्वद्भाद्रपदे मासि शुक्लपक्षेऽत्र[5] द्वादशीम् ।
सङ्कल्प्य विधिना देवमर्चयेत्परमेश्वरम् ॥
नमोऽस्तु कल्किने पादौ हृषीकेशाय वै कटिम् ।
म्लेच्छप्रध्वंसनायोरू जगन्मूर्तेस्तथोदरम् ॥
श्रीकण्ठायेति कण्ठं तु खड्गपाणीति वै भुजौ ।
स्वनाम्ना शङ्खचक्रे च विश्वमूर्तेस्तथा शिरः ॥
एवमभ्यर्च्य मेधावी प्राग्वत्तस्याग्रतो घटम् ।
विन्यसेत् [6]कल्किनं देवं सौवर्णं [7]कारयेत्तथा ॥[8]

1 बुद्धादनेन तस्याभूत्—ना.
2 प्रियां—ना.
3 इति धरणीव्रते बुद्धद्वादशीव्रतम्—हे.
4 हे. व्र. I., १०३८–१०३९; वरा. पु., अ. ४८, श्लो. १–६; १७; २०–२२.
5 तु for अत्र—उ, हे.
6 वामनं—ना.
7 तत्र धारयेत्—हे.
8 Hemādri comments: कल्किस्वरूपं पुराणान्तरात्—
'कृपाणपाणिः कर्तव्यः कल्की तुरगवाहनः' इति ।

सितवस्त्रयुगच्छन्नं गन्धपुष्पोपशोभितम् । ·
कृत्वा प्रभाते विप्राय प्रदेयं शास्त्रवित्तमे ॥
पूर्वं राजा विशालोऽभूत् [1]काशीपुर्यां महाबलः ।
द्वादशीं कृतवान् सोऽपि चक्रवर्ती बभूव ह ॥
यज्ञैश्च विविधैरिष्ट्वा [2]पुनर्निर्वाणमाप्नुयात् ।
पूज्यते मत्स्यरूपेण सर्वज्ञत्वमभीप्सुभिः ॥
स्ववंशोद्धरणार्थाय कूर्मरूपी तु पूज्यते ।
भवोदधिनिमग्नेन वराहः पूज्यते हरिः ॥
नरसिंहस्वरूपेण सर्वपापभयातुरैः ।
वामनो मोहनार्थाय वित्तार्थे जमदग्निजः ॥
क्रूरशत्रुविनाशाय यजेद्दाशरथिं बुधः ।
बलकृष्णौ यजेद्धीमान् पुत्रकामो न संशयः ॥
रूपकामो यजेद्बुद्धं कल्किनं शत्रुघातने ।

[3]इति कल्किद्वादशीव्रतम् ॥

## [अथ पद्मनाभद्वादशीव्रतम्]

[4]दुर्वासा उवाच—

तद्वदाश्वयुजे मासि द्वादशीं [5]सितपक्षिणीम् ।
संकल्प्याभ्यर्चयेद्देवं पद्मनाभं सनातनम् ॥
पद्मनाभाय पादौ तु कटिं वै पद्मयोनये ।

1 क्वापि पुर्यां महाबलः—उ.
2 परं निर्वाणमाप्तवान्—हे.
3 इति धरणीव्रते कल्किद्वादशीव्रतम्—हे.
4 हे. व्र. I., १०३९–१०४१ ; वरा. पु., अ.४९, श्लो.१–८ ; १०–१२ ; २१–२९.
5 शुक्ल for सित—हे.

उदरं सर्वदेवाय [1]पुष्कराक्षाय वै उरः ॥
अव्ययाय तथा [2]बाहू प्राग्वदस्त्राणि पूजयेत् ।
प्रभवाय शिरः पूज्य प्राग्वदग्रे घटं न्यसेत् ॥
तस्मिन् हेममयं देवं पद्मनाभं तु विन्यसेत् ।[3]
[4]तमेव देवं संपूज्य गन्धपुष्पादिभिः क्रमात् ॥
प्रभातायां तु शर्वर्यां ब्राह्मणाय निवेदयेत् ।[5]
आसीत्कृतयुगे राजा भद्राश्वो नाम वीर्यवान् ॥
यस्य नाम्नाभवद्वर्षं भद्राश्वं नाम नामतः ।
तस्यागस्त्यः कदाचित्तु गृहमागत्य भूपतेः ॥
उवाच पञ्चरात्रं तु वसामि भवतो गृहे ।
तं राजा शिरसा नत्वा स्थीयतामित्यभाषत ॥
तस्य [6]कान्तिमती नाम्ना भार्या परमशोभना ।
तामगस्त्यस्तथा दृष्ट्वा रूपतेजोन्वितां शुभाम् ॥
सपत्नीश्च [7]तया तुल्याः कुर्वतीः कर्म शोभनम् ।
साधु [8]साधु जगन्नाथ [9]स्त्रीशूद्रौ साधु साध्विति ॥
एवमुक्त्वा ननर्तोच्चैरगस्त्यो राजसन्निधौ ।

राजोवाच—

किं हर्षकारणं ब्रह्मन् येनैवं नृत्यते भवान् ॥

1 पुष्परक्षाय—ना.

2 वक्षः—ना.

3 Hemādri comments : पद्मनाभस्तु दक्षिणाधोहस्तादारभ्य सव्येन शङ्खपद्मगदाधारी कार्यः ।

4 तं देवदेवं—हे.

5 Ujjayin manuscript adds : इति कल्किद्वादशीव्रतम्.

6 कीर्तिमती—उ.

7 भयात्सर्वाः—हे.

8 पार्थ—हे.

9 पुन्नान्—ना.

अगस्त्य उवाच—

क्वापि[1] राज्ञी त्वदीयाभूद्दासी वैश्यस्य वैदिशे ।
नगरे हरिदत्तस्य त्वमस्याः पतिरेव च ॥
तस्यैव कर्मकारोऽभूच्छूद्रो [2]विद्धेति नामतः ।
[3]स तत्राश्वयुजे मासि द्वादश्यां नियतः शुचिः ॥
स्वयं विष्णवालयं गत्वा गन्धपुष्पादिभिर्हरिम् ।
अभ्यर्च्य स्वगृहं प्राप्य [4]भवन्तौ रक्षपालकौ ॥
स्थाप्य द्वारेऽपि दीपानां ज्वालनार्थं महामते ।
गते तस्मिन् भवन्तौ तान् दीपान् ज्वालयतौ स्थितौ ॥
यावत्प्रभाता रजनीं [5]निःशाठ्येन नृपोत्तम ।
ततः कालेन महता मृतौ द्वावपि दम्पती ॥
तेन पुण्येन ते जन्म प्रियव्रतगृहेऽभवत् ।
इयं च पत्नी ते जाता वैश्यदास्यभवत्पुरा ॥
[6]पारक्यस्यापि दीपस्य ज्वालितस्य हरेर्गृहे[7] ।
इयं व्युष्टिः परा जाता भक्तियुक्तस्य ते पुरा ॥
स्वेन यत्पुनरर्थेन विष्णुमभ्यर्च्य दीपकम् ।
ज्वालयेत्तस्य यत्पुण्यं तत्सङ्ख्यातुं न शक्यते ॥

[8]इति पद्मनाभद्वादशीव्रतम् ॥

1 इयं—हे.
2 विध्येति—हे.
3 स तस्याश्वयुजे—ना ; स वैश्योश्वयुजे—हे.
4 सुवर्णौ रक्तपाटलौ—ना.
5 निःसाध्येन—ना.
6 यावत्कस्यापि—ना.
7 गृहे गृहे—ना.
8 इति धरणीव्रते पद्मनाभद्वादशीव्रतम्—हे.

## [अथ योगेश्वरद्वादशीव्रतम्]

अगस्त्य उवाच—

शृणुष्व भक्तितो राजन् कार्तिकैकादशीं तथा।
उपोष्य विधिना येन [2]सर्वासां प्राप्नुयात्फलम्॥
प्राग्विधानेन संकल्प्य तद्वत्स्नानं [3]समाचरेत्।
विलोमेनार्चयेद्देवं नारायणमकल्मषम्॥
नमः सहस्रशिरसे [4]शिरः संपूज्य वै हरेः।
पुरुषायेति च भुजौ कण्ठं वै विश्वरूपिणे॥
ज्ञानात्मनेति [5]चास्त्राणि श्रीवत्साय तथा उरः।
[6]जगद्ग्रसिष्णवे पूज्य उदरं [7]दिव्यमूर्तये॥
कटिं सहस्रपादाय पादौ देवस्य पूजयेत्।
अनुलोमेन देवेशं पूजयित्वा विचक्षणः॥
नमो दामोदरायेति सर्वाङ्गं पूजयेद्धरेः।
एवं संपूज्य विधिना तस्याग्रे चतुरो [8]घटान्॥
स्थापयेद्रत्नगर्भांस्तु सितचन्दनचर्चितान्।
स्रग्दामाबद्धग्रीवांस्तु सितवस्त्रावगुण्ठितान्॥
[9]स्थगितान् ताम्रपात्रैस्तु तिलपूर्णैः सकाञ्चनैः।
चत्वारः सागराश्चैते कल्पिता द्विजसत्तम॥

1 हे. व्र. I., १०४१–१०४४; वरा. पु., अ. ५०, श्लो. ४–२९.
2 सर्वं संप्राप्नुयात्फलम्—ना.
3 समर्चयेत्—उ, हे.
4 नमः—ना.
5 चान्द्राणि—ना.
6 जगद्ग्रसिष्णवे—ना.
7 विश्वमूर्तये—हे.
8 वरान्—ना.
9 स्थापितं ताम्रपात्रे तु—ना.

तन्मध्ये प्राग्विधानेन सौवर्णं स्थापयेद्धरिम् ।
योगेश्वरं [1]योगविधिमनन्तं पीतवाससम् ॥
[2]तमप्येवं तु संपूज्य जागरं तत्र कारयेत् ।
कुर्याच्च वैष्णवं [3]योगं यजेद्योगेश्वरं हरिम् ॥
[4]षोडशारे रथाङ्गे तु रजोभिर्बहुभिः कृते ।
एवं कृत्वा प्रभाते तु ब्राह्मणान् पञ्च चानयेत् ॥
चत्वारः कलशा देयाश्चतुर्णां पञ्चमस्य तु ।
योगेश्वरं तु सौवर्णं प्रदद्यात् प्रयतः शुचिः ॥
वेदाध्येत्रे समं दत्तं तद्विदे द्विगुणं तथा ।
आचार्ये पञ्चरात्राणां सहस्रगुणितं भवेत् ॥
यस्त्विमं सरहस्यं तु समन्त्रं चोपपादयेत् ।
विधानं तस्य भक्त्या वै दत्तं [5]कोटिगुणं भवेत् ॥
[6]गुरौ तिष्ठति यस्त्वन्यमासन्नं[7] पूजयेत्सुधीः ।
स दुर्गतिमवाप्नोति दत्तं तस्य च निष्फलम् ॥
[8]आसन्ने[9] तु गुरौ पूर्वं पश्चादन्यस्य दीयते ।
अविद्यो वा सविद्यो वा गुरुर्देवो जनार्दनः ॥
अमार्गस्थोऽपि मार्गस्थो गुरुरेव परा गतिः ।
प्रतिपद्य गुरुर्यस्तु मोहाद्विप्रतिपद्यते ॥

1 योगनिद्राशायिनं—हे.
2 तमेव वर्णं संपूज्य—ना.
3 यागं अर्पयेद्योगेश्वरं—हे.
4 Hemādri comments: 'षोडशारे रथाङ्गे' षोडशारचक्रे ।
5 कोटिगुणोत्तरम्—हे.
6 योग्ये—हे.
7 आसीनं—ना.
8 Hemādri omits the following five lines.
9 प्रसन्ने—ना.

युगकोटिं स नरके पच्यते नात्र संशयः ।
एवं दत्वा विधानेन तत्त्वतो [1]विष्णुमर्चयेत् ॥
विप्राणां भोजनं [2]दत्वा यथाशक्ति सदक्षिणम् ।
धरणीव्रतमेतद्धि पुरा कृत्वा प्रजापतिः ॥
[3]प्रजां लेभे तथा मुक्तिं ब्रह्मण्यं विजने पुनः ।
युवनाश्वोऽपि [4]राजर्षिरेतेन विधिना पुरा ॥
मान्धातारं सुतं लेभे परं ब्रह्म च शाश्वतम् ।
तथा हैहयदायादः कृतवीर्यो नराधिपः ॥
कार्तवीर्यं सुतं लेभे परं ब्रह्म च शाश्वतम् ।
[5]शकुन्तलाप्येवमेव व्रतं चीर्त्वा महामुने ॥
लेभे शाकुन्तलं पुत्रं दौष्यन्तिं चक्रवर्तिनम् ।
अनेन विधिना प्राप्तं चक्रवर्तित्वमुत्तमम् ॥
धरण्या अपि पाताले [6]मग्नया च कृतं पुरा ।
व्रतमेतत्ततो नाम्ना धरणीव्रतमुच्यते ॥
समाप्तेऽस्मिन् धरा देवी हरिणा [7]कोलरूपिणा ।
उद्धृताद्यापि तुष्टेन धारिता नौरिवाम्भसि ॥[8]
य इदं शृणुयाद्भक्त्या यश्च कुर्यान्नरोत्तमः ।
स सर्वपापनिर्मुक्तो विष्णुसालोक्यतां व्रजेत् ॥[9]

1 विष्णुमर्च्य च—उ, हे.
2 दद्याद्यथाशक्त्या—उ, हे.
3 प्रजां लभेतार्थयुक्तिं—ना.
4 राजर्षिरेवं च—ना ; राजर्षिरनेन—हे.
5 Line omitted by ना.
6 पद्मया—हे.
7 क्रोडरूपिणा—हे ; लोकपूरिणा—ना.
8 Hemādri adds : धरणीव्रतमेतद्धि कीर्तितं यन्मया मुने ।
9 Hemādri adds : एकैकयापि वापत्सु राज्यमेकैव यच्छति ।

किं पुनर्द्वादशैतास्तु [1]येनेन्द्रत्वं ददुः पुरा ॥

इति योगेश्वरद्वादशीव्रतम्[2] ॥

## [अथ भर्तृद्वादशीव्रतम्]

[3]अप्सरसः—

भगवन् ब्रह्मतनय भर्तृकामा वयं द्विज ।
नारायणश्च भर्ता नो यथा स्यादाचचक्ष्व? तत् ॥

नारद उवाच—

[4]इदानीं कथयाम्याशु येन भर्ता हरिः स्वयम् ।
[5]वरदं तमवाप्नोति भर्तृत्वं च नियच्छति ॥
वसन्ते शुक्लपक्षस्य द्वादशी या भवेच्छुभा ।
तस्यामुपोष्य विधिवत् [6]सश्रीकं हरिमर्चयेत् ॥
[7]पर्यङ्के पूज्य देवेशं नानास्तरणसंयुतम् ।
तत्र [8]लक्ष्म्याः पतिं देवं रौप्यं कृत्वा निवेदयेत् ॥
तस्योपरि ततः पुष्पैर्मण्डपं कारयेद्बुधः ।
नृत्यवादित्रघोषैश्च[9] जागरं तत्र कारयेत् ॥
मनोभवायेति शिरस्त्वनङ्गायेति[10] वै कटिम् ।

1 यत्रेदं न—हे.
2 Hemādri adds : इति वाराहपुराणे धरणीव्रतम् ।
3 हे. व्र. I., ११९९–१२००.
4 Hemādri adds five lines before this.
5 Line corrupt in Mss ; restored from Hemādri.
6 सश्रीकण्ठमर्चयेत्—ना.
7 आयसं पूज्य—ना.
8 लक्ष्म्या युतं देवं—हे.
9 गीतैश्च for घोषैश्च—हे.
10 अनन्तायेति—ना.

कामाय बाहुमूले तु [1]स्वयमास्थाय चोदरम् ॥
मन्मथायेति पादौ तु हरये इति सर्वतः ।
पुष्पैः संपूज्य देवेशं मल्लिकाजातिभिस्तथा ॥
पश्चाच्चतुर आदाय इक्षुदण्डान् सशोभनान् ।
चतुर्दिक्षु न्यसेत्तस्य देवस्य पुरतो नृप ॥
एवं कृत्वा प्रभाते च [2]प्रदद्याद्ब्राह्मणाय च ।
वेदवेदाङ्गयुक्ताय संपूर्णाङ्गाय धीमते ॥
[3]ब्राह्मणाश्च ततो भोज्या व्रतमेतत्समापयेत् ।
[4]एतस्माद्व्रततो विष्णुर्भर्ता वो भविता ध्रुवम् ॥
अकृत्वा [5]मत्प्रणामं तु पृष्टं गर्वेण [6]यद्व्रतम् ।
[7]व्रतेन देवदेवेशं प्रियं लब्ध्वाभिमानतः ॥
अवसानेऽपहरणं गोपालैर्वो भविष्यति ।
[8]परत्राणां च कल्पानां देवो भर्ता भविष्यति ॥

[10]इति भर्तृद्वादशीव्रतम् ॥

## [अथ शुभद्वादशीव्रतम्]

[11]अगस्त्य उवाच—

शृणु राजन् महाभाग शुभव्रतमनुत्तमम् ।

1 कुशमास्थाय—हे.
2 दापयेद्—हे.
3 ब्राह्मणांश्च तथा भोज्य व्रतमेतत्समाप्यते—हे.
4 व्रतस्यान्ते ततो—हे.
5 मत्प्रबोधं तु पूर्वगर्वेण—ना.
6 यद्ध्रुवम्—उ; शोभनाः—हे.
7 व्रतेनानेन देवेशं पतिं लब्ध्वाभिमानतः—हे.
8 पराहृतानां कन्यानां देवो—हे.
9 Hemādri adds two more lines at the end.
10 इति भविष्यत्पुराणोक्तं भर्तृप्राप्तिव्रतम्—हे.
11 हे. व्र. I., ११०१–११०३; वरा. पु., अ. ५५, श्लो. १–२०; ५९.

येन संप्राप्यते विष्णुः शुभेनैव न संशयः ॥
मासि मार्गशिरे पुण्ये [1]प्रथमं व्रतमाचरेत् ।
एकभक्तं सिते पक्षे यावत्स्याद्दशमीति च ॥
ततो दशम्यां मध्याह्ने [2]स्नात्वा केशवमर्चयेत् ।
[3]भुक्त्वा [4]संकल्पयेत्प्राग्वद्द्वादशीं [5]शुद्धमानसः ॥
केशवेति हरिं पूज्य दद्यात्तत्प्रीतये तिलान् ।
सहिरण्यांस्तदा कृत्वा[6] द्वादशीं प्रयतो नृप ॥
[7]तावत्परमुषित्वा तु [8]यवान् दद्याद्द्विजातये ।
[9]कृत्वा चैतैर्हरिर्वाच्यो दाने होमे तथार्चने ॥
चातुर्मास्यं तथैवं तु क्षपित्वा राजसत्तम ।
चैत्रादिषु पुनस्तद्वदुपोष्य प्रयतः शुचिः ॥
[10]सक्तुपात्राणि विप्राणां सहिरण्यानि दापयेत् ।
श्रावणादिषु मासेषु गोविन्दं तद्वदर्चयेत् ॥
त्रिषु मासेषु यावत्तु [11]कार्तिकस्यादिरागतः ।
तमप्येवं [12]क्षपित्वा च समां च प्रयतः शुचिः ॥
अर्चयित्वा हरिं भक्त्या मासनाम्ना विचक्षणः ।[13]

1 प्रथमाब्दात्समाचरेत्—हे.
2 स्नातो—ना.
3 भक्त्या—ना.
4 संकल्पतः प्राग्वद्द्वादशीं—हे; संकल्पयेत्प्राज्ञो द्वादशीं—ना.
5 शुद्धमात्मनः—ना.
6 कृष्ण—हे.
7 तामभ्येवमुषित्वा च—हे.
8 सर्वान् दत्वा द्विजातये—ना.
9 कृष्णायेति हरिर्वाच्यो—हे; कृत्वा एतैर्हरिर्देवो—ना.
10 शुक्लपात्राणि—ना.
11 कार्तिकः स्यादिहागतः—हे.
12 क्षपयित्वा दशम्यां प्रयतः—हे.
13 Hemâdri comments: प्रियदसेत्यादिमन्त्रेण ।

सङ्कल्पं कारयेद्भक्त्या द्वादश्यां संयतेन्द्रियः ॥
एकादश्यां यथाशक्त्या कारयेत्पृथिवीं नृप ।
[1]काञ्चनीं सप्तपातालकुलपर्वतसंयुताम् ॥
भूविन्यासविधानेन स्थापयेत्तां हरेः पुरः ।
सितवस्त्रयुगंच्छन्नां सर्वबीजसमन्विताम् ॥
संपूज्य प्रियदत्तेति [2]पञ्चरत्नैर्विचक्षणः ।
जागरं तत्र कुर्वीत प्रभाते तु पुनर्द्विजान् ॥
आमन्त्र्य संख्यया राजन्नेकविंशतिनामतः ।
तेषामेकैकशो [3]गां चाप्यनड्वाहं च दापयेत् ॥
एकैकं वस्त्रयुग्मं चाप्येकैकं चाङ्गुलीयकम् ।
कटकं चैव सौवर्णं [4]कर्णाभरणमेव च ॥
एकैकं ग्राममेतेषां राजा राज्यप्रदो भवेत् ।
यथाविभवसारेण ततो गां संप्रदापयेत् ॥
[5]अशक्त्या करणे चैव दरिद्रोऽपि स्वशक्तितः ।
यथाशक्त्या महीं कृत्वा काञ्चनीं गोयुगं तथा ॥
वस्त्रयुग्ममथैकं च दत्वा विभवशक्तितः ।
गोयुग्मासंभवात्सर्वं हिरण्येनैव कारयेत् ॥
एवं कृत्वा तथा कृष्णद्वादश्यामेव चोत्तरे ।
रौप्यां च पृथिवीं कृत्वा यथाविभवशक्तितः ॥
प्रदद्याद्ब्राह्मणानां तु तथा तेषां तु भोजनम् ।
उपानहौ यथाशक्त्या पादुके [6]छत्रिकां तथा ॥

1 काञ्चनं सप्ततालं च—ना.
2 पञ्चगन्धैः—हे.
3 Line corrupt in उ Ms.
4 कण्ठाभरणमेव—ना.
5 अशक्त्या शरणं चैव—ना.
6 मुद्रिकां—ना.

एवं [1]दद्याद्देवदेवः कृष्णो दामोदरो मम ।
प्रीयतां सर्वदा देवो विश्वरूपो हरिर्मम ॥
दाने च भोजने चैवमुक्ते यत्फलमाप्यते ।
न शक्यं तु सहस्रेण वर्षाणामपि कीर्तितुम् ॥
शुभव्रतमिदं पुण्यं यः कुर्यात्तु नरेश्वरः ।
स सर्वसंपदं प्राप्य ततो विष्ण्वालयं व्रजेत् ॥

[2]इति शुभद्वादशीव्रतम् ॥

## [अथ विष्णुप्राप्तिव्रतम्]

[3]वराह उवाच—

द्वादश्यामुपवासं तु ये वै कुर्वन्ति ते नराः ।
मामेव[4] प्रतिपद्यन्ते मम भक्तिपरायणाः ॥
कृत्वा चैवोपवासं तु गृहीत्वा चाञ्जलिं ततः ।
नमो नारायणायेति चादित्यमभिलोकयेत् ॥
यावन्तो बिन्दवः केचित् [5]पतन्त्यञ्जलितो जलात् ।
तावद्वर्षसहस्राणि स्वर्गलोके महीयते ॥
तथैव तस्यां द्वादश्यां कृत्वा कर्म यथाविधि ।
[6]आर्तवैश्चैव पुष्पैश्च [7]मृगगन्धैश्च धूपनैः ॥
य एवं कारयेद्भूमि तस्यापि शृणुयाद्गतिम् ।

1 दद्याद्देर्वावदे—हे.
2 इति शुक्लद्वादशीव्रतम्—ना ; इति वाराहपुराणोक्तं शुभद्वादशीव्रतम्—हे.
3 हे. व्र. I., ११०३–११०४.
4 मासे च—उ.
5 पतन्त्यञ्जलिभाजनात्—ना.
6 यावन्तैश्चैव—ना ; पाण्डुरैश्चैव—हे.
7 मृष्टैर्गन्धैश्च—हे.

दत्वा शिरांसि पुष्पाणि इमं मन्त्रमुदाहरेत् ॥

ओं इति कृत्वा मन्त्रः ॥

'सुरश्रेष्ठ धराधार सुमनसः सुमना गृह्य प्रीयतां मे भगवान् [1]विष्णुः' एतेन मन्त्रेण सुमनो दद्यात्। गन्धमन्त्र उच्यते ॥ 'ओं [2]नमस्तुभ्यं विष्णवे व्यक्तसुगन्धिगन्धं गृह्णेमं भगवते विष्णवे' एतेन मन्त्रेण गन्धान् दद्यात् ॥

अश्रुत्वापि च शास्त्राणि यो मामेवं च कारयेत्।
मम लोकं स गच्छेच्च जायते स चतुर्भुजः ॥
श्यामाकं षाष्टिकं चैव [3]सङ्गोज्यानि गुणांस्तथा।[4]
[5]शालीन् यवान्नं च तथा सुखं नीवारभक्तकम् ॥
एतानि यस्तु भुञ्जीत मम कर्मपरायणः।
स स्याच्च शङ्खचक्राङ्को लाङ्गली मुसली गदी ॥

[6]इति विष्णुप्राप्तिद्वादशीव्रतम् ॥

## [अथ अखण्डव्रतम्]

[7]वामनपुराण

पुलस्त्य उवाच—

[8]मासि चाश्वयुजे ब्रह्मन् यदा [9]पद्माज्जगत्पतेः।

1 अम्बिकः—हे.

2 नमस्तुभ्यं स्वस्ति विध्युक्तसुगन्धं गृह्णेमं मङ्गलवते विष्णवे—हे.

3 यद्गोज्यान्निगुणास्तथा—ना.

4 Hemādri comments : 'गुणांश्च' व्यञ्जनानि ।

5 Hemādri comments : उपवासः, सूर्यार्घ्यं, विष्णुपूजा, श्यामाकाद्यन्यतमं पारणं चेति व्रतम् ।

6 इति भविष्यत्पुराणोक्तं विष्णुप्राप्तिद्वादशीव्रतम्—हे.

7 हे. व्र. I., ११०३–११०५.

8 Hemādri adds a line in the beginning :
शृणु राजन् महाभाग व्रतं चानुत्तमं शुभम् ।

9 पद्मजसन्निधिः—हे.

[1]नाभ्यां निर्याति हि तथा देवस्यैतद्यथा भवेत् ॥
[2]कंदर्पस्य कराग्रेषु कदम्बश्चारुदर्शनः ।
तेन तस्य परा प्रीतिः कदम्बेन विवर्धते ॥
यक्षाणामधिपस्यापि मणिभद्रस्य नारद ।
वटवृक्षः समभवत्तेन तस्य हि रतिस्तदा ॥
महेशस्यापि हृदये धुत्तूरविटपः शुभः ।
संजातस्तेन शर्वस्य रतिकृत्तस्य चेतसः ॥
तथैव मध्यतो देहाज्जातो मरकतः प्रभुः ।
खदिरः कण्टकी श्रीमान् भगवद्विश्वकर्मणः ॥
गिरिजायाः करतलें कुन्दवृक्षस्तु जायते ।
गणाधिपस्य कुसुमं राजते सिन्धुवारकः ॥
यमस्य दक्षिणे पार्श्वे पलाशो दक्षिणोत्तरे ।
कृष्णः कुसूलको रौद्राज्जातः क्षोभकरोऽव्ययः ॥
स्कन्दस्य बन्धुजीवश्च रवेरश्वत्थ एव च ।
कात्यायन्याः शमी जाता बिल्वो लक्ष्म्याः करे करे ॥
नागानां प्रभुतो ब्रह्मन् शरस्तम्बो व्यजायत ।
वासुकेः सुशुभे पुच्छे पृष्ठे दूर्वाऽसिता सिता ॥
साध्यानां हृदये जातो वृक्षो हरितचन्दनः ।
एवं तेषु च सर्वेषु तेन तत्र रतिर्भवेत् ॥
तस्मिन्[3]पुण्ये शुभे काले या शुक्लैकादशी भवेत् ।
तस्यां सम्यग्यजेद्विष्णुं येन खण्डं [4]प्रपूर्यते ॥

1 नाभ्यां निर्याति जगतामीशितुश्चक्रधारिणः—हे.

2 Hemādri omits the following eighteen lines.

3 रम्ये—हे.

4 प्रपूज्यते—ना.

'येन खण्डं प्रपूर्येत' इति, येन विष्णुपूजनेन खण्डमसंपूर्णं [1]धर्मादिभिः परिपूर्णं भवतीत्यर्थः ॥

पुष्पैः पत्रैः फलैर्वापि गन्धवस्त्ररसान्वितैः ।
[2]ओषधीभिश्च सर्वाभिः यावत्स्थावरसंभवैः ॥
घृतं तिलान् व्रीहियवान् हिरण्यं कनकादि यत् ।
मणिमुक्ताप्रवालानि वस्त्राणि विविधानि च ॥
रसाश्च स्वादुकट्वम्लकषायलवणादयः ।
तिक्तानि च निवेद्यानि तान्यखण्डानि यानि हि ॥
तत्पूजार्थं प्रदातव्यं केशवाय महात्मने ।
येन संवत्सरं पूर्णमखण्डं जायते गृहे ॥
कृत्वोपवासं देवर्षे [3]द्वितीयेन न संशयः ।
स्नानेन तेन स्नायीत येनाखण्डं हि वत्सरम् ॥
सिद्धार्थकैस्तिलैर्वापि तेनैवोद्वर्तनं स्मृतम् ।
हविषा पद्मनाभस्य स्नानमेव समाचरेत् ॥
होमे तदेव गदितं [4]दानं शक्त्या द्विजोत्तम ।
पूजा च कुसुमैः कार्या [5]पादावारभ्य केशवम् ॥
[6]धूपयेद्विविधं धूपं येन स्याद्वत्सरं परम् ।
[7]हिरण्येन च वासोभिः पूजयेत्तं जगद्गुरुम् ॥
सरसद्रवचूष्याणि हविष्याणि निवेदयेत् ।[8]

1 धर्मादिपरिपूर्णं—ना.
2 Line corrupt—ना.
3 द्वितीयेऽहनि सर्वतः—हे.
4 दाने—हे.
5 तदारभ्य च—ना.
6 धूपयेद्विधिवद्धूपं—हे.
7 हिरण्यरत्नवासोभिः—हे.
8 Hemādri comments : प्रथमैकादश्यां येन द्रव्येण यत्कर्म निष्पादितं शेषास्वेकादशीषु तेनैव द्रव्येणान्यन्निष्पाद्यम् ।

संपूज्य देवदेवेशं पद्मनाभं जगद्गुरुम् ॥
विज्ञाय यन्मुनिश्रेष्ठ मन्त्रेणानेन सुव्रत ।
नमोऽस्तु पद्महस्ताय पद्मगर्भाय वै नमः ॥
धर्मार्थकाममोक्षाणि अखण्डानि भवन्तु मे ।
विकासिपद्मपत्राक्ष तथाखण्डोऽसि सर्वशः ॥
तेन सत्वेन [1]धर्माद्यास्त्वखण्डाः सन्तु केशव ।
एवं संवत्सरे पूर्णे सोपवासो जितेन्द्रियः ॥
अखण्डं पारयेद्ब्रह्मन् व्रतं वै सर्ववस्तुषु ।
[2]तस्मिंश्चीर्णे व्रते व्यक्तं परितुष्यति [3]माधवः ॥
धर्मार्थकाममोक्षाद्यास्त्वक्षयाः संभवन्ति च ।

[4]इत्यखण्डद्वादशीव्रतम्

## [नामद्वादशी]

मार्गशीर्षाद्याः केशवनारायणगोविन्दविष्णुमधुसूदन-वामनश्रीधरहृषीकेशपद्मनाभदामोदरान् प्रपूजयेद्धूपस्रग्दा-माद्यैरुपोष्य संपूज्य दक्षिणाभिर्नामभिरश्वमेधनृपसूयवाजपे-याप्तोर्यामाग्निष्टोमगोमेधपुरुषसौत्रामणिपश्वयज्ञहोमतो ल-भ्यं सर्वमश्नात्यन्ते नित्यस्मरणादर्चनान्नामजपाच्च ॥

इति नामद्वादशीव्रतम् ॥

1 धर्माद्याः—ना.
2 तस्मिंश्चान्ते—ना.
3 मानवः—ना.
4 इति वामनपुराणोक्ताखण्डद्वादशीव्रतम्—हे.

## [श्रवणद्वादशीव्रतम्]

वामनपुराण

प्रेम वाच—

श्रवणद्वादशी नाम मासि भाद्रपदे भवेत् ।
ततो नागरिकोऽत्रैको गतः स्नातुं च सङ्गमे ॥
ऐरावत्यनड्वलयोर्ब्रह्मक्षत्रपुरःसराः ।
प्रातिवेश्यप्रसङ्गेन तत्राप्यनुगतोऽस्म्यहम् ॥
कृतोपवासः शुचिमानेकादश्यां शुचिव्रतः ।
ततः संगमतोयेन वारिधाराधरं नवम् ॥
संपूर्णवस्त्रसंवीतं संगमाम्भःसमन्वितम् ।
मृत्पात्रमभिमृश्याथ पूर्णं दध्योदनेन वै ॥
प्रददौ ब्राह्मणाग्राय शुचये कृतकर्मणे ।
एतत्ते कारणं प्रोक्तं यदन्नं च सहाम्भसा ॥
दत्तं तदिद्रमायाति मध्याह्नेऽपि दिने दिने ।

इति श्रवणद्वादशीव्रतम् ॥

## [विजयद्वादशीव्रतम्]

आदित्यपुराण

भानुरुवाच—

[1]द्वादशी चापरा ब्रह्मन् पुष्येण च समन्विता ।
[2]पुष्येण सा च संयुक्ता उपोष्या तु प्रयत्नतः ॥

1 हे. व्र. I., ११४६–११४७.
2 उपोष्या तु प्रयत्नेन द्वादशी पापनाशिनी—हे.

[1]द्वादशी श्रवणोपेता विजया परिकीर्तिता ।
काले बहुतिथे ब्रह्मन् कदाचित्सा तु लभ्यते ॥
पुष्येण द्वादशी या तु शुक्ला वा फाल्गुनस्य तु ।
जया सा द्वादशी प्रोक्ता स्वयं वै विष्णुना पुरा ॥
तस्यां दत्तं तपस्तप्तं [2]कोटिकोटिगुणोत्तरम् ।
[3]यदा तु श्रावणे विप्रः कदाचित्क्षत्र[4]वद्भवेत् ॥
विजया सा तिथिः प्रोक्ता उपोष्या विधिवत्तु या ।
एकादश्यां निराहारो द्वादश्यां विष्णुमर्चयेत् ॥
रौप्यसौवर्णपात्रे वा दारुवंशमयेऽपि वा ।
[5]आच्छाद्य पात्रं वासोभिरहतैः सुपरीक्षितैः ॥
मार्गैश्च मेढजैश्चैव सिद्धिः स्याच्छक्त्यपेक्षया ।
तिलाढकेन बिल्वाद्यैः प्रस्थेन कुडवेन वा ॥
अलाभे यवगोधूमैः फलं मुख्यतिलैर्भवेत् ।
पुष्पैर्गन्धैः फलैर्धूपैः [6]कालेनैवार्चयेद्धरिम् ॥
नानाविधैर्निवेद्यैश्च भक्ष्यभोज्यैर्गुडोदनैः ।
मन्त्रवर्णं चतुर्गुणं भक्त्या लक्षगुणोत्तरम् ॥
जागरं तत्र कुर्वीत योगवादित्रनर्तनैः ।
एवं सनियमश्चास्यां प्रभाते विमले सति ॥[7]
भक्त्या वा वित्तसारेण सहिरण्यं च दापयेत् ।

1 Hemādri omits the following two lines.

2 तत॰ for कोटि—ना.

3 Hemādri omits the following two lines.

4 अक्ष for क्षत्र—ना.

5 ना Ms. omits the following three lines.

6 कालोत्थैरर्चयेद्—हे.

7 Hemādri omits the remaining portion except the three lines beginning with: समाप्ते तु व्रते etc. in page 350.

प्रदेयं श्रवणे तुषि ब्राह्मणे मन्त्रतो द्विजः ॥
ब्राह्मणांश्चापि मन्त्रेण प्रतिगृह्णाति मन्त्रवित् ।
ददाति मन्त्रतोऽप्येवं दाता भक्तिसमन्वितः ॥
"वामनो बुद्धितो दाता द्रव्यस्थो वामनः स्वयम् ।
ब्राह्मणस्य प्रसादाद्वै तेन वै वामनो हि सः ॥"

इति प्रतिग्रहणमन्त्रः ॥ अथ पूजामन्त्रः—

मत्स्यं कूर्मं वराहं च नरसिंहं च वामनम् ।
रामं रामं च कृष्णं च अर्चयामि नमो नमः ॥

ओं मत्स्याय नमः पादयोर्दद्यात् । कूर्माय नमः जानुभ्याम् । ओं वराहाय नमः गुह्यम् । ओं नृसिंहाय नमः नाभ्याम् । ओं वामनाय नमः उरः । ओं रामाय नमः भुजयोः । ओं कण्ठे भ्रुवोश्च रामाय नमः । ओं शिरसि कृष्णाय नमः । पुष्पफलादेयं सर्वमेतदर्चनाविधानेन दातव्यम् ॥

एवं तूपोष्य विप्रेन्द्र द्वादशीं श्रवणेन तु ।
पूर्वोक्तेन विधानेन भोजनं पृषदाज्यकम् ॥
पूर्वं दत्वा ब्राह्मणाय पश्चाद्भुञ्जीत चात्मना ।
न दुःखाय यथेष्टं तु न च रात्रौ विधिः स्मृतः ॥
समाप्ते तु व्रते ब्रह्मन् यत्पुण्यं तन्निबोध मे ।
चतुर्युगानां विप्रेन्द्र एकसप्ततिपावनाः ॥
तावद्विष्णुपुरे विप्र क्रीडते कामतोऽक्षयम् ।
इह चागत्य कालान्ते राजराजो भविष्यति ॥
त्रेतायुगे धर्मयुगे जायते च पुनः पुनः ।
दश जन्मनि विप्रेन्द्र विषये पत्तने शुभे ॥

कुले महति जातः स्याद्वेदवेदाङ्गपारगः ।
हस्त्यश्वरथयानानां दाता भोक्ता विमत्सरी ॥
भोक्ता पुरवराणां च यजन् यज्ञं च कोटिशः ।
रूपसौभाग्यसंपन्नो दीर्घायुर्नीरुजो भवेत् ॥
पुत्रपौत्रैः परिवृतो जीवेच्च शरदां शतम् ।

[1]इति विजयद्वादशीव्रतम् ॥

## [पुष्यार्कद्वादशीव्रतम्]

[2]देवीपुराणे—

[3]मन्त्रोक्तेन तु दोषेण [4]प्रस्तुते [5]नरकं प्रति ।
[6]मतिर्वा सवनस्थस्य [7]व्रताराधनदानयोः ॥
पुष्यार्कद्वादशी पुण्या सर्वपापनिबर्हिणी ।
कृता वा केन सा शक्र घृतपात्रप्रदायिना ॥
दाता[8] प्रत्यक्षतस्तस्य देवदेवो जनार्दनः ।
[9]अदर्शयन्मन्त्रपायी पीतवासाश्चतुर्भुजः ॥

इति पुष्यार्कद्वादशीव्रतम्[10] ॥

1 इत्यादित्यपुराणोक्तं विजयद्वादशीव्रतम्—हे.
2 हे. व्र. I., ११७६–११७७.
3 Hemādri omits the following two lines; मन्त्रबाधानलोत्थेन—उ.
4 प्रस्तौति—ना.
5 न रसं—उ.
6 मतिर्दानवनस्थस्य—ना.
7 व्रतावादनयापयोः ?—ना; व्रतावापनदानयोः—उ.
8 तदा—हे.
9 ददर्श स्वां तनुं शुभ्रां—हे.
10 इति देवीपुराणोक्तं पुष्यार्कद्वादशीव्रतम्—हे.

## [भाग्यर्क्षद्वादशीव्रतम्]

[1]बृहस्पतिरुवाच—

कथं स राजा भाग्यस्थः सर्वलोकाधिको विभुः ।
कथं च दिव्यतां प्राप्तो विष्णुसालोक्यतां व्रजेत् ॥
सर्वदेवेश्वरस्तस्य कथं तुष्ट उमापतिः ।

ब्रह्मोवाच—

भाग्यर्क्षद्वादशी नाम सा च भाग्यप्रदायिका ।
तत्र कृत्वा हरेरर्चामिष्ट्वा पद्मैर्यथाविधि ॥
सर्वलक्षणसंपूर्णां [2]श्रेष्ठवृक्षोद्भवां मुने ।[3]
शङ्करार्धं हरेः पुंस उभे संस्थापयेद्वशी ॥

[4]'हरेरर्चा' हरिहररूपा[5] प्रतिमा । 'शङ्करार्धं हरेः' इत्यादि, शङ्करस्यार्धं हरेः पुरुषस्यार्धमित्येवं हरिहरमूर्ती उभे संस्थापयेदित्यर्थः ॥

भक्त्या सर्वोपहारेण [6]द्वादशारार्णमण्डले ।
आज्येन[7] चक्रराजेन पूजितो मधुसूदनः ॥
तुतोष तस्य नृपतिस्ततो भाग्यत्वमाप्तवान् ।

1 हे. व्र. I., ११७५–११७६.

2 अष्टवक्रो महामुनिः—हे.

3 उ and ना Mss. add : अर्चनामन्त्रः । ओं मत्स्याय नमः पादयोर्दद्यात् । ओं कूर्माय नमः जानुभ्याम् । ओं वराहाय नमः गुह्यम् । ओं नरसिंहाय नमः नाभ्याम् । ओं वामनाय नमः उरः । अर्चा सर्वात्मने नमः ।

4 Comment reproduced by Hemādri.

5 हरिरूपा—हे.

6 द्वादशीरेणुमण्डले—हे.

7 आद्ये—हे.

[1]'चक्राब्जे'ऽत्र [2]द्वादशार एव, महासुदर्शनमन्त्र इति केचित् ॥

तुष्टेन देवदेवेन वरो दत्तो द्विजोत्तम ।
अत ऊर्ध्वं भवान् वत्स मम तुल्यो भविष्यति ॥
भाग्यर्क्षद्वादशी [3]तावदसंख्याता तदर्चनम् ।
याग मण्डलपूजार्हे हरिमुद्दिश्य कारयेत् ॥
आचार्याय प्रदातव्यं हेमगोभूतिलादिकम् ।
दक्षिणां वित्तसारेण पुनाति नरकार्णवात् ॥
युगभाग्यप्रभावेण प्रयच्छति फलं हरिः ।

'युगभाग्यप्रभावेण' इति, युगस्य कृतादेर्भाग्यस्य कर्मणः प्रभावेणेत्यर्थः ॥

यथा काले च क्षेत्रे च एकापि गणिका गता ॥
प्रयाति सर्वां वृद्धिं तु तथा भाग्ययुगे द्विज ।
तथा भाग्ये तथा पौष्णे वासवे च द्विजोत्तम ॥
तुल्यरूपं विजानीयाद्द्वादश्यां [4]सप्तमीषु च ।

[5]'भाग्यम्' भगदैवत्यं पूर्वफल्गुनीनक्षत्रम् । 'पौष्णं' रेवती । 'वासवम्' धनिष्ठा ॥

तुष्यते देवदेवेशः शशाङ्काङ्कितशेखरः ॥
पुत्रान् राज्यं च सौभाग्यं प्रयच्छति जनार्दनः ।
मासि मासि च यो मर्त्यः करोति [6]हरिपूजनम् ॥

1 Comment reproduced by Hemādri.
2 Hemādri omits : 'द्वादशार एव'.
3 तात अष्टम्यां वा तदर्चनम्—हे.
4 अष्टमीषु च—हे.
5 Comment reproduced by Hemādri.
6 हरपूजनम्—उ ; हरिहरार्चनम्—हे.

पद्मे सुलक्षणोपेते सर्ववर्णोपशोभिते ।
तस्य तुष्यति देवेशश्चक्रपाणिर्जनार्दनः ॥

[1]इति भाग्यर्क्षद्वादशीव्रतम् ॥

## [अथ भीमद्वादशीव्रतम्]

मत्स्यपुराण

[3]वासुदेव उवाच—

यद्यष्टमीचतुर्दश्योर्द्वादशीष्वथवा भवेत् ।
[4]अन्येष्वपि दिनर्क्षेष्वप्यशक्तं समुपोषितुम् ॥
ततः पुण्यामिमां भैमीतिथिं पापप्रणाशिनीम् ।
उपोष्य विधिनानेन गच्छेद्विष्णोः परं पदम् ॥
माघमासस्य दशमी यदा शुक्ला भवेत्तदा ।
घृतेनाभ्यञ्जनं कृत्वा तिलैः स्नानं समाचरेत् ॥
तथैव विष्णुमभ्यर्च्य [5]नमो नारायणेति च ।
कृष्णाय पादौ संपूज्य [6]शिरः सर्वात्मने नमः ।
वैकुण्ठायेति वै कण्ठम् उरः श्रीवत्सधारिणे ।
शङ्खिने चक्रिणे तद्वद्गदिने वरदाय वै ॥
सर्वे नारायणस्यैवं संपूज्या बाहवः क्रमात्[7] ।
दामोदरायेत्युदरं मेढ्रं पञ्चशराय वै ॥

1 इति देवीपुराणोक्तं भाग्यर्क्षद्वादशीव्रतम्—हे.
2 हे. व्र. I., १०४४–१०४९; मत्स्यपुराणम्, अ. ६९, श्लो. १९–६५.
3 पद्मपुराणे—हे.
4 अन्येष्वपि दिने क्षिप्रं प्रसन्नं—ना.
5 नमो नारायणाय च—ना.
6 शिवः संवत्सरे नमः—ना.
7 बादरक्रमात्—ना.

ऊरू सौभाग्यनाथाय जानुनी भूतधारिणे ।
नमो नीलाय वै जङ्घे पादौ विश्वसृजे नमः ॥
नमो देव्यै नमः शान्त्यै नमो लक्ष्म्यै नमः श्रिये ।
नमः पुष्ट्यै [1]नमः स्तुत्यै नमस्तुष्ट्यै [2]तथा श्रिये ॥
नमो विहङ्गनाथाय वायुवेगाय पक्षिणे ।
[3]विषप्रमाथिने नित्यं गरुडं चाभिपूजयेत् ॥
एवं संपूज्य गोविन्दमुमापतिविनायकौ ।
गन्धैर्माल्यैश्च धूपैश्च भक्ष्यैर्नानाविधैरपि ॥
गव्येन पयसा सिद्धां कृशरां त्वथ वाग्यतः ।
सर्पिषा सह भुक्त्वा च गत्वा शतपथं नरः ॥
न्यग्रोधदन्तकाष्ठं वाप्यथवा खादिरं बुधः ।
गृहीत्वा धावयेद्दन्तानाचान्तः प्रागुदङ्मुखः ॥
पूजां सायन्तनीं कृत्वा शयीतास्तमिते रवौ ।
नमो नारायणायेति त्वामहं शरणं गतः ॥
एकादश्यां निराहारः समभ्यर्च्य तु केशवम् ।
रात्रिं च सकलां स्थित्वा स्नानं च पयसा ततः ॥
सर्पिषा विश्वदहनं कृत्वा ब्राह्मणपुङ्गवैः ।
सहैव पुण्डरीकाक्ष द्वादश्यां क्षीरभोजनम् ॥
करिष्यामि [4]यथा सोऽहं निर्विघ्नेनास्तु तच्च मे ।
[5]एवमुक्त्वा स्वपेत्तत्र इतिहासकथाः पुनः ॥
श्रुत्वा प्रभाते संजाते नदीं गत्वा विशां पते ।

1 नमो च्युत्यै—ना.

2 तथा प्रिये—ना.

3 विषप्रमथिने—उ.

4 यतात्माहं—हे.

5 एवं भुक्त्वा—ना.

स्नानं कृत्वा मृदा तद्वत्पाषण्डानभिवर्जयेत् ॥
उपास्य संध्यां विधिवत्कृत्वा च पितृतर्पणम् ।
प्रणम्य च हृषीकेशममलं वार्कमीश्वरम् ॥
गृहस्य पुरतो भक्त्या मण्डपं कारयेद्बुधः ।
दशहस्तमथाष्टौ वा करान् कुर्याद्विशां पते ॥[1]
चतुर्हस्तप्रमाणं च विन्यसेच्चात्र तोरणम् ।
प्रमाप्य[2] कलशं तत्र माषपात्रेण संयुतम् ॥
छिद्रेण जलसंपूर्णमधः कृष्णाजिने स्थितः ।

[3]'प्रमाप्य कलशं तत्र' इति, स्थापयित्वा कलशं तोरण इत्यर्थः ॥

तस्य धारां च शिरसा धारयेत्सकलां निशाम् ॥
धाराभिर्भूरिभिर्भूरि फलं वेदविदो विदुः ।
यस्मात्तस्मात्कुरुश्रेष्ठ धाराः कार्यास्तु शक्तितः ॥
तथैव विष्णोः शिरसि क्षीरधाराः [4]प्रपातयेत् ।
[[5]पञ्च कुण्डांस्ततः कृत्वा वेद्यां तत्र समाधिनः ॥
चतुरस्रं पूर्वकुण्डं कारयेत्प्रयतो द्विज ।
दक्षिणेनार्धचन्द्रस्तु पश्चिमे वर्तुलं तथा ॥
तथा वाश्वत्थपत्राभमुत्तरेण तु कारयेत् ।
मध्ये तु पद्माकारं च कारयेद्वैष्णवीर्द्विजः ॥
पूर्वतो वेदिकायास्तु निजस्थानं प्रकल्पयेत् ।

1 Hemâdri adds : चतुर्हस्तां शुभां कुर्याद्वेदीमरिनिषूदन ।

2 प्रलम्ब्य—हे.

3 तत्र तोरण इत्यर्थः—हे.

4 प्रयामयेत्—हे.

5 Portion in Brackets omitted by ना and उ Mss.; supplied by Hemādri.

पानीयधारां शिरसि धारयेद्विष्णुतत्परः ॥
द्वितीयवेदी देवस्य तत्र पद्मं सकर्णिकम् ।
तत्पद्ममध्यस्थितं देवं मूर्त्या वै पुरुषोत्तमम्] ॥[1]
अरत्निमात्रं कुण्डं च कृत्वा तत्र च मेखलाम् ।
[2]योनिबन्धोदितं कृत्वा ब्राह्मणैर्यवसर्पिषी ॥
तिलांश्च देवदैवत्यै मन्त्रैरेवाग्निवित्तदा ।
कृत्वा च वैष्णवं सम्यक् चरुं गोक्षीरसंयुतम् ॥
निष्पावार्धप्रमाणैर्वा धारामाज्यस्य पातयेत् ।

[3]'ब्राह्मणैः' ऋत्विग्भिः करणभूतैः हुत्वेत्यर्थः । 'निष्पावार्धम्' [illegible]र्धम् ॥

जलकुम्भान् महावीर स्थापयित्वा त्रयोदश ॥
भक्ष्यैर्नानाविधैर्युक्तान् सितवस्त्रैरलङ्कृतान् ।
युतानौदुम्बरैः पात्रैः पञ्चरत्नसमन्वितान् ॥

[3]'औदुम्बरम्' ताम्रमयम् ॥

चतुर्भिर्बह्वृचैर्होमस्तत्र कार्य उदङ्मुखैः ।
रुद्रजापश्चतुर्भिश्च यजुर्वेदपरायणैः ॥
[illegible] च [4]सामानि चत्वारः सामवेदिनः
अरिष्टवर्गसहितानभितः परिपाठयेत् ॥

'अरिष्टवर्गः' [5]"तपमूषुवाजिनम्" इत्यस्यामृच्युत्पन्न[illegible]मद्वयम् ॥

1 Hemādri comments : पुरुषोत्तममूर्तिस्तु प्राधान्यात्सुवर्णमयी कार्या ॥
2 योनिवक्त्रयुतं—हे.
3 Comment reproduced by Hemādri.
4 समानि—उ.
5 अश्ववाजिनाम—ना.

एवं च द्वादशान् विप्रान् वस्त्रमाल्यानुलेपनैः ।
[1]पूजयेदङ्गुलीयैश्च वित्तशाठ्यविवर्जितः ॥
[2]एवं क्षपति रात्रिं च नृत्यगीतकलस्वनैः ।
उपाध्यायस्य च पुनर्द्विगुणं सर्वमेव च ॥
ततः प्रभाते विमले समुत्थाय त्रयोदश ।
गाश्च दद्यात्कुरुश्रेष्ठ सौवर्णखुरसंयुताः ॥
पयस्विनीः शीलवतीः कांस्यदोहसमन्विताः ।
रौप्यखुराः सवस्त्राश्च चन्दनेनाभिसेविताः ॥
तास्तु तेषां ततो भक्त्या भक्ष्यभोज्यानुतर्पितान् ।
कृत्वा वै ब्राह्मणान् सर्वान् रत्नैर्नानाविधैर्युतान् ॥
भुक्त्वा वाक्षारलवणमात्मना च विसर्जयेत् ।
अनुगम्य पदान्यष्टौ पुत्रभार्यासमन्वितः ॥
प्रीयतामत्र देवेशः केशवः [3]शोकनाशनः ।
शिवस्य हृदये विष्णुर्विष्णोश्च हृदये शिवः ॥
यथोत्तरं न पश्यामि तथा मे स्वस्तिभावतः ।
एवमुच्चार्य तान् कुम्भान् गावश्च शयनानि च ॥
वासांसि चैव सर्वेषां गृहाणि प्रापयेद्बुधः ।
अभावे बहुशय्यानामेकामपि सुसंस्कृताम् ॥
शय्यां दद्याद्गृही भीम सर्वोपस्करसंयुताम् ।
इतिहासपुराणानि वाचयित्वातिवाहयेत् ॥
[4]तद्दिनं नरशार्दूल [5]य इच्छेद्विपुलां श्रियम् ।

1 पूजयेदङ्गुलीयैश्च कटकैर्हेमसूत्रकैः ।
वासोभिः शयनीयैश्च वित्तशाठ्यविवर्जितः ॥—हे.
2 पञ्चक्षपातिबाह्या वै गीतमङ्गलनिःस्वनैः ।—हे.
3 क्लेशनाशनः—हे.
4 नन्दिनं—हे.
5 प्रयच्छेद्–

तस्मात्त्वं सर्वमालभ्य भीमसेन विमत्सरः ॥
कुरु व्रतमिदं सम्यक् स्नेहाद्गुह्यं मयोदितम् ।
त्वया कृतमिदं वीर [1]त्वन्नाम्ना भविष्यति ॥
[2]सा भीमद्वादशीत्येषा सर्वपापहरा शुभा ।
सा तु कल्याणिनी नाम [3]पुराणेषु च पठ्यते[4] ॥
स्नातः पुरा मण्डलमे तद्वत्
तेजोमयं वेदशरीरमाप ।
अस्यां च कल्याणतिथौ विवस्वान्
सहस्रधारेण सहस्ररश्मिः ॥
इदमिह हि कृतं महेन्द्रमुख्यैः
[5]वसुभिरथासुरदेवकोटिभिश्च ।
फलमिव हि न शक्यतेऽनुवक्तुं
यदि जिह्वायुतकोटयो मुखेषु ॥
कलिकलुषविदारिणीमतस्ता-
मिति कथयिष्यति यादवेन्द्रसूनुः ।
अपि नरकगतान् पितॄनशेषा-
नलमुद्धर्तुमिहैव यः करोति ॥

[6]इति भीमद्वादशीव्रतम् ॥

1 त्वन्नामकं—हे.
2 सा भैमी द्वादशीत्येषा—हे
3 पुरा कल्पेषु पठ्यते—हे.
4 ना Ms. adds a line : पुराणमण्डलेऽप्येव तद्वत्तेजोमयं च यत् ।
5 वासुदेवमुरारिदेवकोटिभिश्च—उ.
6 इति पद्मपुराणे भीमद्वादशीव्रतम्—हे.

## [विशोकद्वादशीव्रतम्]

[1]मनुरुवाच—

किमभीष्टवियोगशोकसङ्घा-
नलमुद्धर्तुमुपोषणं व्रतं वा ।
विभवा[illegible]रि भूतलेऽस्मिन्
भवभीतेरपि सूदनं च पुंसाम् ॥

[2]मत्स्य उवाच—

पार[illegible]ष्टमिदं जगत्प्रियं ते
विबुधानामपि दुर्लभं महत्त्वात् ।
तव भक्तिमतस्तथापि वक्ष्ये
व्रतमिन्द्रासुरदानवेषु गुह्यम् ॥

[3]नन्दिकेश्वर उवाच—

पुण्यमाश्वंयुजे मासि विशो[illegible]शीव्रतम् ।
[illegible]शम्यां [4]लघुभुग्विद्वानारभेन्नियमेन च ॥
उदङ्मुखः प्राङ्मुखो वा दन्तधावनपूर्वकम् ।
एकादश्यां निराहारः समभ्यर्च्य च केशवम् ॥
[5]श्रियमभ्यर्च्य विधिवद् भोक्ष्ये वै त्वपरेऽहनि ।
एवं नियमकृत् सुप्त्वा प्रातरुत्थाय मानवः ॥
स्नानं सर्वौषधैः कुर्यात् पञ्चगव्यजलेऽपि तत् ।

1 मत्स्यपुराणम्—अ. ८१, श्लो. १–२८; अ. ८२, श्लो. १–२६.
2 पुलस्त्य उवाच—उ.
3 Not found in printed Matsyapurāṇa.
4 लघुभुङ्नीत्वा वारभेन्नियमेन च—ना.
5 श्रियं वाभ्यर्च्य—मु. म. पु; प्रियमभ्यर्च्य—ना.

[1]शुक्लमाल्याम्बरं तद्वद्धारयेच्छ्रीघ्रमुत्पलैः ॥
विशोकाय नमः पादौ जङ्घे च वरदाय वै ।
श्रीशाय जानुनी तद्वदूरू च जलशायिने ॥
कन्दर्पाय नमो गुह्यं माधवाय नमः कटिम् ।
दामोदरायेत्युदरं पार्श्वे च विपुलाय वै ॥
नाभिं च पद्मनाभाय हृदयं मन्मथाय वै ।
श्रीधराय विभोर्वक्षः करौ [2]मधुभिदे नमः ॥
चक्रिणे वामबाहुं च दक्षिणं गदिने नमः ।
[3]वैकुण्ठाय नमः कण्ठमास्यं यज्ञमुखाय वै ॥
[4]नासां शोकविनाशाय वासुदेवाय चाक्षिणी ।
ललाटं [5]वामनायेति [6]हरायेति पुनर्भ्रुवौ ॥
अलकान्माधवायेति किरीटं विश्वरूपिणे ।
नमः सर्वात्मने तद्वच्छिर इत्यभिपूजयेत् ॥
एवं संपूज्य गोविन्दं [7]धूपमाल्यानुलेपनैः ।
तत्रापि मण्डलं कुर्यात् स्थण्डिलं कारयेन्मुदा ॥
चतुरस्रं [8]समन्ताच्च रत्निमात्रमुदक्प्लुतम् ।
[9]सूक्ष्मं हृद्यं च परितो [10]वप्रद्वयसमावृतम् ॥

1 शुक्लमाल्याम्बरधरः पूजयेच्छ्रीशमुत्पलैः—मु. म. पु.

2 मधुजिते—मु. म. पु.

3 Line omitted by ना; उ Ms. contains 'कण्ठमास्यं यज्ञमुखाय' only; restored from the printed Matsyapurāṇa.

4 नासामशोकनिधये—मु. म. पु.

5 रामरामेति—ना.

6 हरये च—मु. म. पु.

7 फल for धूप—मु. म. पु.

8 समन्तात्त्रिरत्निमात्रमुदक्प्लवम् —उ.

9 श्लक्ष्णं for सूक्ष्मं—मु. म. पु.

10 वप्रत्रय for वप्रद्वय—मु. म. पु.

[1]त्रिरङ्गुलोच्छ्रितं वप्रं तद्विस्तारो द्विरङ्गुलः ।
स्थण्डिलस्योपरिष्टात्तु भित्तिरष्टाङ्गुला भवेत् ॥
नदीवालुकया शूर्पे लक्ष्म्याः प्रतिकृतिं न्यसेत् ।
स्थण्डिले शूर्पमारोप्य लक्ष्मीमित्यर्चयेद्बुधः ॥
नमो देव्यै नमः शान्त्यै नमो लक्ष्म्यै नमः श्रियै ।
नमस्तुष्ट्यै नमः पुष्ट्यै [2]नमो धृत्यै नमो नमः ॥
विशोका दुःखनाशाय विशोका वरदास्तु मे ।
विशोका मेऽस्तु संतत्यै विशोका सर्वसिद्धये ॥
शुक्लाम्बरधरः शूर्पं संवेष्ट्यापूरयेत्फलैः ।
भक्ष्यैर्नानाविधैस्तद्वत् सुवर्णकमलेन च ॥
रजनीषु च सर्वासु पिबेद्दर्भोदकं बुधः ।
ततस्तु गीतनृत्यानि कारयेत् सकलां निशाम् ॥
[3]यामत्रये व्यतीते तु सुप्त्वोत्थाय च मानवः ।
अभिगम्य स विप्राणां मिथुनानि तथार्चयेत् ॥[4]
अनेन विधिना सर्वं मासि मासि समाचरेत् ।
व्रतान्ते शयनं दद्याद्गुडधेनुसमन्वितम् ॥
सोपधानकविश्रामं [5]सुवस्त्राभरणं शुभम् ।

1 अङ्गुलेनोच्छ्रिता वप्रास्तद्विस्तारस्तु द्व्यङ्गुलः—मु. म. पु.

2 हृष्ट्यै हृष्ट्यै नमो नमः—मु म. पु.

3 निशायां तु व्यतीतायां तत्रोत्थाय च मानवः—ना.

4 The printed Matsyapurāṇa adds :
शक्तितस्त्रीणि चैकं वा वस्त्रमाल्यानुलेपनैः ।
शयनस्थानि पूज्यानि नमोऽस्तु जलशायिने ॥
ततस्तु गीतवाद्येन रात्रौ जागरणे कृते ।
प्रभाते च ततः स्नानं कृत्वा दांपत्यमर्चयेत् ॥
भोजनं च यथाशक्त्या वित्तशाठ्यविवर्जितः ।
भुक्त्वा श्रुत्वा पुराणानि तद्दिनं चातिवाहयेत् ॥

5 सास्तरावरणं शुभम्—मु. म. पु.

यथा न लक्ष्मीर्देव त्वां परित्यज्य च गच्छति ।।
तथा रूपं तथारोग्यमशोको वास्तु मे सदा ।
देवेन रहिता लक्ष्मीर्जायते न क्वचिद्यथा ।।
तथा विशोकता मेऽस्तु भक्तिरग्र्या च केशवे ।
मन्त्रेणानेन शयनं गुडधेनुसमन्वितम् ।।
शूर्पं च लक्ष्म्या सहितं दातव्यं भूतिमिच्छता ।
उत्पलं करवीरं च बाणमम्लानकुङ्कुमम् ।।
[1]केसरं सिन्धुवारं चाप्यम्लानकुसुमं तथा ।
मल्लिका गन्धपुष्पाणि कुन्दं च कुसुमं तथा[2] ।।
कदम्बं कुब्जकं जाती[3] शस्तान्येतानि सर्वदा ।
विशोकद्वादशी चैषा सर्वपापहरा शुभा ।।
[4]तामुपोष्य नरो याति तद्विष्णोः परमं पदम् ।
इह लोके च सौभाग्यमायुरारोग्यमेव च[5] ।।
वैष्णवं पदमाप्नोति [6]मरणे स्मरणं हरेः ।
[7]भवार्बुदसहस्राणि दश चाष्टौ च धर्मवित् ।।
न शोकदुःखदारिद्र्यं तस्य संजायते नृप ।
नारी वा कुरुते या च विशोकद्वादशीमिमाम् ।।
ऋतुमती परा नित्यं सापि तत्फलमाप्नुयात् ।
[8]यस्मादग्रे हरेर्नित्यमनन्तं गीतवादनम् ।।

इति विशोकद्वादशीव्रतम् ।।

1 केतकी सिन्दुवारं च मल्लिका गन्धपाटला—मु. म. पु.
2 Line not found in मु. म. पु.
3 नानानि च तथा चैव—ना.
4 यामुपोष्य—उ, मु. म. पु.
5 सौभाग्यं ह्यथवारोग्यमेव च—ना.
6 मरणे च स्मरन् हरिम्—मु. म. पु.
7 भवाम्बुदसहस्राणि—उ; नवार्बुदसहस्राणि—मु. म. पु.
8 नृत्यगीतपरा—मु. म. पु.

## [अथ विभूतिद्वादशीव्रतम्]

[1]नन्दिकेश्वर उवाच—

शृणु [2]नारद वक्ष्यामि विष्णोर्व्रतमनुत्तमम्।
विभूतिद्वादशी नाम [3]सर्वासुरगणस्तुता ॥
कार्तिके [4]चैव वैशाखे मार्गशीर्षेऽथ फाल्गुने।
आषाढे वा दशम्यां तु शुक्लायां लघुभुङ्नरः ॥
कृत्वा सायन्तनीं सन्ध्यां गृह्णीयान्नियमं बुधः।
एकादश्यां निराहारः समभ्यर्च्य जनार्दनम् ॥
द्वादश्यां द्विजसंयुक्तः करिष्ये भोजनं विभो।
तदविघ्नेन मे यातु साफल्यं मधुसूदन ॥[5]
ततः प्रभात उत्थाय कृतस्नानजपः शुचिः।
पूजयेत् पुण्डरीकाक्षं शुक्लमाल्यानुलेपनैः ॥
विभूतये नमः पादौ विशोकाय च जानुनी।
नमः शिवायेति चोरू [6]विश्वमूर्ते नमः कटिम् ॥
[7]कन्दर्पाय नमो मेढ्रमादित्याय फले तथा।

'फले' कृष्णवृषणौ ॥

दामोदरायेत्युदरं वासुदेवाय च स्तनौ ॥

1 हे. व्र. I., १०५७–१०६०; म. पु., अ. ९९, श्लो. १–२१.

2 राजन् प्रवक्ष्यामि—हे.

3 सर्वाभरणभूषिता—हे; सर्वदेवनमस्कृतम्—मु. म. पु.

4 चैत्रवैशाखे—मु. म. पु.

5 The printed Matsyapurāṇa adds:
नमो नारायणायेति वाच्यं च स्वपता निशि।

6 विश्वमूर्तये नमः—ना.

7 कटिं कन्दर्पाय नमो आदित्याय फले तथा—ना; कन्दर्पाय नमो मेढ्रमादित्याय नमः करौ—हे., मु. म. पु.

[1]माधवायेत्युरो विष्णोः कण्ठमुत्कण्ठिने नमः ।
श्रीधराय मुखं केशान् केशवायेति नारद ॥
पृष्ठं शार्ङ्गधरायेति [2]श्रवणे वरदाय वै ।
स्वनाम्ना शङ्खचक्रासिगदाजलज[3]पाणये ॥
शिरः सर्वात्मने ब्रह्मन् नम इत्यभिपूजयेत् ।
मत्स्यमुत्पलसंयुक्तं हैमं कृत्वा तु शक्तितः ॥
उदकुम्भसमायुक्तमग्रतः स्थापयेद्विभोः ।
गुडपात्रैस्तिलैर्युक्तं सितवस्त्रावगुण्ठितम् ॥
कृत्वा जागरणं कुर्यादितिहासकथादिना ।
प्रभातायां तु शर्वर्यां ब्राह्मणाय कुटुम्बिने ॥
सकाञ्चनोत्पलं देवं [4]सोदकुम्भं निवेदयेत् ।'
यथा न मुच्यते विष्णुः सदा सर्वविभूतिभिः ॥
तथा मां मोचयाशेषदुःखसंसारकर्दमात् ।
दशावताररूपाणि प्रतिमासं क्रमान्मुने ॥
दत्तात्रेयं तथा व्यासमुत्पलेन समन्वितम् ।
[5]दद्यादेवं समादाय पाषण्डान् परिवर्जयेत् ॥
समाप्यैवं यथाशक्त्या द्वादशद्वादशीर्नरः ।
संवत्सरान्ते लवणपर्वतेन समन्विताम् ॥
शय्यां दद्यान्मुनिश्रेष्ठ गुरवे धेनुसंयुताम् ।
[6]संवत्सरान्ते द्वादश्यां मासि द्वादश एव च ॥
समाप्तौ माघमासस्य द्वादश्यां लवणाचलम् ।

1 माधवायेति च उरो कण्ठं श्रीकण्ठाय नमः—ना.
2 चरणौ—ना.
3 वरद for जलज—हे.
4 सह कुम्भं—ना.
5 Hemādri reads a different version from here.
6 The printed Matsyapurāṇa omits the following three lines.

"निवेदयीत गुरवे शय्यां चोपस्करान्विताम्। अलङ्कृत्य हृषीकेशं सौवर्णमयपादुकम्।" [1]इत्यभिधानाल्लवणाचलोऽपि सौवर्णमयपादयुक्तो देय इत्यवगम्यते ॥

ग्रामं च शक्तिमान् दद्यात्क्षेत्रं वा भवनान्वितम् ॥
गुरुं संपूज्य विधिवद्वस्त्रालंकारभूषणैः ।
अन्यानपि यथाशक्त्या भोजयित्वा द्विजोत्तमान् ॥
तर्पयेद्वस्त्रगोदानैर्धनसंपत्तयेऽपि च ।
आराधनं चापि विष्णोर्यथाशक्त्या समाचरेत् ॥
यथा यथा हि पुरुषो भक्तिमान् माधवं प्रति ।
पुष्पार्चनविधानेन कुर्यात् संवत्सरत्रयम् ॥
अनेन विधिना यस्तु विभूतिद्वादशीव्रतम् ।
कुर्यात् पापविनिर्मुक्तः पितॄणां तारयेच्छतम् ॥
जन्मनां शतसाहस्रम[2]शोकफलभाग्भवेत् ।
न च व्याधिभयं तस्य न दारिद्र्यं न बन्धनम् ॥
[3]वैष्णवोऽथ शिवे भक्तो भवेज्जन्मनि जन्मनि ।
[4]अपि कल्पसहस्राणां शतमष्टोत्तरं भवेत् ॥
तावत्स्वर्गे वसेद्ब्रह्मन् भूपतिश्च पुनर्भवेत् ।
[5]इमान्याचरतो ब्रह्मन्नखण्डव्रतमाचरेत् ॥
यथाकथंचित्कमलैर्द्वादश्यो द्वादशापि वा ।
कर्तव्याः शक्तितो देया विप्रेभ्यश्चापि दक्षिणा ॥

1 इत्यभिधानात् । अत एव लवणाचलोऽपि—ना.
2 स लोक०—ना.
3 वैष्णवो वाथ शैवो वा—मु. म. पु.
4 यावद्युगसहस्राणां—मु. म. पु.
5 म. पु., अ. १००, श्लो. ३५-३६.

वित्तशाठ्यं न कुर्वीत मत्स्यस्तुष्यति केशवः ।

[1]इति विभूतिद्वादशीव्रतम् ॥

## [अथ मदनद्वादशीव्रतम्]

[2]चैत्रे मासि सिते पक्षे द्वादश्यां नियमस्थितः ।
[3]स्थापयेदव्रणं कुम्भं सिततण्डुलसंयुतम् ॥
नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् ।
सितवस्त्रयुगच्छन्नं सितचन्दनचर्चितम् ॥
नानाभक्ष्यसमोपेतं सहिरण्यं च शक्तितः ।
ताम्रपात्रं गुडोपेतं तस्योपरि निवेदयेत् ॥
[4]तस्मादुपरि कामं तु कदलीदलसंयुतम् ।
[5]कुर्याच्छर्करयोपेतां रतिं तस्य समृद्धये ॥
अग्रतोऽन्नं ततो दद्याद्गीतवाद्यं च कारयेत् ।
तदभावे [6]कथां कुर्यात् कामकेशवयोर्न ः ॥
कामनाम्ना हरेरर्चां स्नापयेद्गुडवारिणा ।
शुक्लपुष्पाक्षत[illegible]न्मधुसूदनम् ॥
कामाय पादौ संपूज्य जङ्घे सौभाग्यदाय च ।
[7]ऊरू च माधवायेति कटिं वै मन्मथाय च ॥

1 इति मत्स्यपुराणोक्तं विभूतिद्वादशीव्रतम्—हे.
2 हे. व्र. I., ११९५–११९७.
3 स्थापयेदत्र कुम्भं च सितं धानफलैर्युतम्—ना.
4 Hemādri omits the following three lines.
5 कुर्यात्सर्वरसोपेतां—ना.
6 कथं—ना.
7 ऊरू स्मरायेति पुनः मन्मथायेति वै कटिम्—हे.

[1]सुस्थोदरायेत्युदरमनङ्गायेत्युरो हरेः ।
मुखं पद्ममुखायेति बाहू पञ्चशराय वै ॥
नमः सर्वात्मने [2]मौलिमर्चयेदिति केशवम् ।
ततः प्रभाते तं कुम्भं ब्राह्मणाय निवेदयेत् ॥[3]
ब्राह्मणान् भोजयेद्भक्त्या [4]स्वयं च लवणादृते ।
भुक्त्वा तु दक्षिणां दद्यादिमं मन्त्रमुदीरयेत् ॥
"प्रीयतामत्र भगवान् कामरूपी जनार्दनः ।
हृदये सर्वभूतानां [5]य आनन्दोऽभिधीयते ॥"
अनेन विधिना [6]चापि मासि मासि समाचरेत् ।
उपवासी त्रयोदश्यामर्चयेद्विष्णुमव्ययम् ॥
फलमेकं च संप्राश्य द्वादश्यां भूतले स्वपेत् ।
ततस्त्रयोदशे मासि घृतधेनुसमन्विताम् ॥
[7]काञ्चनीं कामधेनुं च शुक्लां गां च पयस्विनीम् ।
[8]वासोभिश्चापि संपूज्य शक्त्या विभवभूषणैः ॥
शक्त्या गवादिकं दद्यात्प्रीयतामित्युदीरयेत् ।
[9]होमः शुक्लतिलैः कार्यः कामनामानुकीर्तनात् ॥
गव्येन सर्पिषा तद्वत्पायसेन च धर्मवित् ।
विप्रेभ्यो भोजनं दद्याद्वित्तशाठ्यं विवर्जयेत् ॥
इक्षुदण्डानथो दद्यात् पुष्पमालाः स्वशक्तितः ।

1 स्तम्बोदयायेत्युदरं—हे.
2 मौलिं सर्वायेति च—उ.
3 Hemādri adds : एवं प्रजागरं कृत्वा शुक्लमाल्याम्बरो व्रती ।
4 स्वयं भुञ्जीत बन्धुभिः—हे.
5 य आत्मेत्यभिधीयते—हे.
6 सर्वं मासि—हे ; चातुर्मासि—ना.
7 काञ्चनं कामदेवं च—हे.
8 वासोभिर्द्विजदाम्पत्यं पूज्य शक्त्या विभूषणैः—हे.
9 ना Ms. omits the following two lines.

यः कुर्याद्विधिनानेन मदनद्वादशीमिमाम् ॥
सर्वपापविनिर्मुक्तः प्राप्नोति [1]हरिसात्म्यताम् ।
इह लोके वरान् पुत्रान् सौभाग्यं सुखमश्नुते ॥
यः स्मरः संस्मृतो विष्णुरानन्दाख्यो महेश्वरः ।
सुखार्थी [illegible] स्मरेत्तं जगदीश्वरम् ॥

इति मदनद्वादशीव्रतम् ॥

इति द्वादशीव्रतानि

## [अथ त्रयोदशीव्रतम्]

[2]तत्र नरसिंहपुराणे—

गुरुवारे त्रयोदश्यामपराह्णे जलप्लुतः ।
तर्पयित्वा देवपितॄनृषींश्च तिलतण्डुलैः ॥
नरसिंहं समभ्यर्च्य यः करोत्युपवासकम् ।
सर्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥

[3]इति त्रयोदशीव्रतम्[4] ॥

1 हरसाम्यताम्—ना.
2 हे. II., १४.
3 इति नरसिंहपुराणोक्तं नरसिंहत्रयोदशीव्रतम्—हे.
4 Hemādri (Vol. II.) quotes several other Trayodaśīvratams: भविष्यपुराणोक्तमनङ्गत्रयोदशीव्रतम् (पृ. ८); कालोत्तरोक्तमनङ्गव्रतम् (पृ. ८-९); भविष्योत्तरोक्तं यमादर्शनत्रयोदशीव्रतम् (पृ. ९-१४); भविष्योत्तरोक्तदुर्गन्धदौर्भाग्यनाशनत्रयोदशीव्रतम् (पृ. १४-१६); भविष्योत्तरोक्तसर्वमङ्गलात्रयोदशीव्रतम् (पृ. १६-१७); विष्णुधर्मोक्तकामदेवव्रतम् (पृ. १७-१८); विष्णुधर्मोक्तनन्दव्रतम् (पृ. १८-१९); भविष्यत्पुराणोक्तप्रदोषव्रतम् (पृ. १९); वराहपुराणोक्तं त्रयोदशीव्रतम् (पृ. १९-२१); भविष्योत्तरोक्तमदनमहोत्सवः (पृ. २१-२४); सौरपुराणोक्तं सर्वव्रतम्, (पृ. २४); पद्मपुराणोक्तं कामव्रतम् (पृ. २४-२५); भविष्यत्पुराणोक्तं कामत्रयोदशीव्रतम् (पृ. २५).

None of these are found in the Nagpur and Ujjain Manuscripts of Kalpataru.

# अथ चतुर्दशीव्रतानि

## [शिवचतुर्दशीव्रतम्]

[1]तत्र मत्स्यपुराणे

नन्दिकेश्वर उवाच—

शृणुष्वावहितो ब्रह्मन् वक्ष्ये माहेश्वरं व्रतम्।
त्रिषु लोकेषु विख्याता नाम्ना शिवचतुर्दशी॥
मार्गशीर्षे त्रयोदश्यां सितायामेकभोजनः।
प्रार्थयेद्देवदेवेशं त्वामहं शरणं गतः॥

मासश्चात्र शुक्लप्रतिपदादेरमावास्यान्तश्चान्द्रो मासः॥

चतुर्दश्यां निराहारः समभ्यर्च्य च शङ्करम्।
सुवर्णं वृषभं दत्वा भोक्ष्येऽहं च परेऽहनि॥
एवं नियमकृत्स्वप्यात्[2] प्रातरुत्थाय मानवः।
कृतस्नानजपः पश्चादुमया सह शङ्करम्॥
पूजयेत्कमलैः शुक्लैर्गन्धैर्धूपानुलेपनैः।[3]
पादौ नमः शिवायेति शिरः सर्वात्मने नमः॥
ललाटं तु त्रिनेत्राय नेत्राणि हरये नमः।
[4]मुखमिन्दुमुखायेति श्रीकण्ठायेति कन्धरा॥
सद्योजाताय कर्णौ तु वामदेवाय वै भुजौ।
अघोरहृदयायेति हृदयं चाभिपूजयेत्॥
स्तनौ तत्पुरुषायेति तथेशायेति चोदरम्।

1 हे. व्र. II., ५८–६१; मत्स्यपुराणम्, अ. ९५, श्लो. ५–३८.

2 सुप्त्वा for स्वप्यात्—उ, हे.

3 Hemādri comments: उमामहेश्वरं रूपं अवियोगद्वादशीव्रतोक्तं वेदितव्यम्।

4 मुखं नित्यसुखायेति—ना.

[1]उरश्चानन्तधर्माय ज्ञानभूताय वै कटिम् ॥
ऊरू चानन्तवैराग्यसिंहायेति प्रपूजयेत् ।
अनन्तैश्वर्यनाथाय जानुनी चार्चयेद्बुधः ॥
प्रधानाय नमो जङ्घे गुल्फौ व्योमात्मने नमः ।
[2]अप्रमेयाय रूपाय केशान् पृष्ठं च पूजयेत् ॥
नमः पुष्ट्यै नमस्तुष्ट्यै पार्वतीं चाभिपूजयेत् ।
भद्रं तु[3] वृषभं हैममुदकुम्भसमन्वितम् ॥
शुक्लमाल्याम्बरयुतं पञ्चरत्नसमन्वितम् ।
[4]भक्ष्यैर्भोज्यैश्च संयुक्तं ब्राह्मणाय निवेदयेत् ॥
प्रीयतां देवदेवोऽत्र सद्योजातः पिनाकधृक् ।
[5]ततस्तु विप्रानन्नेन तर्पयेद्भक्तितः शुभान् ॥
पृषदाज्यं तु संप्राश्य स्वपेद्भूमावुदङ्मुखः ।
[6]ततः संपूजयेद्विप्रान् भुञ्जीत वाग्यतः शुचिः ॥
तद्वत्कृष्णचतुर्दश्यामेतत्सर्वं समाचरेत् ।
चतुर्दशीषु सर्वासु कुर्यात्पूर्ववदर्चनम् ॥
ये तु मासविशेषाः स्युस्तान्निबोध क्रमादिह ।
मार्गशीर्षादिमासेषु क्रमादेतदुदीरयेत् ॥[7]
शङ्कराय नमस्तुभ्यं नमस्ते करवीरक ।

1 पार्श्वे चानन्तधर्माय—हे.
2 व्योमकेशात्मरूपाय—हे.
3 ततस्तु—हे.
4 भक्ष्यैर्नानाविधैर्युक्तं—उ, हे.
5 ना Ms. reads :
तान् विप्रान् पूजयेद्भक्त्या ततः संपूजयेद्द्विजान् । भुञ्जीत वाग्यतः शुचिः ॥
6 पञ्चदश्यां ततः पूज्य—हे.
7 Hemādri comments : आश्विनान्तेष्वपि ज्ञेयम् ।

[1]त्र्यम्बकाय नमस्तेऽस्तु माहेश्वर ततःपरम् ॥
नमस्तेऽस्तु महादेव स्थाणवे च ततः परम् ।
नमः पशुपते नाथ नमस्ते शंभवे पुनः ॥
नमस्ते परमानन्द नमः सोमार्धधारिणे ।
नमो भीमाय चेत्येवं त्वामहं शरणं गतः ॥
गोमूत्रं गोमयं क्षीरं दधि सर्पिः कुशोदकम् ।
पञ्चगव्यं तथा बिल्वं [2]यव्यं गोश्रृङ्गवारि च ॥
तिलाश्च कृष्णा विधिवत् प्राशनं क्रमशः स्मृतम् ।[3]
मन्दारमालतीभिश्च तथा [4]बर्बरकैरपि ॥
सिन्दुवारैरशोकैश्च मल्लिकाभिः सपाटलैः ।
अर्कपुष्पैः कदम्बैश्च शतपत्रैस्तथोत्पलैः ॥
एकैकेन चतुर्दश्यामर्चयेत् पार्वतीपतिम् ।
पुनश्च कार्तिके मासि संप्राप्ते तर्पयेद्द्विजान् ॥
[5]अन्नैर्नानाविधैर्भक्ष्यैर्वस्त्रमाल्यविभूषणैः ।
कृत्वा नीलवृषोत्सर्गं श्रुत्युक्तविधिना नरः ॥
उमामहेश्वरं चैव[6] वृषभं च गवा सह ।
[7]मुक्ताफलसमायुक्तं [8]सितनेत्रजटान्वितम् ॥
सर्वोपस्करसंयुक्तां शय्यां दद्यात् सकुम्भकाम् ।
ताम्रपात्रोपरि पुनः शालितण्डुलसंयुताम् ॥

1 Hemādri omits two quarter verses by reading : त्र्यम्बकाय नमस्तेऽस्तु स्थाणवे च ततः परम् ।

2 पद्म for यव्यं—हे.

3 Hemadri adds : प्रतिमासं चतुर्दश्यामेकैकप्राशनं स्मृतम्.

4 मधुरकैरपि—हे.

5 अम्लैः for अन्नैः—उ ; अर्कैः—ना.

6 हैमं for चैव—हे.

7 मुक्ताफलाष्टकयुतं—हे.

8 सितमन्त्रजटान्वितम्—ना ; सितनेत्रपटान्वितम्—हे.

स्थाप्य विप्राय शान्ताय वेदव्रतपराय वै ।
ज्येष्ठसामविदे देयं न बकव्रतिने क्वचित् ॥
गुणज्ञे श्रोत्रिये दद्यादाचार्ये [1]तत्त्ववेदिनि ।
[2]अव्यङ्गाय च सौम्याय सदा कल्याणकारिणे ॥
सपत्नीकाय संपूज्य माल्यवस्त्रविभूषणैः ।
गुरौ सति गुरौ देयं तदभावे द्विजातये ॥
न वित्तशाठ्यं कुर्वीत [3]कुर्वन्देवो पतत्यधः ।
अनेन विधिना यस्तु कुर्याच्छिवचतुर्दशीम् ॥
सोऽश्वमेधसहस्रस्य [4]फलमाप्नोति मानवः ।
ब्रह्महत्यादिपापानि अत्र वामुत्र वा कृतम् ।
[5]पतिभिर्भ्रातृभिश्चापि नाशं तत्सर्वमाप्नुयात् ॥
दीर्घायुरारोग्यकुलाभिवृद्धि-
रत्राक्षयामुत्र चतुर्भुजत्वम् ।
[6]गणाधिपत्यादि च कल्पकोटि-
शतं वसित्वा पदमेति शंभोः ॥
न बृहस्पतिरप्यलं तदस्याः
फलमिन्द्रो न पितामहोऽपि वक्तुम् ।
न च सिद्धगणोऽप्यलं न चाहं
यदि जिह्वायुतकोटयोऽपि वक्तुम् ॥
भवत्यमरवल्लभः पठति यः स्मरेद्वा सदा
शृणोत्यपि विमत्सरः सकलपापनिर्मोचिनीम् ।

1 तद्वरे दिने—ना.
2 अव्यङ्गाङ्गाय—हे.
3 दोषात् for देवो—हे.
4 फलं प्राप्नोति—उ.
5 पितृभिर्मातृभिर्वापि—हे.
6 गणाधिपत्यं दिवि—हे.

इमां शिवचतुर्दशीममरकामिनीकोटयः
स्तुवन्ति तमनिन्दितं किमु समाचरेद्यः सदा ॥

[1]या वाथ नारी कुरुतेऽथ भक्त्या
भर्तारमापृच्छ्य गुरुं सुतं वा ।
सापि प्रसादात् परमेश्वरस्य
परं पदं याति पिनाकपाणेः ॥

[2]इति चतुर्दशीव्रतानि ॥

## अथ पौर्णमासीव्रतानि

### [पुत्रकामव्रतम्]

तत्र ब्रह्मपुराणे

[3]पुलस्त्य उवाच—

ततो [4]व्रतान्ते भगवान् पिनाकी
तस्यां गुहायामनुमोद्य पुण्यम् ।
देवैश्च सर्वैरनुगम्यमानो
बभूव कामेन विहारचारी ॥
तस्यां मनुष्यः सुचिरं प्रमत्तो
नभस्यमासस्य तु पौर्णमास्याम् ।

1 यानाथनारी—हे; या वात्र नारी,—उ.
2 इति मत्स्यपुराणोक्तं शिवचतुर्दशीव्रतम्—हे.
3 हे. व्र. II., १७१–७२.
4 रतान्ते—हे.

[1]भार्याद्वितीयः [2]ससहाय एव
पुत्रेष्टिमाद्य स्वगृहेऽपि कृत्वा ॥
गच्छेत्ततः सर्वसमृद्धियुक्तो
होमैश्च जप्यैर्बलिना च रुद्रम्[3] ।
[4]शैलेन्द्रकन्यामथ नन्दिनं च
सद्भावशक्त्याप्यथवार्चयित्वा ॥
[5]संभोज्य विप्रानथ देवपूर्वान्
कृतोपवासाज्जितरोषदोषः ।
ततः सहायानपि भोजयित्वा
भार्यां च पश्चात् स्वयमन्वभुङ्क्ते ॥
[6]तृप्तां च भार्यामथ गोपयित्वा
प्रदक्षिणीकृत्य गुहां स गुह्यम् ।
गृहांस्तु गच्छेत्परिपूर्णकामो
वृषः प्रहृष्टः कृतभोजनश्च ॥
कथाश्च [7]दिव्यास्त्वथ नन्दिनीश्च
भार्यां ततः श्रावयेद्भावयुक्ताम् ।
क्षीरोदनं त्रिदिनं भोजयेच्च
वन्ध्यां च भार्यामथ पुत्रकामाम् ॥
ततो गृहे सर्वसमृद्धिकामैः
संतर्प्य भार्यां प्रयतो विधाय ।

1 भवद्द्वितीयः—उ.
2 समहाय—ना ; सहसा य—हे.
3 च रुद्रम्—हे ; चरुं च—ना, उ.
4 शैलेन्द्रकन्याथ ततोऽपि नन्दी—ना ; शैलेन्द्रकन्यागजवक्त्रनन्दी—हे.
5 संपूज्य—हे.
6 Verse omitted by ना ; Ms. supplied by उ and Hemādri.
7 दिव्याः शिवनन्दिनीश्च—उ,

उमां शिवं नन्दिनमर्चयित्वा
ततो भवेत् पुत्रवती च वन्ध्या ॥
प्रादेशमात्रामथवा शिवस्य
हिरण्मयीं राजतीमायसीं वा ।
त्रिशूलखट्वाङ्गधरां वरेण्यां
त्रिलोचनां जटिलां चारुरूपाम् ॥
कृत्वाकृतिं तामभिपूज्य पश्चात्
प्रताप्य वह्नौ तु निधाय पात्रे ।
प्रस्थेन दुग्धस्य ततोऽभिषेकं
कृत्वा च [1]तत्पाययेत्पुत्रकाम्याम् ॥

[2]इति पुत्रकामव्रतम् ॥

## [पुत्रकाम्यव्रतम्]

[3]ज्येष्ठे मासि सिते पक्षे पौर्णमास्यां यतव्रतः ।
स्थापयेदव्रणं कुम्भं सिततण्डुलपूरितम् ॥
नानाफलयुतं तद्वदिक्षुदण्डसमन्वितम् ।
सितवस्त्रयुगच्छन्नं सितचन्दनचर्चितम् ॥
[4]नानाभक्ष्यसमोपेतं सहिरण्यं च शक्तितः ।
ताम्रपात्रं गुडोपेतं तस्योपरि निवेदयेत् ॥
तस्मादुपरि ब्रह्माणं सौवर्णपद्मोदरे ।
कुर्याच्छर्करयोपेतां सावित्रीं तस्य वामतः ॥

1 तत्प्राशयेत्—हे.
2 इति पद्मपुराणोक्तं पुत्रव्रतम्—हे.
3 हे. व्र. II., १७३–१७४.
4 ना Ms. reads: नानाभक्ष्यसमोपेतं सावित्रीं तस्य वामतः for the following four lines.

गन्धधूपं ततो नृत्यगीतवाद्यं च कारयेत् ।
तदभावे कथां कुर्याद्यथा प्राह पितामहः ॥
ब्रह्मनाम्नीं च प्रतिमां कृत्वा गुडमयीं शुभाम् ।
शुक्लपुष्पाक्षततिलैरर्चयेत्पद्मसंभवम् ॥
ब्रह्मणे पादौ संपूज्य [1]जङ्घे सौभाग्यदाय च ।
[2]विधये चोरुयुग्मं च मन्मथायेति वै कटिम् ॥
ब्रह्मोदरायेत्युदरमनङ्गायेत्युरो हरेः[3] ।
मुखं पद्ममुखायेति बाहू वै वेदपाणये ॥
नमः सर्वात्मने मौलिमर्चयेच्चापि [4]पङ्कजम् ।
ततः प्रभाते तं कुम्भं ब्राह्मणाय निवेदयेत् ॥
ब्राह्मणान् भोजयेद्भक्त्या स्वयं तु लवणं विना ।
शक्त्या तु दक्षिणां दद्यादिमं [5]मन्त्रमुदीरयेत् ॥
"प्रीयतामत्र भगवान् सर्वलोकपितामहः ।
हृदये सर्वलोकानां यस्त्वानन्दोऽभिधीयते ॥"
अनेन विधिना सर्वं मासि मासि समाचरेत् ।
उपवासी पौर्णमास्यामव्ययं ब्रह्म पूजयेत् ॥
फलमेकं तु [6]संप्राश्य शर्वर्यां भूतले स्वपेत् ।
तत्र त्रयोदशे मासि घृतधेनुसमन्विताम् ॥
शय्यां [7]दद्याद्विधिं कृत्वा सर्वोपस्करसंयुताम् ।
ब्रह्माणं काञ्चनं कृत्वा सावित्रीं राजतीं तथा ॥
पद्मासनः[8] सृष्टिकर्ता सावित्री च फलस्य तु ।

1 ज्येष्ठ for जङ्घे—ना.
2 दिरिश्चायोरुयुग्मं च—उ, हे.
3 पुरोहितः for उरो हरेः—ना.
4 कुम्भकम्—ना ; कंजलम्—उ.
5 मन्त्रमुदाहरेत्—हे.
6 संप्राप्य—ना.
7 दद्याद्विरिञ्चाय—हे.
8 षाण्मासिकः—हे.

...पक्षांकं पूज्य शक्त्या विभूषणैः ॥
शक्त्या गवाह्निकं दद्यात् प्रीयतामित्युदीरयेत् ।
होमः शुक्लतिलैः कार्यो ब्रह्मनामानि कीर्तयेत् ॥
[1]गव्येन सर्पिषा तद्वत्पायसेन च कर्मवित् ।
विप्रेभ्यो भोजनं दत्वा वित्तशाठ्यविवर्जितः ॥
इक्षुदण्डांस्ततो दद्यात् पुष्पमालाः स्वशक्तितः ।
यो ब्रह्मा स स्मृतो [2]विष्णुरानन्दात्मा महेश्वरः ॥
सुखार्थी कामरूपेण [3]स्मरेद्देवं पितामहम् ।
यः कुर्याच्च विधानेन पौर्णमासीं स्त्रियोऽपि वा ॥
...विनिर्मुक्तः प्राप्नोति [4]ब्रह्म शाश्वतम् ।
इह लोके वरान् पुत्रान् सौभाग्यं [5]ध्रुवमश्नुते ॥

इति पुत्रकाम्यव्रतम्[6] ॥

## पौर्णमासीव्रतानि

[चन्द्ररोहिणीशयनव्रतम्]

[7]तत्र मत्स्यपुराणे

नारद उवाच—

दीर्घायुरारोग्यकुलाभिवृद्धि-
युक्तः [8]पुमान् रूपकुलान्वितः स्यात् ।

1 ना Ms. omits the following two lines.
2 विष्णुरर्चनः स महेश्वरः—ना.
3 स्मरन् देवं—हे.
4 ब्रह्मसाम्यताम्—उ.
5 ध्रुवमस्तु मे—ना.
6 इति श्रीपद्मपुराणोक्तं पुत्रकामव्रतम्—हे.
7 'पद्मपुराणे भीष्म उवाच'—इति हेमाद्रिः; हे. व्र. II., १७५-१७९; मत्स्यपु. अ. ५७, श्लो. १-२८.
8 युक्तः पुत्रपौत्रकुलान्वितः स्यात्—ना; युक्तः पुमान् भूपकुलायुतः स्यात्—मु. म. पु.

मुहुर्मु.:जन्मनि येन सम्य-
ग्व्रतं समाचक्ष्व तदिन्दुमौले ॥

[1]भगवा.-वाच—

त्वया पृष्टमिदं सम्यक् पुत्राद्यक्षयकारकम् ।
रहस्यं तव वक्ष्यामि यत्पुराणविदो विदुः ॥
रो.िणीचन्द्रशयनं नाम व्रतमिहोत्तमम् ।
तास्मन्ना ।यणस्यार्च[illegible]दिन्दुनामभिः ॥
यदा सोमदिने [2]शुक्ला भवेत्पञ्चदशी क्वचित् ।
अथवा ब्रह्मनक्षत्रं पौर्णमास्यां प्रजायते ॥
तदा स्नानं नरः कुर्यात् पञ्चगव्येन [3]सर्षपैः ।

[4]'ब्रह्मनक्षत्रम्' रोहिणी ॥

आप्यायस्वेति च जपेद्विद्वानष्टशतं पुनः ॥
शूद्रोऽपि परया भक्त्या पाषण्डालापवर्जितः ।
सोमाय [5]वरदायाथ विष्णवे च नमो नमः ॥
कृतजप्यश्च भवनमागत्य मधुसूदनम् ।
पूजयेत्फल.:ष्पैस्तु सोमनाम नि कीतये. ॥
सोमाय ·ान्ताय नमोऽस्तु [6]पादा-
वनन्तधाम्नेऽपि च जानुजङ्घे ।
ऊरुद्वयं चापि जलोदराय
सं.:जयेन्मद्रमनङ्गबाहवे ॥

1 पुलस्त्य उवाच—हे.
2 शुक्ला—हे.
3 सद्यवैः—ना.
4 Comment reproduced by Hemadri.
5 चन्द्रायाथ—ना.
6 पादावानन्ददात्रेऽपि च पूज्य जङ्घे—हे.

नमो नमः कामसुखप्रदाय
कटिः शशाङ्कस्य सदार्चनीया ।
तथोदरं चाप्यमृतोदराय
[1]नाभिस्तु पूज्या च त्रिलोचनाय ॥
नमोऽस्तु चन्द्राय मुखं च पूज्यं
दन्ता द्विजानामधिपाय पूज्याः ।
आस्यं नमश्चन्द्रमसेऽभिपूज्यं
पूज्यावथौष्ठौ [2]कुमुदप्रियाय ॥
[3]नासा च नाथाय वनौषधीना-
मानन्दभूताय [4]पुनर्भ्रुवौ च ।
नेत्रद्वयं पद्मनिभं तथेन्दो-
रिन्दीवरश्यामकराय [5]शौरेः ॥
नमः समस्तामरवन्दिताय
कर्णद्वयं दैत्यनिषूदनाय ।
ललाटमिन्दोरुदधिप्रियायं
केशाः सुषुम्नाधिपतेऽभिपूज्याः ॥
शिरः शशाङ्काय नमो मुरारे-
[6]र्विश्वंभरायेति नमः किरीटं ।
[7]पद्मप्रिये रोहिणि नाम लक्ष्मि
सौभाग्यसौख्यामृतचारुकाये ॥

1 नाभिः शशाङ्काय नमोऽभिपूज्या—मु. म. पु.
2 कुसुमप्रियाय—ना.
3 निशा—ना.
4 पुनर्भभौ च—ना ; पुनर्भवांश्च—हे.
5 सौरेः—ना.
6 विश्वेश्वरायेति—हे, मु. म. पु.
7 मखप्रिये—ना ; भावप्रिये—उ.

देवीं च संपूज्य सुगन्धिपुष्पै-
नैवेद्यधूपादिभिरिन्दुपत्नीम् ।
सुप्त्वाथ भूमौ पुनरुत्थितेन
स्नात्वा च विप्राय [1]हविष्ययुक्तः ॥
देयः प्रभाते सहिरण्यवारि-
कुम्भो नमः पापविनाशनाय ।
संप्राश्य गोमूत्रममांसमन्न-
मक्षारवर्ज्यानथ विंशतिं च ॥
ग्रासान् पयःसर्पियुतानुपोष्य
भुक्त्वेतिहासं श्रृणुयान्मुहूर्तम् ।
कदम्बनीलोत्पलकेतकानि
जाती सरोजं शतपत्रिका च ॥
अम्लानकुब्जान्यथ सिन्धुवारं
[2]पुष्पं तथा नारद मल्लिकायाः ।
शुक्लं च विष्णोः करवीरपुष्पं
[3]सचम्पकं च क्रमशः प्रदेयम् ॥
श्रावणादिषु मासेषु क्रमादेतानि सर्वदा ।
तस्मिन् मासे व्रतादिः स्यात्स्वपुष्पैरर्चयेच्छिवम्[4] ॥
एवं संवत्सरं यावदुपोष्य विधिवन्नरः ।
व्रतान्ते शयनं दद्याद्दर्पणोपस्करान्वितम् ॥
रोहिणीचन्द्रमिथुनं कारयित्वा च काञ्चनम् ।
चन्द्रः षडङ्गुलः कार्यो रोहिणी चतुरङ्गुला ॥

1 हरस्य युक्तः—ना.
2 पुष्पं पुनर्भारसमल्लिकायाः—हे.
3 श्रीचम्पकं चन्द्रमसः प्रदेयम्—हे, मु. म. पु.
4 हरिम् for शिवम्—हे, मु. म. पु.

मुक्ताफलाष्टकयुतां[1] सितवस्त्रजटावृतां ताम् ।
क्षीरकुम्भोपरि पुनः कांस्यपात्रसमावृताम् ॥
दद्यान्मन्त्रेण पूर्वाह्णे शाकेक्षुफलसंयुताम् ।
श्वेतामथ सुवर्णास्यां खुरै रौप्यैः समन्विताम् ॥
सवस्त्रभाजनां धेनुं तथा शङ्खोपशोभिताम् ।
भूषणैर्द्विजदाम्पत्यमलङ्कृत्य गुणान्वितम् ॥
चन्द्रोऽयं द्विजरूपेण सभार्य इति कल्पयेत् ।
यथा हि रोहिणी कृष्ण शयनं ह्युपगच्छति ॥
सोमरूपस्य ते [2]तद्वन्ममाभेदोऽस्तु भूतिभिः ।
यथा त्वमेव सर्वेषां परमानन्दमुक्तिदः ॥
भक्तिर्मुक्तिस्तथा भुक्तिस्त्वयि चन्द्रास्तु मे सदा ।
[3]इति संसारभीतस्य मुक्तिकामस्य चानघ ॥
रूपारोग्यायुषामेतद्विधायकमनुत्तमम् ।
इदमेव पितॄणां च सर्वथा [4]त्ववलम्बकम् ॥
त्रैलोक्याधिपतिर्भूत्वा सप्तकल्पशतत्रयम् ।
चन्द्रलोकमवाप्नोति [5]विष्णुर्भूत्वा विमुच्यते ॥
नारी वा रोहिणीचन्द्रशयनं वा समाचरेत् ।
सापि तत्फलमाप्नोति पुनरावृत्तिदुर्लभम् ॥[6]

[7]इति चन्द्ररोहिणीशयनव्रतम् ॥

1 शतां for युतां—ना.

2 तद्वन्ममाभेदोऽस्तु भूतिभिः—हे, मु. म. पु ; तद्वन्मा स भेदोऽस्तु भूतिभिः—ना.

3 Line omitted by ना and उ Mss; supplied by Hemādri and printed Matsyapurāṇa.

4 वल्लभं मुने—हे, मु. म. पु.

5 विद्युद्भूत्वा विमुच्यते—मु. म. पु.

6 Hemādri and printed Matsyapurāṇa add :—
इति पठति शृणोति वा य इत्थं मधुमथनार्चनमिन्दुकीर्तनेन ।
मतिमपि च ददाति सोऽपि शौरेर्भवनगतः परिपूज्यतेऽमरौघैः ॥

7 इति रोहिणीचन्द्रशयनं नाम व्रतम्—उ; इति पद्मपुराणोक्तं चन्द्ररोहिणीशयनम्—हे.

## [सोमव्रतम्]

भविष्यपुराणे -

सुमन्तुरुवाच—

[1]सोमव्रतं तथा चास्य शङ्करस्य च प्रीतये[2]।
ताम्रपात्रं पयःपूर्णं कृत्वा [3]तत्स्थं च शङ्करम् ॥
प्रच्छाद्योपरि वस्त्रेण गन्धपुष्पार्चनं महत्।
शिवभक्ते द्विजे दद्याद्भोजयित्वा विधानतः ॥
प्राच्यां समुद्गते सोमे प्रतीच्यां च गते रवौ।
पौर्णमास्यां च वैशाख्यां [4]गृह्य पात्रं शिवाग्रतः ॥
प्रीयतां मे महादेवः सोममूर्तिर्जगत्पतिः।
तस्मै विप्राय [5]तत्पात्रमर्पयेद्भक्तितः सदा ॥
एतत्सोमव्रतं नाम कृत्वा सोमान्तिकं व्रजेत्।
रुद्रलोकात्परिभ्रष्टो भवेज्जातिस्मरो नरः ॥
पूर्वाभ्यासेन तेनैव पुनः शिवपुरं व्रजेत्।

इति सोमव्रतम्[6] ॥

## [ईशानव्रतम्]

कालिकापुराणे

अनिरुद्ध उवाच—

[7]अथोपोष्य चतुर्दश्यां पौर्णमास्यां गुरोर्दिने।

1 हे. व्र. II., १७४-१७५.
2 सोमव्रतं तथाप्यन्यच्छङ्करप्रीतये शृणु—हे.
3 तस्यां—उ.
4 गृह्यपात्रं शिवाय तु—हे.
5 तत्पात्रमर्चयेत्—ना, हे.
6 इति भविष्यत्पुराणोक्तं सोमव्रतम्—हे.
7 हे व्र. II., १७९-१८०,

पूजयेद्विधिनानेन लिङ्गं सर्वं निबोध मे ॥
ब्राह्मणान्[1] पश्चिमे भागे वामे लिङ्गस्य वै हरिम् ।
[2]खखोल्कं दक्षिणे रौद्रमीश्वरं प्रागिदशि स्थितम् ॥
ईशानं मध्यमे देशे [3]पूर्वाह्ले चैव पूजयेत् ।
विलिप्यागरुचन्द्रेण[4] कुसुमैश्च सुगन्धिभिः ॥
गुग्गुलं चाज्यसंयुक्तमगरुं वासितं शुभम् ।
[5]दग्ध्वा नीराजनं कुर्याद् [6]दत्वा वै युग्मपञ्चकम् ॥[7]
नैवेद्यं च बलिं चैव पूर्ववत् स्वगृहं व्रजेत् ।
पञ्चगव्यं ततः प्राश्य आचार्यं ब्राह्मणांस्तथा ॥
व्रतिनो मिथुनान्येव भोजयेच्च स्वशक्तितः ।
हेमवस्त्रादिकं चैव यत्नात्कृत्वाथ कल्पयेत् ॥
ततो देवः प्रपूज्यो वै [8]नैवेद्यं तु निवेद्य च ।
नत्वाग्निं पूजयित्वा च पञ्चवक्त्रं शिवं स्मरेत् ॥
प्राप्तेऽब्दे पञ्चमे गावः पञ्च पञ्च नियोजयेत् ।
तेषामुद्दिश्य तेष्वेव न्यूनं वापि ततोऽधिकम् ॥[9]
निखिलं प्राग्विशेषं च कर्तव्यं तत्पदे [10]शुचि ।

1 ब्राह्मणः—हे.

2 Hemādri comments : 'खखोल्कः' सूर्यः

3 सर्वाह्ले येन—ना.

4 Hemādri comments : 'चन्द्रः' कर्पूरम् ।

5 दत्वा—ना, हे.

6 कृत्वा वै पञ्चयुग्मकम्—ना.

7 Hemādri comments : 'युग्मं' गोमिथुनम् ।

8 नैवेद्यान्तं—हे.

9 Hemādri comments : 'पञ्चमे' 'पञ्च पञ्च' इति वचनाद्द्वितीये द्वे द्वे, तृतीये तिस्रस्तिस्रः, चतुर्थे चतस्रश्चतस्रः, पञ्चमे पञ्च पञ्च, प्रथमादेकैकैव, 'तेषां' ब्राह्मणादीनां, पञ्चानां चन्द्ररूपाणां पञ्चदेवतानां पञ्चवर्गानुद्दिश्य न्यूनाधिकं तेषु तेषु नियोजयेत् ।

10 नृभिः—हे.

सुखकीर्तिश्रियोऽन्नं[1] च इहैव विभवाय च ॥
रहस्यमेतद्यत्प्रोक्तं न देयं यस्य कस्यचित् ।
[2]इति ईशानव्रतम् ॥

## अथ नानातिथिव्रतानि

### [तिथियुगलव्रतम्]

[3]तत्रात्रिः—

द्वे त्वाष्टम्यौ च मासस्य चतुर्दश्यौ तु द्वे तथा ।
अमावास्यापौर्णमास्यौ सप्तमी [4]द्वादशीव्रतम् ॥
संवत्सरमभुञ्जानः संततं च जितेन्द्रियः ।
ब्रह्मचर्यफलं यच्च यत्फलं [5]समुपार्जितम् ॥
[6]ऋतुगामिफलं यच्च तदवाप्नोत्यभोजनात् ।[7]
इति तिथियुगलव्रतम् ॥

### [शिवोपासनव्रतम्]

[8]भविष्यपुराणे—

चतुर्दश्यां तथाष्टम्यां पक्षयोः शुक्लकृष्णयोः ।
योऽब्दमेकं न भुञ्जीत शिवार्चनरतः शुचिः ॥

1 अर्थं for अन्नं—हे.

2 इति कालिकापुराणोक्तमीशानव्रतम्—हे.

3 हे. व्र. II., ३९७.

4 द्वादशीद्वयम्—हे.

5 सत्रयाजिनाम्—हे.

6 ऋतुगामिफलं यच्च—हे.

7 Hemādri adds : एषु तिथिस्वामिनो देवता: । इति यमस्मृत्युक्तं तिथियुगलव्रतपञ्चकम् ।

8 हे. व्र. II., ३९७.

यत्पुण्यमक्षयं प्रोक्तं सततं सत्रयाजिनाम् ।
तत्पुण्यं सफलं तस्य शिवलोकं च गच्छति ॥

[1]इति शिवोपासनव्रतम् ॥

## [शिवनक्तव्रतम्]

कृष्णाष्टमीं तु नक्तेन तथा कृष्णचतुर्दशीम् ।
इह भोगानवाप्नोति परत्र शिवमृच्छति ॥[2]

तथा—

योऽब्दमेकं प्रकुर्वीत नक्तं पर्वणि पर्वणि ।
ब्रह्मचारी जितक्रोधः शिवार्चनरतः सदा ॥
संवत्सरान्ते विप्रेन्द्र शिवभक्तान् समाहितान् ।
भोजयित्वा ततो ब्रूयात् प्रीयतां भगवान् प्रभुः ॥
एवं विधिसमायुक्तः शिवलोकं च गच्छति ।
न च मानुषतां लोके स्वभुवां प्राप्यते नरः ॥

स्कन्दपुराण।

ईश्वर उवाच—

नवमी चाष्टमी चैव पौर्णमासी त्रयोदशी ।
यो भुङ्क्ते दिवि चैतेषु स्वपर्वसु नरः समाम् ॥
गणाधिपत्यं लभते अनिशं यद्दिने दिने ।
पृथिवीभाजने भुङ्क्ते स त्रिरात्रफलं लभेत् ॥

अहोरात्रे विन्दति । 'पृथिवीभाजने' भूमावन्नं निधा-
येत्यर्थः ॥

1 इति भविष्यत्पुराणोक्तं शैवोपासव्रतम्—हे.
2 Hemādri adds: इति भविष्यत्पुराणोक्तं शिवनक्तव्रतम् ।

संवत्सरं तु यो भुङ्क्ते नित्यमेव ह्यतन्द्रितः ।
निवेद्य पितृदेवेभ्यः पृथिव्यामेव वा भवेत् ॥

'यो भुङ्क्ते' पृथिव्यामेवेत्यर्थः ॥

[इति शिवनक्तव्रतम्]

## [अर्कव्रतम्]

तथा भविष्यपुराणे

आदित्य उवाच—

[1]सप्तम्यां च तथाष्टम्यां पक्षयोरुभयोरपि ।
योऽब्दमेकं नक्तभोजी नियतात्मा जितेन्द्रियः ॥
यत्पुण्यं परमं प्रोक्तं सततं सत्रयाजिनाम् ।
सत्यवादिषु यत्पुण्यं यत्पुण्यमृतुगामिनाम् ॥
[2]तत्फलं खलु प्राप्यासौ मम लोकमुपैति सः ।[3]
पृथिवीं भाजनं कृत्वा यो भुङ्क्ते क्षयसंधिषु ॥
अहोरात्रेण चैकेन त्रिरात्रफलमश्नुते ।

[इति अर्कव्रतम्]

## [सुखव्रतम्]

[4]कृष्णषष्ठीं तु यो भुङ्क्ते यस्तु कृष्णां च सप्तमीम् ।
इहैव सुखमाप्नोति परत्र च शुभां गतिम् ॥

[5]इति सुखव्रतम् ॥

1 हे. व्र. II., ५०९.
2 तत्फलं सकलं प्राप्य—हे.
3 इति भविष्यत्पुराणोक्तमर्कव्रतम्—हे.
4 हे. व्र. II., ५०९.
5 इति भविष्यत्पुराणोक्तं सुखव्रतम्—हे.

## [चण्डिकाव्रतम्]

[1]अष्टम्यां च नवम्यां च पक्षयोरुभयोरपि ।
योऽब्दमेकं न भुञ्जीत चण्डिकाराधने रतः ॥
स याति परमं स्थानं यत्र सा चण्डिका स्थिता ।

[2]इति चण्डिकाव्रतम् ॥

## [संभोगव्रतम्]

[3]द्वे पञ्चम्यौ हि मासस्य द्वौ च प्रतिपदौ नरः ।
सोपवासः सुगन्धाढ्यः [4]शयीत प्रियया सह ॥
[5]खगनिश्चलचित्तस्तु रतिप्रीतिविवर्जितः ।
समस्तस्मृतिशीलश्च तस्य पुण्यफलं शृणु ॥
दिव्यं वर्षसहस्रं तु दिव्यं वर्षशतं तथा ।
[6]तपस्तप्तं भवेत्तेन महदेव न संशयः ॥

[7]इति संभोगव्रतम् ॥

## [सूर्यव्रतम्]

तथा—

मार्तण्डप्रीतये यस्तु श्राद्धं कुर्याद्विधानतः ।

1 हे. व्र. II., ५१०.

2 इति भविष्योत्तरोक्तं चण्डिकाव्रतम्—हे.

3 हे. व्र. II., ३९४.

4 प्रयाति—ना.

5 खगति: कलवित्तस्तु—ना; Hemādri comments: "खगनिश्चलचित्त:" सूर्यध्यानपरः ।

6 ततस्तु भावयत्येनं महादेवं न संशयः—हे.

7 इति भविष्यत्पुराणोक्तं संभोगव्रतम्—हे.

सङ्क्रातावयने धीर सूर्यलोके महीयते ॥
कृतोपवासः षष्ठ्यां तु सप्तम्यां यस्तु मानवः ।
करोति विधिवद्भक्त्या भास्करः प्रीयतामिति ॥
स सर्वरोगनिर्मुक्तः सूर्यलोके महीयते ।

इति सूर्यव्रतम् ॥

## [यमव्रतम्]

[1]महाभारते—

यजिष्णुः पञ्चमीं षष्ठीं यमान्[2] यो भोजयेद्द्विजान् ।
अष्टमीमथ कौन्तेय शुक्लपक्षे चतुर्दशीम् ॥
उपोष्य व्याधिरहितो रूपवानभिजायते ।

[3]इति यमव्रतम् ॥

## [हरिव्रतम्]

नरसिंहपुराणे—

[4]पौर्णमास्याममावास्यामेकभक्तं समाचरेत् ।
तत्रैकभक्तं कुर्वाणः [5]पुण्यां गतिमवाप्नुयात् ॥
[6]चतुर्थ्यां च चतुर्दश्यां सप्तम्यां नक्तमाचरेत् ।
अष्टम्यां च चतुर्दश्यां सप्तम्यां नक्तभोजनम् ॥
अष्टम्यां च त्रयोदश्यां संप्राप्नोत्यभिवाञ्छितम् ।

1 हे. व्र. II., ३७७.
2 मम यो—ना ; समा यो—उ.
3 इति महाभारतोक्तं यमव्रतम्—हे.
4 हे. व्र. II., ३७५.
5 नरकं नोपसर्पति—हे.
6 Hemādri omits the following three lines but adds eleven lines.

कालिकापुराणे—

रौक्मरूपान्वितं पात्रं दधिपूर्णं च राजितम् ।
पात्रं दधिपयःपूर्णं प्रदद्यान्मौक्तिकान्वितम् ॥
संयोज्य वस्त्रयुग्मेन विष्णोरग्रे निवेशयेत् ।
ततः पुण्याहवाक्येन जपशब्दादिमङ्गलैः ॥
हरिं चैवार्चयेद्यो हि स्नाप्य सौवर्णपङ्कजैः ।
ततस्तु पात्रमादाय वाद्यब्रह्मस्वनैः स्वयम् ॥
कुर्यात्प्रदक्षिणं तस्मै विष्णवे प्रभविष्णवे ।
ततश्चामन्त्र्य विधिवत् पूजयेत्तु विशेषतः ॥
एवं विप्रं तु संभोज्य दक्षिणाभिश्च दक्षयेत् ।
व्रतिनश्चान्नदानेन वस्त्राद्येन च तर्पयेत् ॥
ये तु वित्तार्थकृपणा तांस्तु शक्त्याथ नन्दयेत् ।

इति हरिव्रतम् ॥

## [पात्रव्रतम्]

[1]उपोष्यैकादशीं शुक्लां माघमासे तु पूर्णिमाम् ।
[2]कुर्याद्विधिमिमं सम्यक् तदा तस्य व्रजेत्पदम् ॥
[3]तद्धि रूपप्रदं चैतद्व्रतं सौभाग्यदायकम् ।
पुत्रदं सुखदं चैव विधिना चरितं त्विदम् ॥
व्रतस्यास्य तु वक्तारं समयुक्तं गुणान्वितम् ।
पूजयेद्भूमिकामोऽथ पादुकाद्यैः शुभान्वितः ॥

1 हे. व्र. II., ३८१–३८२.

2 कुर्याद्विनियमं—ना.

3 बुद्धिरूपा यदा चैव विधिना चरितं त्विदम् for the following two lines—ना.

रौक्ममाज्ययुतं चाथ पात्रं नीलां च गामपि ।
अभावे तत्तदा हेम्नः कर्षार्धेन तु राजतम् ॥
[1]वस्त्रयुग्मं च नक्तं च सूक्ष्मं पुष्पकचित्रितम् ।
[2]आश्रित्य तत्र तत्पात्रं शुचौ देशे निवेशयेत् ॥
ततो जागरणं कुर्याद्गीतवाद्यादिमङ्गलैः ।
प्रभाते तु नयेत्पात्रं हरेरायतनं महत् ॥
स्नाप्य क्षीरादिभिर्देवं विष्णुं संपूज्य वै स्वयम् ।
निवेदयेत्तु तत्पात्रं प्रीयतामित्युदीरयेत् ॥
ततो नानाविधैर्भक्ष्यैः [3]सुगन्धैर्मोदकेन च ।
दधिखण्डाज्ययुक्ताढ्यं नैवेद्यं च बलिं हरेत् ॥
ततो गत्वा गृहं गच्छेदाचार्यं [4]प्रणमेत्पुनः ।
प्रणम्य भोजयेद्भक्त्या व्रतिनश्च द्विजैः सह ॥
कल्पयेद्भोजनं श्रेष्ठं सर्वेष्वेव तपस्विषु ।
[5]दीनानां कृपणानां च सर्वेषामनिवारितम् ॥
आचार्यं हेमवस्त्राद्यैर्दक्षयेद्विधिवत्तदा ।
यथाशक्त्या परांश्चैव दीर्घमायुर्जिजीविषुः ॥
एतत्पात्रव्रतं ज्ञेयं गुह्यं चाप्यप्रकाशितम् ।
अनेनापि व्रतेनैव सम्यक्प्राप्य शुभं पदम् ॥
मोदते सुचिरं कालमायुष्मान् बलवानिह ।

[6]इति पात्रव्रतम् ॥

1 वस्त्रयुग्मं नवं सूक्ष्मं पुष्पप्रकरचित्रितम्—हे.
2 आश्रियेत तदा पात्रं प्रीयतामित्युदीरयेत् for the following five lines—ना.
3 सुगन्धेनोदकेन च—हे.
4 प्रीणयेत्पुनः—हे.
5 दीनान्धकृपणानां च—हे.
6 इति नरसिंहपुराणोक्तं पात्रव्रतम्—हे.

## [हरिक्रीडायनव्रतम्]

[1]अनिलाद उवाच—

[2]नृसिंहमथवा रौक्मं कृत्वा देवं चतुर्भुजम् ।
ताम्रपात्रे प्रतिष्ठाप्य बहुदंष्ट्रं प्रकल्पयेत् ॥
बाहुभ्यां पद्मरागौ तु नखानां विद्रुमांस्तथा ।
पुष्परागैः स्तनोद्देशे कर्णयोर्नीलिकावुभौ ॥
राजावर्तेक्षणं कृत्वा नीलवैडूर्यमस्तकम् ।
कृत्वा रूपमिदं रम्यं तत्पात्रे मधुना युते ॥
पूरयेद्वारिमिश्रेण पूरितं तु [3]पुनर्ददेत् ।[4]
वस्त्रयुग्मेन वा च्छन्नमासने विनिवेशयेत्[5] ॥
गन्धपुष्पैस्तथा धूपैर्जागरं च प्रकल्पयेत्[6] ।
[7]कृत्वा समस्तमेतत्तु हरये पूर्ववद्ददेत् ॥
यत्किञ्चित् प्राग्विनिर्दिष्टं कुर्यात्सर्वं न हापयेत् ।
कार्तिक्यां वाथ वैशाख्यामाश्रित्य द्वादशीमथ ॥
कृत्वा निवेदयेत्सम्यक् ततस्तत्पदमश्नुते ।[8]
अरण्ये वाथ सङ्ग्रामे दस्युसङ्घसमाकुले ॥

1 हे. व्र. II., ३७६–३७७.

2 नरसिंहमथो—हे.

3 पुनर्दहेत्—ना.

4 Hemādri comments : "इदं रूपं तत्पाने मधुयुक्तेन कृत्वा संस्थाप्य वारिमिश्रेण मधुना पात्रं पूरयेत् । पुनरन्यत्पात्रं मधुवारिपूर्णं तदुपरि दद्यात्" ।

5 विनिवेदयेत्—ना.

6 पूजनं चास्य कल्पयेत्—हे.

7 Hemādri reads for the following two lines :
नैवेद्यं कल्पयेद्भव्यं भक्ष्यैर्नानाविधैर्बुधः ।
वितानोपरि संयुक्तं पुष्पदामभिरर्चयेत् ॥

8 Hemādri comments : द्वादशीमाश्रित्य तदादिदिनचतुष्टयं हस्तिक्रीडा यतस्तमुत्सवं कृत्वा कार्तिक्यां वैशाख्यां वा दानं कर्तव्यम्—हे.

न भयं जायते तस्य सकृद्यस्त्विदमाचरेत् ।
[1]परिहार्यापदो घोरा धनमायुः प्रयच्छति ॥
संततिं चैव रूपत्वं सौभाग्यं च [2]मनोरथान् ।
एतत्ते कथितं सम्यक् हरेः क्रीडायनं महत् ॥
तत्स्थानप्रापकं चैव [3]धर्माः संक्षेपतः क्रियाः ।
[4]श्रुत्वा ध्यायात्पदं पुण्यं सर्वपापैः प्रमुच्यते ॥
धनमायुर्विवर्धेत श्रावणस्य न संशयः[5] ।
श्रावके दक्षिणां दद्याच्छक्त्या युग्मं [6]विभूतये ॥
श्रोतव्यं तेन वर्षासु पुराणं वापरेऽहनि ।

[7]इति हरिक्रीडायनव्रतम् ॥

## [अथ महाव्रतम्]

[8]अनिलादोवाच—

महाव्रतमहं वक्ष्ये येनारोहन्ति तत्पदम् ।
सुरासुरमुनीनां च दुर्लभं विधिना शृणु ॥
पर्वण्याश्वयुजस्यान्ते पायसं च घृतप्लुतम् ।
नक्तं भुञ्जीत शुद्धात्मा [9]ओदनं चैक्षवान्वितम् ॥[10]

1 न विशन्त्यापदो घोराः—हे.
2 मनोरमम्—हे.
3 धर्म्याः—हे.
4 श्रुत्वा याति पदं पुण्यं—हे; भुक्त्वा for श्रुत्वा—ना.
5 श्रावणस्य विशेषतः—उ, हे.
6 विभूषयेत्—हे.
7 इति नरसिंहपुराणोक्तं हरिक्रीडायनव्रतम्—हे.
8 हे. व्र. II., ३७७-३८१.
9 चन्दनं—हे.
10 Hemādri comments : "आश्वयुजस्यान्ते" कार्तिके "पर्वणि" अमावास्यायां कार्तिक्यन्त इत्यर्थः । "ऐक्षवः" इक्षुरसः—हे

आचम्याथ शुचिर्भूत्वा [1]कल्पयेद्दन्तधावनम् ।
भुक्त्वा चैतन्महादेवं नत्वा भक्तियुतो व्रती ॥
"अहं देव व्रतमिदं [2]कर्तुमिच्छामि शाश्वतम् ।
तवाज्ञया महादेव तत्र निर्वहणं कुरु ॥"
[3]उक्त्वैवं नियमं गृह्णन् वर्षाण्येव तु षोडश ।
तिथेः प्रतिपदायास्तु [4]पालयिष्याम्यनुक्रमात् ॥
ततो मार्गशिरे मासि प्रतिपद्यपरेऽहनि ।
[5]उपावसेद्गुरुं पृष्ट्वा महादेवं स्मरन्मुहुः ॥
महादेवरतान्विप्रान् भस्मप्रच्छन्नविग्रहान् ।
षोडशाष्टौ तदर्धं वा दम्पत्यश्च निमन्त्रयेत् ॥
देवं च नक्तमासाद्य दीपान् प्रज्वाल्य षोडश ।
पशुनाथं महादेवं भक्त्या नत्वा [6]निमन्त्रयेत् ॥
आमन्त्र्य च गृहं गत्वा महादेवं स्मरन् क्षितौ ।
शुचिवस्त्रास्तृतायां तु निराहारो निशि स्वपेत् ॥
अथोदये सहस्रांशोः स्नात्वा चादाय दीपकान् ।
नैवेद्यं स्नपनाद्यं वा गच्छेत्तच्छङ्करालयम् ॥
गत्वा वितानकं दद्याद्वस्त्रयुग्मं च घण्टिकाम् ।
धूपोत्क्षेपं पताकां च दत्वा स्नानं च कारयेत् ॥
एवमभ्यर्च्य देवेशं [7]कषायै रूक्षयेच्च तम् ।
स्नापयेत्पञ्चगव्येन घृतेन तदनन्तरम् ॥

1 बिल्वजं for कल्पयेत्—हे.
2 व्रतमिच्छामि—ना.
3 उक्त्वेमं नियमं—हे.
4 पारयिष्याम्यनुत्तमम्—हे.
5 उपवासेन गुरुं पृष्ट्वा—हे.
6 निवेदयेत्—हे.
7 कषायैरुज्ज्वलयैश्च—ना.

मधुना च तथा भूयो दध्ना च पयसा तथा ।
[1]रसेन चाथ खण्डेन फलैश्च स्नापयेत्पुनः ॥
तिलाम्बुना ततः स्नाप्य [2]स्नापयेदुष्णवारिणा ।
[3]लेपयेत् स्नापयेत्पश्चात् कर्पूरागरुचन्दनैः ॥
[4]एवं संपूजयेच्छक्त्या हैमे न्यस्य व्रजेद्गृहम् ।
नानाभक्ष्यैः फलैश्चैव कुर्यान्नैवेद्यमेव हि ॥
गृहं गत्वा यथान्यायं हिरण्यरेतसं विभुम् ।
जातवेदसमाधाय तर्पयेत्तिलसर्पिषा ॥
व्रतिनश्च तथाचार्यं मिथुनानि च भोजयेत् ।
हेमवस्त्रादिदानेन यथाशक्त्या तु दक्षयेत् ॥
एवं विसृज्य तान् [5][सर्वान् सार्धं बन्धुजनैः स्वयम् ।
पीत्वादौ पञ्चगव्यं च हृष्टो भुञ्जीत वाग्यतः ॥
यत्किञ्चिदेतदुच्छिष्टं महादेवमुदीरयेत् ।
तमुद्दिश्य च तत्सर्वं] कर्तव्यं श्रेय इच्छता ॥
प्रारम्भे च विधिं कुर्याद्दरिद्रोऽप्यथवेश्वरः ।
वित्तसामर्थ्यतश्चैव प्रतिमासं च कृत्स्नशः ॥
[6]स्वल्पवित्तोऽथवा कश्चित् पुण्यादौ कार्तिकावधौ ।
कृत्वा नक्तममावास्यां प्रागुक्तविधिना ततः ॥
[7]प्रोष्ठपद्यामुपोष्यैवं पञ्चगव्यं पिबेच्छुचिः । .

1 वत्सेन वाथ—ना.

2 पश्चादुष्णेन वारिणा—हे.

3 लेपयेत् सुघनं पश्चात्—हे.

4 Hemādri reads 'एवं संपूज्य तं भक्त्या हेम न्यस्य'; and comments: "हेम न्यस्य" भुजोपरि सुवर्णपुष्पं निधाय—हे.

5 ना and उ Mss. omit the portion in brackets; supplied by Hemādri.

6 स्वल्पविद्यार्थवान्—ना.

7 प्रतिपदामुपोष्यैवं—हे

महादेवं स्मरन् सार्धं भक्त्या भुञ्जीत लिङ्गिभिः ॥
मासस्य कार्तिकस्यान्ते[1] कृत्स्नं प्राग्विधिना चरेत् ।
[2]प्रोष्ठपदद्वितीयायामुभे तिथी उपोषयेत् ॥
एवं पौषे तु संप्राप्ते पतिपन्नक्तमाचरेत् ।
[3]द्वितीयेऽब्दे द्वितीयायामुपवसेत्कार्तिकावधौ ॥
[4]तन्नयेत् प्राग्विधानेन द्वितीयामुत्सवं ततः ।
माघमासे तु संप्राप्ते कृत्स्नं प्राग्विधिना चरेत् ॥
वित्तशाठ्यमकुर्वाणः कृत्स्नमालम्भकालिकम् ।
कृत्वा नक्तं तृतीयायां द्वे तिथ्युपवसेत्पुनः ॥
तृतीयायां चतुर्थ्यां च पञ्चम्यां पारयेद्बुधः ।
पूर्वं प्रारम्भवद्भोज्यं मिथुनानि तपस्विनः ॥
अभ्यर्च्य च महादेवं भुञ्जीतार्च्य विभावसुम् ।
यजेत पौष्णं द्वितीयायां तृतीयां नक्तमाचरेत् ॥
उपोष्यैवं चतुर्थ्यां तु पञ्चम्यां पारयेत्ततः ।
प्रतिमासं क्षपेदेवं यावत्कार्तिकगोचरान् ॥
ततो मार्गशिरे मासि द्वितीयेऽप्युपवसेत्पुनः ।
चतुर्थीं पञ्चमीं चैव प्रागारम्भं विधानतः ॥
यजेद्वाभ्यां तृतीयायां चतुर्थ्यां नक्तमाचरेत् ।
पञ्चम्यामुपवासे तु प्रतिमासं च पञ्चमे ॥
आद्यां[illegible] तिथिं चैकां मार्गमासे तथापराम् ।
पूर्ववत् संत्यजेत्पौषे प्रत्यब्दं चैवमाचरेत् ॥[5]

1 स्यात् for अन्ते—ना.

2 प्रतिपदा for प्रोष्ठपद—हे.

3 तृतीयेऽब्दे तृतीयायामुपवसेत्कार्तिकावधौ—ना.

4 Hemādri omits the following fourteen lines.

5 Hemādri comments: अस्य श्लोकस्य फलितार्थः—अमावास्यायां नक्तं प्रतिपद्युपवास इति प्रथमवर्षम्, प्रथमस्याममावास्यायां नक्तं प्रतिपदि द्वितीयायामुपवासः शेषेषु

[1]कृत्वैवं षोडशे वर्षे पौर्णमास्याः समुद्गमे ।
पूर्ववद्देवमभ्यर्च्य [2]कृशानुं चापि तर्पयेत् ॥
महादेवाय गां दद्याद्दीक्षिताय द्विजाय च ।
[3]हेमशृङ्गीं सवत्सां च सघण्टां कांस्यदोहनाम् ॥
[4]सितवस्त्रधरान्विप्रान् महाचार्यांश्च षोडश ।
संभोज्य हेमवस्त्राद्यैर्यथाशक्त्या तु दक्षयेत् ॥
छत्रोपानहकुम्भांश्च दद्यात्तेभ्यः पृथक् पृथक् ।
भोजयेत्तान् [5]विसृज्यैवं मिथुनानि तु षोडश ॥
ब्राह्मणांश्च यथाशक्त्या भोजयेद्वेदपारगान् ।
अन्येषां च क्षुधार्तानां [6]दद्यादन्नं च भागिने ॥
[7]एवं महाव्रतं कृत्वा ब्रह्मघ्नोऽप्येति मोचनम् ।
भूर्भुवादिष्वशेषेषु लोकेषु बहु भोगदम् ॥
चतुर्णामपि वर्णानां [8]सदा सोपानवत्स्थितम् ।
[9]न कुर्यात्परधनं प्राप्य [10]संमुष्टं स्यात्सदैव हि ॥
धन्यमायुःप्रदं नित्यं रूपसौभाग्यदं परम् ।

प्रतिपदि नक्तं द्वितीयायामुपवास इति द्वितीयम्, प्रथमे मासि प्रतिपदि नक्तं द्वितीयातृतीययोरुपवासः शेषेषु द्वितीयायां नक्तं तृतीयायामुपवास इति तृतीयम् । एवं शेषेषु वर्षेषु कृत्वैवं षोडशवर्षम् पौर्णमास्याः कार्तिक्याः समुद्गमे उदयकाले ।

1 Hemādri omits the following line.

2 Hemādri reads 'कृशानुं धम्नि तर्पयेत्' and comments: "ध्यम्नि" अर्चिषः ।

3 हैमतोरणवल्लेण सघण्टैः कांस्यदोहनैः—ना.

4 शिवव्रतधरान् विप्रान् सहाचार्यांश्च षोडश—हे.

5 Hemādri reads विसृष्ट्वैव and comments: "विसृष्ट्वा" विसृज्य ।

6 दद्यादन्नं च तद्दिने—हे.

7 एवं महाव्रतं चैतद्ब्रह्मघ्नोऽप्यघमर्षणम्—हे.

8 यत्तु सोपानवत्स्थितम्—हे.

9 तत् कुर्याद्यौवनं प्राप्य समुद्दिष्टमिहैव हि—हे.

10 'संमुषितं' इति साधु ।

स्त्रीपुंसयोश्च निर्दिष्टं व्रतमेतत्पुरातनम् ॥
विधवयापि कर्तव्यं भवेदविधवा च या ।[1]
युक्तयापि[2] च कर्तव्यमवियोगाय तद्व्रतम् ॥
उपोष्य प्रतिमासं तु भुञ्जीत व्रतिभिः सह ।
एकद्वित्रिचतुर्भिर्वा सर्वेष्वब्देषु शक्तितः ॥
[3]अन्ते चतुर्वर्षाणां च प्रारम्भविधिमाचरेत् ।
[4]पुण्यसंभारमन्विच्छन्ननामयपदं च तत् ॥
अथारब्धे व्रते कश्चिदसमाप्ते मृतो भवेत् ।
सोऽपि तत्फलमाप्नोति सत्प्रारम्भप्रभावतः ॥
वाचकः श्रावकश्चैव श्रोतारश्च व्रतस्य ये ।
भवन्ति पुण्यसंश्लिष्टाः तत्पादाभिमुखाश्च ये ॥

[5][इति महाव्रतम्]

इति नानातिथिव्रतानि ॥

1 ना Ms. adds : युक्तयापि च कर्तव्यं भवेदविधवा च या ।
2 मुग्धयापि—हे.
3 अन्ते च भिन्नवर्षाणां प्रारम्भे—हे.
4 पुष्पसंभारं—हे.
5 इति कालिकापुराणोक्तं महाव्रतम्—हे.

# अथ नक्षत्रव्रतानि

## [पुष्यव्रतम्]

तत्रापस्तम्बः—[२, २०, ३-९]

[1]उदगयन आपूर्यमाणपक्षस्यैकरात्रमवरार्ध्यमुपोष्य तिष्येण पुष्टिकामः स्थालीपाकं श्रपयित्वा महाराजमिष्ट्वा तेन सर्पिष्मता ब्राह्मणान् भोजयित्वा [2]पुष्ट्यर्थेण सिद्धिं वाचयेत्। एवमहरहरापरस्मात्तिष्यात्। द्वौ द्वितीये। त्रीं-स्तृतीये। एवं संवत्सरमभ्युच्चयेन। महान्तं पौषं पुष्णाति। आदित एवोपवासः॥

[3]'अवरार्ध्यं' अवरम्। अवरता चैकरात्रोपवासस्यापूतस्य पुंसो बहूपवासपक्षापेक्षया। 'महाराजः' कुबेरः। 'तेन' हुतशिष्टेन चरुणा। [4]"पुष्ट्यर्थेन सिद्धिं वाचयेत्" पुष्टिः सिद्धिरस्त्विति वाचयेत्। 'एवं' पूर्ववच्चरुणा महाराजेष्टिब्राह्मणभोजनादि कार्यम्। 'द्वौ द्वितीये' द्वौ ब्राह्मणौ द्वितीये पुष्ये भोजनीयावित्यर्थः। 'एवं संवत्सरमभ्युच्चयेन' पूर्ववत् तृतीयां च चतुर्थीमित्युत्तरोत्तरवृद्ध्या ब्राह्मणान्

1 हे. व्र. II., ६२८.

2 पुष्पार्घेण—हे.

3 Comment reproduced by Hemādri.

4 पुष्पार्घेण—हे.

भोजयेदित्यर्थः । 'आदित एव' प्रथमपुष्ये पूर्वे ह्युत्तरेचेत्यर्थः ॥[1]

इति पुष्यव्रतम् ॥

## [नक्षत्रपुरुषव्रतम्]

मत्स्यपुराण

नारदोवाच—

[2]श्रीमदारोग्यरूपायुर्भाग्यसौभाग्यसंपदा ।
संयुक्तस्तव विष्णोर्वा पुमान् भक्तः कथं भवेत् ॥
नारी वा विधवा सर्वगुणसौभाग्यसंयुता ।
क्रमान्मुक्तिपदं देव किञ्चिद्व्रतमिहोच्यताम् ॥

रुद्रोवाच—

सम्यक्पृष्टं त्वया ब्रह्मन् सर्वलोकहितावहम् ।
श्रुतमप्यत्र यच्छान्त्यै तद्व्रतं शृणु नारद ॥
नक्षत्रपुरुषं नाम परं नारायणार्चनम् ।
पादादि कुर्याद्विधिवद्विष्णोर्नामानि कीर्तयेत् ॥
प्रतिमां वासुदेवस्य मूलर्क्षाद्यभिपूजयेत् ।
चैत्रे मासि समासाद्य कृत्वा ब्राह्मणवाचनम् ॥
मूले नमो विश्वधराय पादा-
वनन्तदेवाय च रोहिणीषु ।
जङ्घे च पूज्ये वरदाय चैव
द्वे जानुनी चाश्विकुमार ऋक्षे ॥

1 इत्यापस्तम्बोक्तं पुष्यव्रतम्—हे.

2 हे. व्र. II., ६९९–७०३ ; मत्स्यपु., अ. ५४, श्लो. ३–३०.

[1][पूर्वोत्तराषाढयुगे च पादौ
नमः शिवायेत्यभिपूजनीयौ ।]
पूर्वोत्तराफल्गुनियुग्मके च
मेढ्रं नमः पञ्चशराय पूज्यम् ॥
कटिं नमः शार्ङ्गधराय विष्णोः
संपूजयेन्नारद कृत्तिकासु ।
तथार्चयेद्भाद्रपदाद्वये च
पार्श्वे नमः [2]केशिनिषूदनाय ॥
कुक्षिद्वयं नारद रेवतीषु
दामोदरायेत्यभिपूजनीयम् ।
ऋक्षेऽनुराधासु च माधवाय
नमोऽस्त्वथोरःस्थलमेव पूज्यम् ॥
पृष्ठं धनिष्ठासु च [3]पूजनीय-
मघौघविध्वंसकराय तद्वत् ।
[4][श्रीशङ्खचक्रासिगदाधराय
नमो विशाखासु भुजाश्च पूज्याः ॥
हस्ते तु हस्ता मधुसूदनाय
नमोऽभिपूज्या इति कैटभारेः ।]
पुनर्वसावङ्गुलिपर्वभागाः
साम्नामधीशाय नमोऽभिपूज्याः ॥
भुजङ्गनक्षत्रदिने नखानि
संपूजयेन्मत्स्यशरीरिणं च ।

1 Portion in brackets omitted in, ना ; supplied from Hemādri.
2 कोपनिषूदनाय—ना.
3 पूजनीयं मघासु विध्वंस०—हे.
4 Portion in brackets omitted in ना Ms ; supplied from Hemādri.

कूर्मस्य पादौ शरणं व्रजामि
ज्येष्ठासु कण्ठे हरिरर्चनीयः ॥
श्रोत्रे वराहाय नमः प्रपूज्य
जनार्दनस्य श्रवणे च सम्यक् ।
पुष्ये मुखं दानवसूदनाय
नमो नृसिंहाय च पूजनीयम् ॥
नमो नमः कारणवामनाय
स्वातीषु दन्ताग्रमथार्चनीयम् ।
आस्यं हरेर्भार्गवनन्दनाय
संपूजनीयं द्विज वारुणे तु ॥
नमोऽस्तु रामाय मघासु नासा
संपूजनीया [1]रघुनन्दनस्य ।
मृगोत्तमाङ्गे नयने च पूज्ये
नमोऽस्तु ते राम विघूर्णिताक्ष ॥

[2]'मृगोत्तमाङ्गम्' मृगशिराः ॥

बुधाय शान्ताय नमो ललाटं
चित्रासु संपूज्यतमं मुरारेः ।
शिरोऽभिपूज्यं भरणीषु विष्णो-
र्नमोऽस्तु विश्वेश्वर कल्किरूप ॥
आर्द्रासु केशाः पुरुषोत्तमस्य
संपूजनीया हरये नमस्ते ।
उपोषितेनर्क्षदिनेषु शक्त्या
संपूजनीया द्विजपुङ्गवाः स्युः ॥

1 च पुरंदरस्य—ना.
2 Comment reproduced by Hemādri.

पूर्णे व्रते सर्वगुणान्विताय

[1]वाग्रूपशीलाय च सामगाय ।

हैमीं विशालायतबाहुदण्डां

मुक्ताफलेन्द्रोपलवज्रयुक्ताम् ॥

[2]गुडेन पूर्णे कलशे निविष्टा-

मर्चां हरेर्वस्त्रमयीं सहैनाम् ।

शय्यां तथोपस्करभाजनादि-

युक्तां प्रदद्याद्द्विजपुङ्गवाय ॥

यद्यत् प्रियं किंचिदिहास्ति देयं

तत्तद्द्विजायात्महिताय सर्वम् ।

मनोरथान्नः सफलीकुरुष्व

हिरण्यगर्भाच्युत[3]रुद्ररूप ॥

सलक्ष्मीकं सभार्याय काञ्चनं पुरुषोत्तमम् ।

शय्यां दद्याच्च मन्त्रेण ग्रन्थिभेदविवर्जिताम् ॥

यथा न विष्णुभक्तानां वृजिनं जायते क्वचित् ।

तथा सुरूपपारम्ये केशवे भक्तिरुत्तमा ॥

यथा लक्ष्म्या न शयनं तव शून्यं जनार्दन ।

शय्या ममाप्यशून्यास्तु कृष्ण जन्मनि जन्मनि ॥

एवं निवेद्य तत्सर्वं वस्त्रमाल्यानुलेपनम् ।

नक्षत्रपुरुषज्ञाय विप्रायाथ विसर्जयेत् ॥

भुञ्जीतातैललवणं सर्वर्क्षेष्वप्युपोषितः ।

भोजयेत्तद्यथाशक्त्या वित्तशाठ्यविवर्जितः ॥

1 वाक्पुण्यशीलाय—ना.

2 गुडस्य—ना ; गूढस्य—हे ; जलस्य—मु. म. पु.

3 अक्षत for अच्युत—ना.

इति नक्षत्रपुरुषमुपोष्य विधिवत्स्वयम् ।
सर्वान् कामानवाप्नोति विष्णुलोके महीयते ॥
ब्रह्महत्यादिकं किंचिद्यदत्रामुत्र वा कृतम् ।
आत्मना वाथ पितृभिस्तत्सर्वं नाशमाप्नुयात् ॥[1]

[2]इति नक्षत्रपुरुषव्रतम् ॥

## [आदित्यशयनव्रतम्]

[3]श्रीभगवानुवाच[4]—

उपवासेष्वशक्तानां नक्तं भोजनमिष्यते ।
यस्मिन्व्रते तदप्यत्र श्रूयतां वैष्णवं महत् ॥
आदित्यशयनं नाम यथावच्छङ्करार्चनम् ।
येषु नक्षत्रयोगेषु पुराणज्ञाः प्रचक्षते ॥
यदा हस्तेन सप्तम्यामादित्यस्य दिनं भवेत् ।
सूर्यस्य वाथ संक्रान्तिस्थितिः सा सार्वकामिकी ॥
उमामहेश्वरस्यार्चामर्चयेत्सूर्यनामभिः ।[5]
सूर्यार्चां [6]हरलिङ्गं चाप्युभयं पूजयेदतः ॥
उमापते रवेश्चापि न भेदः क्वचिदिष्यते ।
यस्मात्तस्मान्मुनिश्रेष्ठ गृहे शंभुं समर्चयेत् ॥

1 Hemādri and the printed Matsyapurāṇa add :
इति पठति शृणोति वातिभक्त्या पुरुषवरो व्रतमङ्गनाथ कुर्यात् ।
कलिकलुषविदारणं मुरारेः सकलविभूतिफलप्रदं च पुंसाम् ॥

2 इति मत्स्यपुराणोक्तं नक्षत्रपुरुषव्रतम्—हे.

3 हे. व्र. II., ६८०–६८४; मत्स्यपु., अ. ५५, श्लो. १–३३.

4 पुलस्त्य उवाच—हे; ईश्वर उवाच—मु. म. पु.

5 Hemādri comments : 'अर्चा' प्रतिमा । उमामहेश्वररूपं तु प्रथमकृष्णाष्टमीव्रतोक्तं वेदितव्यम् ।

6 शिवलिङ्गं—हे.

हस्तेन सूर्याय नमोऽस्तु पादा-
वर्काय चित्रास्वथ गुल्फदेशम् ।
स्वातीषु [1]जङ्घे पुरुषोत्तमाय
धात्रे विशाखासु च जानुदेशम् ॥

तथानुराधासु नमोऽस्तु पूज्य-
मूरुद्वयं देवसहस्रभानोः ।
[2]ज्येष्ठासु गुह्यं प्रतिपूज्य भानो-
रिन्द्राय [3]सोमाय कटिं च मूले ॥

पूर्वोत्तराषाढयुगे च नाभिं
त्वष्ट्रे नमः सप्ततुरङ्गमाय ।
तीक्ष्णांशवे तु श्रवणे च [4]कुक्षिः
कक्ष्ये धनिष्ठासु विकर्तनाय ॥

वक्षःस्थलं ध्वान्तविनाशनाय
जलाधिपर्क्षे प्रतिपूजनीयम् ।
'जलाधिपर्क्षे' [5]शतभिषा ॥

[6]पूर्वोत्तराभाद्रपदाद्वये च
बाहू नमश्चन्द्रकराय पूज्यौ ॥
[7]धाम्नामधीशाय करद्वयं च
संपूजनार्थं द्विज रेवतीषु ।

1 जङ्घे च सुरोत्तमाय—हे.

2 ज्येष्ठास्वनन्ताय नमोऽस्तु गुह्यं—हे, मु. म. पु.

3 भासाय—ना.

4 वक्षः—हे.

5 शततारा—हे.

6 तथोत्तराभाद्रपदद्वये च—ना.

7 साम्नामधीशाय—हे, मु. म. पु.

नखानि पूज्यानि तथाश्विनीषु
    नमोऽस्तु सप्ताश्वधुरंधराय ॥
कठोरधाम्ने भरणीषु पृष्ठं
    दिवाकरायेत्यभिपूजनीयम् ।
ग्रीवाग्निऋक्षेऽधरमम्बुजेशं
    संपूजयेन्नारद[1] रोहिणीषु ॥

[2]'अग्निऋक्षम्' कृत्तिका ॥

मृगोत्तमाङ्गे दशना मुरारेः
    संपूजनीया हरये नमस्ते ।
नमः सवित्रेति च शाङ्करे तु
    नासाथ पूज्या च पुनर्वसौ वा ॥

[2]'शाङ्करम्' आर्द्रा ॥

ललाटमम्भोरुहवल्लभाय
    पुष्येऽलकान् [3]वेदशरीरिणश्च ।
सार्पेऽथ मौलिं विबुधप्रियाय
    मघासु कर्णाविति गोगणेशम् ॥

[4]'सार्पम्' आश्लेषा ॥

पूर्वासु गोब्राह्मणनन्दनाय
    नेत्राणि संपूज्यतमानि शंभोः ।
अथोत्तराफाल्गुनिभे भ्रुवौ च
    विश्वेश्वरायेति च पूजनीये ॥

1 भारत for नारद—हे.
2 Comment reproduced by Hemādri.
3 वेदसमीरणाय—हे ; वेदशरीरधारिणे—मु. म. पु.
4 Comment reproduced by Hemādri.

नमोऽस्तु पाशाङ्कुशभस्मशूल-
कपालसर्पेन्दुधनुर्धराय।
जरासुरानङ्गपुरान्धकादि-
विनाशशूलाय नमः शिवाय॥
इत्यादि चास्त्राणि च [1]पूजयित्वा
विश्वेश्वरायेति शिरोऽभिपूज्यम्।
भोक्तव्यमत्रैवमतैलमन्न-
ममांसमक्षारमभुक्तशेषम्॥
[2][इत्येवंविधनक्तानि कृत्वा दद्यात्पुनर्वृषम्।
शालीयतण्डुलप्रस्थमुदुम्बरमये घृतम्॥
संस्थाप्य पात्रे विप्राय सहिरण्यं निवेदयेत्।]
सप्तमे वस्त्रयुग्मं च पारणे त्वधिकं भवेत्॥
चतुर्दशे तु संप्राप्ते पारणे [3]नारदाब्दिके।[4]
ब्राह्मणान् भोजयेद्भक्त्या गुडक्षीरघृतादिभिः॥
कृत्वाथ काञ्चनं पद्ममष्टपत्त्रं सकर्णकम्।
शुद्धमष्टाङ्गुलं तच्च पद्मरागदलान्वितम्॥
शय्यां विलक्षणां कृत्वा विरुद्धग्रन्थिवर्जिताम्।
सोपधानकविश्रामां स्वास्तीर्णावरणाश्रयाम्॥
पादुकोपानहच्छत्रचामरासनदर्पणैः।
भूषणैरपि संयुक्तां फलवस्त्रानुलेपनैः॥
अस्यां निधाय तत्पद्ममलङ्कृत्य गुणान्वितम्।

1 पूजनीया—ना.

2 Portion in brackets omitted in ना and उ manuscripts; supplied from Hemādri and printed Matsyapurāṇa.

3 भारताब्दिके—हे.

4 Hemādri comments: 'उदुम्बरमये' ताम्रमये। 'आब्दिके' सांवत्सरिके। सप्तविंशत्या दिवसैरेकैकं पारणमिति संवत्सरे अष्टादशदिनाधिके चतुर्दशपारणानि भवन्ति।

कपिलां वस्त्रसंयुक्तामधिशोलां पयस्विनीम् ॥
रौप्यखुरां हेमशृङ्गीं सवत्सां कांस्यदोहनाम् ।
दद्यान्मन्त्रेण पूर्वाह्ले न चैनामभिलङ्घयेत् ॥
"यथैवादित्य शयनमशून्यं तव सर्वदा ।
कान्त्या धृत्या श्रिया राज्या तथा मे सन्तु सिद्धयः
यथा न देवाः श्रेयांसं त्वदन्यमनघं विदुः ।
तथा मामुद्धराशेषाद्दुःखसंसारसागरात् ॥"
ततः प्रदक्षिणीकृत्य प्रणम्य च विसर्जयेत् ।
[1]शय्यागवादि तत्सर्वं द्विजस्य भवनं नयेत् ॥

[2]इदं महापातकभिन्नराणा-
मप्यक्षयं[3] वेदविदो वदन्ति ।
[4]नैव त्वपुत्रेण धनैर्वियुक्तः
पत्नीभिरानन्दकरः सुराणाम् ॥
नाभ्येति रोगं च न दुःखशोकं
या वाथ नारी कुरुतेऽतिभक्त्या ।
इति पठति शृणोति वा तदित्थं
[5]रविशयनं पुरुहूतवल्लभः स्यात् ॥
अपि नरकगतान् पितॄनशेषान्
[6]रविभवनं नयतीह यः करोति ॥

[7]इत्यादित्यशयनव्रतम् ॥

1 शय्यासनादि—हे.
2 इदं महापातकिनां नराणाम्—ना.
3 अघक्षयं—हे; अप्यक्षरं—मु. म. पु.
4 न बन्धुपुत्रेण—हे, मु. म. पु.
5 हरिशयनं—हे.
6 अपि दिवमानयतीह—हे, मु. म. पु.
7 इति पद्मपुराणोक्तमादित्यशयनव्रतम्—हे.

# [पुत्रोत्पत्तिव्रतम्]

ब्रह्मपुराण

[1]सूतोवाच—

ब्रह्मणो मानसः पुत्रो वसिष्ठ इति नः श्रुतम् ।
तस्य शक्तिः प्रियः पुत्रस्तस्य पुत्रः पराशरः ॥
तपश्चचार सुमहद्दुश्चरं सुरदानवैः ।
पुत्रार्थी ब्रह्मचारी च ततो लब्धवरोऽभवत् ॥
स पुत्रं लप्स्यसीत्येवं देवैरुक्तो महात्मभिः ।
[2]तीर्थयात्राप्रसङ्गेन चचार पृथिवीतले ॥
पश्यन्नानाविधान् भावान् यमुनातीरमागतः ।
तत्र[3] संवत्सरं स्नानं श्रवणे श्रवणे मुनिः[4] ॥
मनोरथफलप्राप्त्यै[5] चकार श्रद्धयान्वितः ।
[6][पाराशर्यं सुतं लेभे व्रतस्यास्य प्रभावतः ॥]
एवमन्योऽपि चर्क्षेषु स्नात्वा शुद्धिमवाप्नुयात्[7] ।
[पुत्रान्पौत्रांश्च लभते सुखं चात्यन्तमश्नुते ॥]

[8]इति पुत्रोत्पत्तिव्रतम् ॥

1 हे. व्र. II., ६४९–६५०.

2 Hemādri omits the following two lines.

3 कुरु—हे.

4 श्रवणे च भवेन्मुनिः—ना.

5 सोऽपि पुत्रानवापाष्टौ—हे.

6 Line in brackets not found in manuscripts; supplied from Hemādri.

7 राजेन्द्रस्तावत्सिद्धिमवाप्नुयात्—हे.

8 इत्यादित्यपुराणोक्तं पुत्रोत्पत्तिव्रतम्—हे.

## [गोयुग्मव्रतम्]

देवीपुराणे

[1]वृषं गां च समादाय युवानौ लक्षणान्वितौ ।
[2]हेमशृङ्गैः खुरै रौप्यैः सवस्त्रैः पूजयेन्मुने ॥
[3]शिवोमे पूजयित्वा तु [4]तद्दिने यः प्रयच्छति ।
शिवभक्ताय विप्राय रोहिण्या वा मृगेण वा ॥
न वियोगो भवेत्तस्य सुतपत्नीपतेः क्वचित्[5] ।
[6]विमानैर्वातरंहोभिर्गच्छेच्छिवपुरं द्विजः ॥
ततो भोगांश्चिरं भुक्त्वा इह चागत्य जायते ।
समृद्धो धनधान्याभ्यां पुत्रपौत्रसमाकुलः ॥
विगतारिर्भवेद्ब्रह्मन् व्रतस्यास्य प्रभावतः ।

[7]इति गोयुग्मव्रतम् ॥

## [गोरत्नव्रतम्]

[8]यो वा रत्नसमायुक्तं गोयुगं पूजयेन्मुने ।
प्रयच्छति शिवोमे च प्रीयेतां भावितात्मना ॥[9]

1 हे. व्र. II., ६९४–६९५.
2 हेमशृङ्गौ खुरौ रौप्यौ सवस्त्रौ—ना.
3 शिवोमां—ना.
4 भक्तिलेपैः—ना ; भक्तिनेयैः—उ.
5 कुतः—ना, उ.
6 विमानैर्वा समारुह्य—हे.
7 इति देवीपुराणोक्तं गोयुग्मव्रतम्—हे.
8 हे. व्र. II., ६९५.
9 Hemādri comments : 'यो वा रत्नसमायुक्तम्' इति पूर्वव्रतेन सह विकल्पादत्रापि पूर्वव्रतोक्त एव कालो विज्ञायते.

स सर्वपापदुःखाभ्यां विमुक्तः क्रीडते सदा।
इह लोके भवेद्धन्यो देहान्ते परमं पदम् ॥

[1]इति गोरत्नव्रतम् ॥

## [नक्षत्रविधिव्रतम्]

[2]मनुरुवाच—

अतः परं प्रवक्ष्यामि रूपसौभाग्यकारकम् ।
नक्षत्रविधिना वत्स यथा तुष्यति शङ्करी ॥
मृगादारभ्य मूलेन पादौ जातिस्रजा पुरा ।
पूजयेत् सोपवासस्तु नक्षत्रान्ते तु पारणम् ॥
यवान्नं हविषा युक्तं ब्राह्मे जङ्घे प्रपूजयेत् ।

[3]'ब्राह्मं' रोहिणी ॥

कल्हारैर्भृङ्गराजैश्च तिलमाषान्नभोजनम् ॥
तेनैव प्रथमं विप्रानश्विन्यां जानुनी जपेत् ।
[4]कुन्दैश्च सितपुष्पैश्च भोजने दधि शर्कराः ॥
आषाढद्वितये चोरू बिल्वपत्रैः प्रपूजयेत् ।
[5]नक्षत्रान्ते भोजयीत ब्राह्मणांस्तच्च पारणम् ।
गुह्यं तु फाल्गुनीयुग्मे पारयन्त्या प्रपूजयेत् ।

[6]'पारयन्ती' पुष्पविशेषः ॥

1 इति देवीपुराणोक्तं गोरत्नव्रतम्—हे.

2 हे. व्र. II., ६९६–६९८.

3 Comment reproduced by Hemādri.

4 कृत्वैवं—ना.

5 क्षीरान्नैर्भोजयेत्तत्र ब्राह्मणांस्तच्च पारणम्—हे.

6 Comment reproduced by Hemādri.

दधिभक्तं तु नैवेद्यं कृत्तिकासु कटिं यजेत् ॥
दमनैः सितपुष्पैश्च लड्डुकैर्दधिभोजनैः ।
पार्श्वे भाद्रपदायुग्मे तथा च कुसुमैः सितैः ॥
क्षीरान्नं दधि विप्राणां नक्षत्रान्ते तु [1]भोजनम् ।
[2]पौषे कुक्षिद्वयं देव्याः सहकारस्रजा यजेत् ॥
घृतमाषान्नभोज्यं तु [3]अनूराधायुगे यजेत् ।
कर्णिकारैः शुभैः पीतैर्भोजनं घृतपाचितम् ॥
पृष्ठदेशं धनिष्ठासु हेमपुष्पैः प्रपूजयेत् ।

[4]'हेमपुष्पैः नागकल्हारैः ॥

कर्णपत्रैश्च नैवेद्यं दोर्विशाखासु पूज्यते ॥
मरुत्पत्रैः सुगन्धैश्च देयं भोज्यं तु पायसम् ।
[5][करौ करे पूजयीत उशीरतगरादिभिः ॥
गुडक्षीरं च नैवेद्यमङ्गुलीश्च पुनर्वसौ ।
कुङ्कुमेनार्चयेद्देव्या देयं भोज्यं च षाष्टिकम् ॥]
नखान् भुजङ्गदैवत्ये पुन्नागादिभिरर्चयेत् ।
भोज्यं तु मल्लिका देया ग्रीवां ज्येष्ठासु पूजयेत् ॥
सितधान्यादिभिर्देव्या देयं भोज्यं घृतादिकम् ।
रम्भापुष्पैर्जपेत्कर्णौ श्रावणे भोजयेद्दधि ॥

'[6]रम्भा' कदली ॥

1 भोजयेत्—ना.

2 पौषे कुक्षिद्वयं दद्यात् स्वाहाकारः प्रजापते—ना ; पौष्णि कुक्षिद्वयं देव्याः सहकारस्रजा यजेत्—हे.

3 अनुराधा उरोर्जपेत्—ना ; अनुराधायुगे जपेत्—उ.

4 "हेमपुष्पैः" नागकेशरैः—हे.

5 Omitted in Mss ; supplied from Hemādri.

6 Comment reproduced by Hemādri.

पुष्ये मुखं तु पद्माद्यैः शर्करान्नं तु भोजनम् ।
[1][स्वात्यां तु रदना देव्याः सुरक्तैः कमलैर्यजेत् ॥
अंसं शतभिषर्क्षे च नागकेसरचन्दनैः ।]
खर्जूरं शर्करा भोज्यं [2]यजन्नासां मघासु च ॥
जपापुष्पैस्तथा भोज्यं गोधूमं घृतसंस्कृतम् ।
नगनेत्रद्वयं देव्याः सुगन्धैः कुसुमैर्जपेत् ॥
घृतमाषान्नभोज्यं तु जपेत्तासां मघासु च ।
चित्रां चित्रस्रजा पूज्यं ललाटं चित्रभोजनम् ॥
[1][भरणीषु शिरो देव्याः पङ्कजादिस्रजा यजेत् ।
क्षीरान्नं भोजनं देयं केशानार्द्रासु पूजयेत् ॥
जात्यादिकुसुमैर्देव्याः सर्वान्नानि च भोजयेत् ।]
नक्षत्रेष्विति पूज्यार्या रूपपुत्रादिभिः सह ॥
शंभुर्वाप्यथवा विष्णुर्घृतं हेमं च दक्षिणा ।
देयं वस्त्रयुगं तस्मै सपत्नीके द्विजे प्रिये ॥
देवीशास्त्रार्थकुशले शिवज्ञानविशारदे ।
संपूर्णचन्द्रवदना पद्मपत्त्रायतेक्षणा ॥
शोभना दशनाः शुभ्राः कर्णौ चापि सुमांसलौ ।
षट्पदौघनिभैः [3]केशैर्युता कोकिलवादिनी ॥
ताम्रौष्ठी पद्मपत्त्राभा सुहस्ता स्तननामिता ।
नाभिप्रदक्षिणावर्ता रम्भादण्डनिभोरुका ॥
सुश्रोणी तनुमध्या च सुश्लिष्टाङ्गुलिशोभना ।
प्रमदा सुभगा भर्तुर्मनुष्योऽपि महाभुजः ॥
पीनवक्षाः पृथुस्कन्धः पूर्णचन्द्रनिभाननः ।

1 Portion in brackets not found in MSS ; supplied from Hemādri.
2 यजेत्तासां—ना.
3 केशैस्तथा—ना.

सितदन्तो गजगामी महाबलपराक्रमः ॥
प्रियः सर्वस्य लोकस्य पद्मपत्रायतेक्षणः ।
सर्वशास्त्रार्थवेत्ता च स्त्रीणां चेतोऽपहारकः ॥
कामतुल्यो महारूपो व्रतेनानेन जायते ।
अवियोगश्च बन्धूनामिष्टानां च शुभागमः ॥
नक्षत्रार्थं महापुण्यं व्रतानां व्रतमुत्तमम् ।
आपत्स्वपि न भेदो वा क्रिया कार्या न दूष्यते ॥
अपि दोषात्मकैर्भावैर्न त्याज्यं मुनिसत्तम ।

[1]इति नक्षत्रविधिव्रतम् ॥

## [उमामहेश्वरव्रतम्]

[2]यदीच्छति सुभर्तारमिह जन्मन्यथापरे ।
[3][कन्या कुर्यान्नृपश्रेष्ठ विष्णुना कथितं व्रतम् ॥
सर्वपापहरं पुण्यं सर्वकामफलप्रदम् ।
उमामहेश्वरं नाम कर्तव्यं विधिना यथा ॥]
प्रोष्ठाश्विने तथा मासे [4]मृगयोगेऽथवा मुने ।
मैत्रे शाक्रेऽथवा कार्यमष्टम्यां वाथ शाङ्करे ॥

[5]'प्रोष्ठो' भाद्रपदो मासः । '[4]मृगो' मृगशिरानक्षत्रम् । 'मैत्रम्' अनूराधा । 'शाक्रम्' ज्येष्ठा । 'शाङ्करम्' आर्द्रा ॥

1 इति देवीपुराणोक्तं नक्षत्रार्थव्रतम्—हे.

2 हे. व्र. II., ६९१–६९३.

3 The portion in brackets not found in manuscripts; supplied from Hemādri.

4 Hemādri reads 'मृगे भाग्येऽथवा मुने' and comments 'भाग्यं' पूर्वफल्गुनी.

5 Comment reproduced by Hemādri.

पूर्वेऽह्नि सपत्नीकं ब्राह्मणं शुभसङ्गतम् ।
एकभार्याव्रतं वत्स सर्वधर्मव्रतान्वितम् ॥
आमन्त्रयाम्येष यथा प्रातः कार्यस्त्वनुग्रहः ।
मुदान्वितस्तदा कुर्यात् कलिद्वन्द्वविवर्जितः ॥
मधुरान्नेन भोज्यं तु क्षीरेक्षुयवशालिभिः ।
सितसूक्ष्मे तथा रक्ते शुभे देये च वाससी ॥
निर्मले सदृशे देये देवदेवीप्रसादके ।
स्नात्वा उमेश्वरः पूज्यः स्थण्डिले प्रतिमां शुभाम् ॥[1]
कृत्वा दिशां बलिं दत्वा वितानमवतारयेत् ।
चतुरस्रं चतुर्द्वारं गोमयेनोपलिप्य च ॥
चतुष्कं शालिगोधूमकर्णकैरुपशोभितम् ।
दीपमाल्यान्वितं कृत्वा दाम्पत्यं भोजयेत्ततः ॥
[2]शङ्करौ मनसा ध्यात्वा शक्रभक्तिसमन्वितः ।
देवचन्दनकाश्मीरकर्पूरागरुधूपितम् ॥
जातीपुन्नागमन्दारशतपत्रैः समन्वितम् ।
स्थाप्य युग्मं सुसंवीतं त्रिधा कृत्वा प्रदक्षिणम् ॥
सुखलेपेन संभाज्य ध्यायेत्तं तु महेश्वरम् ।
आचम्य चार्घ्यपाद्यं च दद्याद्गन्धोदकं तथा ॥
सहिरण्यं सरत्नं तु पुनर्दत्वा क्षमापयेत् ।
प्रीयतां मे उमाभर्ता सर्वदेवपतिर्यथा ॥
[3]उमामन्त्रेण चैवोमामीशमन्त्रेण शङ्करम् ।
पूजिता सर्वकामान्वै प्रयच्छत्यविचारतः ॥[4]

1 Hemādri comments: उमामहेश्वरप्रतिमालक्षणप्रमाणं तु अवियोगद्वादशीव्रते वेदितव्यम्—हे.

2 शङ्करोमं समाध्याय शक्रास्यं शुभचर्चितम्—हे.

3 उमामन्त्रेण चोमेशमुमामन्त्रेण शङ्करम्—ना.

4 Hemādri adds ten lines after this;

अनेन विधिना कन्या नारीणां जायते पतिः।
समृद्धः सर्वभूतानां पतित्वमुपगच्छति ॥[1]

[2]इत्युमामहेश्वरव्रतम् ॥

## [शङ्करनारायणव्रतम्]

[3]इन्द्र उवाच—

कथितं शङ्करोमाख्यं व्रतं मनसि तुष्टिदम्।
श्रोतुमिच्छाम्यहं तात विष्णुशङ्करसंज्ञितम् ॥

मनुरुवाच—

यथा उमेश्वरं तात तथा कार्यमिदं व्रतम्।
किन्तु पीतानि वासांसि केशवाय प्रकल्पयेत् ॥
गन्धपुष्पं तथा धूपं सुगन्धं च जनार्दने।
कार्यं पूजनसंभारे लड्डुकादिरसं दधि ॥
एवं तौ भोजयित्वा तु प्रतिमास्थण्डिलेऽपि वा।
आहूत्य ब्राह्मणौ वत्स [4]वेदसिद्धान्तपारगौ ॥
यती वा व्रतसंपन्नौ जटाकाषायधारिणौ।
तौ भोज्य विधिनानेन शूलपाणिजनार्दनौ ॥
क्षमाप्य विधिना वत्स सर्वकामार्थसाधकौ।
हेमात्र दक्षिणा विष्णोर्मौक्तिकं शङ्करस्य च ॥

1 Hemādri adds:
शङ्करोमाव्रतं शक्र लक्ष्म्या पूर्वमनुष्ठितम्।
रत्या देव्या अरुन्धत्या रोहिण्या सुरसत्तम ॥
कृतमासीत् सुखार्थं तु ताश्च भुञ्जन्ति तत्फलम्।

2 इति देवीपुराणोक्तं उमामहेश्वरव्रतम्—हे.

3 हे. व्र. II., ६९३–६९४.

4 वेदवेदाङ्ग—हे.

दत्वानुव्रजतो लोकौ क्रमाद्देहक्षये ततः ।
भुक्त्वा भोगांस्तथा शक्र इहायातो नरेश्वरः ॥
[1][कुले भवति भूतानां सुखी पुत्रादिसंयुतः ।
पूर्वभावाद्भवेद्भक्तिः शिवे विष्णौ च शाश्वती ॥
योगं प्राप्य परं याति तत्र तत्स्थानमव्ययम् ।]

[2]इति शङ्करनारायणव्रतम् ॥

## [ब्रह्मगायत्रि-चन्द्ररोहिणीव्रतम्]

[3]अनेनैव विधानेन लक्ष्मीनारायणव्रतम् ।
ब्रह्मगायत्रिजं तात चन्द्ररोहिणिजं तथा ॥
भावचिन्तानुरूपेण सत्यमेव फलं लभेत् ।

[4]इति ब्रह्म(गायत्रि)चन्द्ररोहिणीव्रतम् ॥

---

1 Portion in brackets not found in Mss; supplied from Hemādri.

2 इति देवीपुराणोक्तं शङ्करनारायणव्रतम्—हे.

3 हे. व्र. II., ६९४.

4 इति पद्मपुराणोक्तं ब्रह्मगायत्रिचन्द्ररोहिणीव्रतम्—हे.

# अथ मासव्रतानि

## कार्तिकस्नानविधिः

[1]तत्र विष्णुः—[८९, १-४]

[2]कार्तिको मासोऽग्निदैवत्यः। अग्निश्च सर्वदेवानां मुखम्। तस्मात् कार्तिकं सकलं मासं बहिःस्नायी गायत्रीजपनिरतः [3]सकृद्धविष्याशी संवत्सरकृतात्पापात् पूतो भवति। [4]अत्र गाथा भवति॥

कार्तिकं सकलं मासं प्रातःस्नायी जितेन्द्रियः।
जपन् हविष्यभुग्दान्तः सर्वपापैः प्रमुच्यते॥

[5]इति कार्तिकस्नानविधिः॥

## [एकभक्तव्रतम्]

स्कन्दपुराणे—

एकभक्तेन यो दिव्यं मासं मार्गं क्षपेत च।
स तेन कर्मणा युक्तः सौभाग्यं याति सर्वतः॥

1 हे. व्र. II., ७६२.

2 कार्तिको मासः सर्वदैवत्यः—हे ; मासः कार्तिको—मु. वि. स्मृ.

3 सर्वकृदेव हविष्याशी—मु. वि. स्मृ ; सर्वदैव हविष्याशी—हे.

4 Hemādri omits the following *sūtras*.

5 इति विष्णुस्मृत्युक्तः कार्तिकस्नानविधिः—हे.

[illegible] पुत्रांश्च बहूनाप्नोति धार्मिकान् ।
माघमासे च कुर्वाणाः स्त्रियः प्राप्नोति वै प्रियाः ॥
एकभक्तं तु कुर्वाणः फाल्गुने मासि नित्यशः ।
क्षपयेदेकभक्तेन चैत्रे मासे नरोत्तम ॥
धनधान्यसमृद्धे तु कुले जायेत रूपवान् ।
वैशाखं यः क्षपेन्मासमेकभक्तेन मानवः ॥
सा याति श्रेष्ठतां लोके पूजितो धनधान्यवान् ।
ज्येष्ठमासे नरो यो वै एकभक्तं समाचरेत् ॥
भ्रातॄणां भवति श्रेष्ठो भोगांश्चाप्नोति पुष्कलान् ।
आषाढं वापि यो मासमेकभक्तं समाचरेत् ॥
यात्यसौ मान्यतां प्राप्य कामानाप्नोति पुष्कलान् ।
श्रावणे वापि यो मासे तथैवाचरते नरः ॥
सेनापत्यं स संप्राप्य बलवानभिजायते ।
योऽपि चाश्वयुजे मासि चैकभक्तेन तिष्ठति ॥
वाणिज्यं फलते तस्य कृषिः पशुगणास्तथा ।
कार्तिकं त्वपि यो मासमेकभक्तेन तिष्ठति ॥
सोऽश्वमेधफलं प्राप्य वह्निलोके महीयते ।
यः क्षपेदेकभक्तेन यावज्जीवं नरोत्तमः ॥
विमानेनार्कवर्णेन स गच्छेच्छक्रलोकताम् ।
संवत्सरं तु यः पुष्यमेकभक्तेन तिष्ठति ॥
स पार्थिवसमो भूत्वा महीं याति नरेन्द्रवत् ।

महाभारते—

[1]मार्गशीर्षं तु यो मासमेकभक्तेन संक्षपेत् ।
श्रीमान् कुले जातिमांस्तु स हरत्वं प्रपद्यते ॥

1 हे. व्र. II., ७८४.

[1]पौषमासं तु कौन्तेय भक्तेनैकेन यः क्षपेत्।
सुभगो दर्शनीयश्च यशोभागी च जायते॥
[2]माघमासं तु यो मासमेकभक्तेन यः क्षपेत्।
श्रीमान् कुले ज्ञातिमांस्तु स महत्वं प्रपद्यते॥
[3]भगदैवं तु वै मासमेकभक्तेन यः क्षपेत्।
स्त्रीषु वल्लभतां याति वश्याश्चैव भवन्ति ताः॥
[4]चैत्रं तु नियतं मासमेकभक्तेन यः क्षपेत्।
सुवर्णमणिमुक्ताढ्ये कुले महति जायते॥
[5]विस्तरेदेकभक्तेन वैशाखे यो जितेन्द्रियः।
नरो वा यदि वा नारी जातीनां श्रेष्ठतां व्रजेत्॥
[6]ज्येष्ठामूलं तु वै मासमेकभक्तेन यः क्षपेत्।
यत्र यंत्राभिषेकेण युज्यते ज्ञातिवर्धनः॥
[7]आषाढमेकभक्तेन स्थित्वा मासमतन्द्रितः।
बहुधान्यो बहुधनो बहुपुत्रश्च जायते॥
[8]श्रावणं नियतो मासमेकंभक्तेन यः क्षपेत्।
यत्र तत्राभिषेकेण युज्यते ज्ञातिवर्धनः॥
[9]प्रौष्ठपद्यां तु यो मासमेकाहारो भवेन्नरः।
धनाढ्यं स्फीतमतुलमैश्वर्यं प्रतिपद्यते॥

1 हे. व्र. II., ७८६.
2 *Ibid.*, ७९६.
3 *Ibid.*, ७९७.
4 *Ibid.*, ७४८.
5 *Ibid.*, ७४९.
6 *Ibid.*, ७५०.
7 *Ibid.*, ७५२.
8 *Ibid.*, ७५७.
9 *Ibid.*, ७५८.

[1]तथैवाश्वयुजं मासमेकभक्तेन यः क्षपेत् ।
प्रजावान् बहुवाद्यश्च बहुपुत्रश्च जायते ॥
[2]कार्तिकं तु नरो मासं यः कुर्यादेकभोजनम् ।
शूरश्च बहुभाग्यश्च कीर्तिमांश्चैव जायते ॥

इत्येकभक्तव्रतम् ॥

## [अथ स्त्रीणां कामव्रतम्]

[3]भविष्यपुराणे—

एकभक्तेन या नारी कार्तिकं तु क्षपेन्नर ।
क्षमाहिंसादिनियमैः संयता ब्रह्मचारिणी ॥
गुडान्नमिश्रं शाल्यन्नं भास्कराय निवेदयेत् ।
पुष्पाणि करवीराणि गुग्गुलं चाज्यमादरात् ॥
सप्तम्यां वाथ वाष्टम्यामुपवासरतिर्भवेत् ।
पक्षयोरुभयोः स्नात्वा श्रद्धया परयान्विता ॥
इन्द्रनीलप्रतीकाशैर्विमानैः सार्वकामिकैः ।
नारी युगशतं साग्रं सूर्यलोके महीयते ॥
तस्मादागत्य लोकेऽस्मिन् यथेष्टं विन्दते पतिम् ।
क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ॥
सूर्यपूजाग्निहवनं संतोषस्तेयवर्जनम् ।
सर्वव्रतेष्वयं धर्मः सामान्येन सदास्थितः ॥
मार्गशीर्षे शुभे मासि व्योम पिष्टेन निर्मितम् ।
गन्धमाल्यैरलङ्कृत्य भास्कराय निवेदयेत् ॥
गैरिकैर्यैर्महायानैरप्सरोगणसंयुतैः ।

1 हे. व्र. II., ७६२.
2 *Ibid.*, ७८३.
3 *Ibid.*, ८२१–८२४.

समैकादशसाहस्रं सूर्यलोके महीयते ॥

'गैरिकेयैः' सौवर्णैः ॥

क्रमादागत्य लोकेऽस्मिन् राजानं पतिमाप्नुयात् ।
पौषे तु गरुडं कृत्वा भानवे विनिवेदयेत् ॥
गन्धमाल्यैरलङ्कृत्य भास्करं विबुधोत्तमम् ।
ताम्रपात्रस्थिते तस्मिन् तत्सर्वं विनिवेदयेत् ॥

'तस्मिन्' गरुडे ॥

महापद्मकयानेन दिव्यगन्धप्रवाहिणा ।
समैकादशसाहस्रं सूर्यलोके महीयते ॥
संप्राप्यैवं क्रमाल्लोकं यथेष्टं नृपतिं पतिम् ।
माघे चाश्वयुतं दीपरत्नमाल्यविभूषितम् ॥
पैष्टभानुसमायुक्तं कृत्वायतनमानयेत् ।
महारथोपमैर्यानैः श्वेताश्वकसमन्वितैः ॥
वर्षायुतशतं साग्रं सूर्यलोके महीयते ।
क्रमादागत्य लोकेऽस्मिन् यथेष्टं विन्दते पतिम् ॥
देवार्चां फल्गुने मासि कृत्वा पिष्टमयं तु वै ।
गन्धमाल्यैरलङ्कृत्य स्थापयेद्भास्करालये ॥
विमानैः सूर्यसङ्काशैर्गीतवाद्यसमाकुलैः ।
समैकादशसाहस्रं सूर्यलोके महीयते ॥
पुनरेत्य इमं लोकं यथेष्टं विन्दते पतिम् ।
कृत्वा क्षणं तथा चैत्रे गन्धमाल्योपशोभितम् ॥
स्थाप्य पात्रे यथोक्ते तु भास्कराय निवेदयेत् ।

'यथोक्ते' ताम्रमये ॥

शरदिन्दुप्रतीकाशैर्विमानैः सार्वकामिकैः ॥
वर्षायुतशतं साग्रं सूर्यलोके महीयते ।
कर्मक्षयादिहागत्य पुत्रपौत्रसमन्विता ॥
अभीष्टं पतिमासाद्य लभेद्भोगान् सुदुर्लभान् ।
[तण्डुलाढकपिष्टेन कृत्वा वै मेरुपर्वतम् ॥]

'तण्डुलाढकपिष्टेन' तण्डुलेनेत्यर्थः ॥

निक्षुभार्कसमायुक्तं सर्वधातुविभूषितम् ।
नानालङ्कारसंपन्नं नानामाल्यविभूषितम् ॥
सर्वरत्नसमायुक्तं स्थापयेद्भास्करालये ।
महाव्योमव्रतं ह्येतद्वैशाख्यां च समाचरेत् ॥
नानाविधैर्विमानैश्च सूर्यलोके महीयते ।
क्रमादागत्य लोकेऽस्मिन् क्रीडते मानसावनौ ॥
पिष्टेन पङ्कजं कृत्वा ज्येष्ठे मासि सवेदिकम् ।

'पङ्कजम्' पद्मम् ॥

पात्रैः संपूज्य गन्धाढ्यैर्नानामाल्यविभूषितैः ॥
शुद्धस्फटिकसङ्काशैर्विमानैः सार्वकामिकैः ।
वर्षकोटिशतं साग्रं सूर्यलोके महीयते ॥
क्रमादागत्य लोकेऽस्मिन् राजानं पतिमाप्नुयात् ।
द्वितीयं च तथा पद्ममाषाढे पैष्टमुत्तमम् ॥
सर्वबीजरसैः पूर्णं कृत्वा च शुभलक्षणम् ।
नागकेसरगन्धाढ्यं सर्वरत्नविभूषितम् ॥
हंसवाहैर्महायानैः सर्वभोगान्विता नृप ।
वर्षकोटिशतं साग्रं मेघलोके महीयते ॥
क्रमाल्लोकमिमं प्राप्य राजानं विन्दते पतिम् ।

[1][निवेदयेत्तु सूर्याय श्रावणे तिलपर्वतम् ।
स्वच्छन्दगामिभिर्यानैर्नानारत्नविभूषितैः ॥
वर्षकोटिशतं साग्रं सूर्यलोके महीयते ।
संप्राप्य विविधान्भोगान् बह्वाश्चर्यसमन्वितान् ॥
क्रमाल्लोकमिमं प्राप्य राजानं विन्दते पतिम् ।]
कृत्वा भाद्रपदे मासि व्योमशालिमयं ततः ॥
विमानं ध्वजवस्त्राढ्यं नानामाल्यविभूषितम् ।
निशाकरकरप्रेक्ष्यं महायानैः सुशोभितैः ॥
वर्षकोटिसहस्राणि सूर्यलोके महीयते ।
क्रमादागत्य लोकेऽस्मिन् राजानं विन्दते पतिम् ॥
कृत्वा चाश्वयुजे मासि विपुलं धान्यपर्वतम् ।
सु[illegible]गन्धाढ्यं सूर्यस्याग्रे निवेदयेत् ॥
सा विचित्रैर्महायानैर्वरैर्भोगसमन्वितैः ।
वर्षकोटिसहस्राणि सूर्यलोके महीयते ॥
तस्मिंल्लोके पुनः प्राप्य राजानं विन्दते पतिम्।

[2]इति स्त्रीणां कामव्रतम् ॥

## [नन्दाव्रतम्]

[3]देवीपुराणे

ब्रह्मोवाच—

अतः परं प्रवक्ष्यामि [4]सर्वस्योदयवर्धकम् ।
यत्कृत्वा जायते राजा सार्वभौम इहानघ ॥

1 Omitted in MSS., supplied from Hemādri.

2 इति भविष्यत्पुराणोक्तं स्त्रीपुत्रकामावाप्तिव्रतम्—हे.

3 हे. व्र. II., ८३२–८३६.

4 सर्वाभ्युदयवर्धनम्—हे.

मासे नभसि संप्राप्ते नक्ताहारो जितेन्द्रियः ।
प्रातःस्नायी सदाध्यायी चाग्निकार्यपरायणः ॥
देवीं संपूजयेद्वत्स बिल्वपुन्नागचम्पकैः ।
धूपं च गुग्गुलं दद्यान्नैवेद्यं घृतपायसम् ॥
क्षीरान्नं दधिभक्तं चाप्यथवा शाकयावकम् ।
जपं च कुर्यान्मन्त्रस्य सहस्रमथवा शतम् ॥
[1]देव्याः समर्चयेत्तावद्यावत्पूर्णव्रतो भवेत् ।
पूर्णे व्रते ततो वत्स कल्पाचार्यद्विजांस्तथा[2] ॥
भोजयेत्पूजयेद्भक्त्या [3]हेमभूवस्त्रगोवृषैः ।
[4]अभावान्नर वित्तस्य जपः कार्यो द्विजोत्तम ॥
[5]यस्तु कुर्यादिदं भक्त्या सोऽपि तत्तुल्यमाप्नुयात् ।
न च व्याधिजरामृत्युर्न भयं वारिसंभवम् ॥
जायते देव भक्तस्य अन्ते च फलमव्ययम् ॥

अत्र मन्त्रपदानि भवन्ति। ओं [6]नन्दे नन्दिनि सर्वार्थसाधिनि नमः । इति मूलमन्त्रः ॥ ओं [6]नन्दे हृदयाय नमः । इति हृदयम् ॥ ओं नन्दिनि शिरसे नमः । शिरः ॥ ओं सर्वायै नमः । शिखा ॥ ओं अर्थसाधिनि नमः । कवचम् ॥ ओं त्रिणेत्रायै नमः । नेत्रम् ॥ ओं नमः हुं फट् । अस्त्रम् ॥ ओं नन्दिनी इति दिग्बन्धः ॥

1 देव्यास्तत्र समर्च्येत यावत् पूर्णं व्रतं भवेत्—हे.

2 द्विजस्त्रियः—हे.

3 हेमगोचरभूषणैः—हे.

4 अभावान्मन्त्रजप्यं च नित्यं कार्यं नृपोत्तम—हे; अत्र वान्तरचिन्नस्य जपः कार्यो—ना.

5 यः कुर्यात् सततं भक्त्या सोऽपि तत्तुल्यतामियात्—हे.

6 नन्दने—हे.

तृतीयायां च पञ्चम्यां चतुर्थ्यामष्टमीषु च ।
नवम्यां पौर्णमास्यामेकादश्यां द्वादशीषु च ॥
षष्ठ्यां सा चैव वित्तेशा पूजनीया विशेषतः ।
नन्दामुद्दिश्य यो दद्याच्छ्रावणे [1]गोवृषं सितम् ॥
स लभेदिष्टकामाप्तिं देवीलोकं च शाश्वतम् ।
नभस्ये तां समुद्दिश्य दद्याद्गां काञ्चनान्विताम् ॥
[2]स व्रजेद्धूतपापस्तु नन्दालोकं तमक्षयम् ।
आश्विने नवरात्रं तु उपवासमयाचितैः ॥
कृत्वा देवीं प्रपूज्याथ अष्टम्यामपरेऽहनि ।
हेमपुष्पमणिर्वस्त्रं नानाचित्रविभूषितम् ॥
दानं च काञ्चनं देयं नन्दायै [3]स्वर्गसिद्धये ।
विधूतपापसङ्घातः सर्वकामसमन्वितः ॥
गच्छते तं तु लोकं वै यत्र देवी सुरारिहा ।
वसते कल्पकोटीस्तु अप्सरोगणभूषितः ॥
नन्दतेऽप्यागतश्चात्र पृथिव्यामेकराड्भवेत् ।
कार्तिके पूजयित्वा तु देवीं जातीगजायुधैः[4] ॥
अन्नदानं ददद्विप्रे कन्यासु स्त्रीष्वथापि वा ।
श्वेतानि चैव वस्त्राणि तथा देयानि दक्षिणा ॥
मुच्यते सर्वपापैस्तु जन्मान्तरकृतैरपि ।
इहैव जायते योगी परत्र पदमव्ययम् ॥
मार्गे च विधिवत्स्नात्वा [5]पूजयेत्कुङ्कुमैस्तथा ।

1 वृषभं सितम्—ना.
2 स व्रजेद्गतमायुस्तु—ना.
3 स्वार्थसिद्धये—हे.
4 गजाह्वयैः—हे.
5 देवीं पूज्य च कुङ्कुमैः—हे.

नैवेद्यं घृतपूपाश्च देयाः कन्यासु च द्विजे ॥
भोजयेद्भक्षयेद्वत्स वस्त्रैः कीटकुलोद्भवैः ।
प्राप्नुयात् सर्वकामान्वै सर्वपापात्प्रमुच्यते ॥
पौषे देवीं समाराध्य जलजैः स्रग्भिरर्चयेत् ।
नैवेद्यं शालिभक्तं च कन्याः संभोज्य दक्षयेत् ॥
पीतवस्त्रैस्तथा शय्या देव्या देयाथ शोभना ।
अनेन विधिना तस्य साक्षाद्देवी प्रसीदति ॥
ददाति कामिकान् भोगानन्ते च स्वपुरं नयेत् ।
माघे तु पूजयेद्देवीं [1]कुटजस्रग्भिरादरात् ॥
कुङ्कुमेन सदर्पेण तथा समुपलेपिता ।

'सदर्पेण' कस्तूरिकासहितेन ॥

विधिवत्पूर्ववत्तासु कन्याश्च परिपूजयेत् ॥
द्विजांश्च चण्डिकां भक्त्या विधिना कृतपायसैः ।
दक्षिणां तिलहोमं च यथाशक्त्या प्रदापयेत् ॥
विधूतपापकलिकः सर्वभोगसमन्वितः ।
विशत्रुर्बहुपुत्रश्च जायते नरसत्तमः ॥
देहान्ते नन्दिनीलोकं सर्वदेवैर्नमस्कृतम् ।
प्रयाति नात्र संदेहो ह्यनेन विधिना नृप ॥
फाल्गुने पूजयेद्देवीं स्रग्भिस्तु सहकारजैः ।
तथा नैवेद्यभक्ष्याणि शर्करामधुना सह ॥
भोजयेत्कन्यकाविप्रान् दक्षिणा सितवाससी ।
अनेन जायते भोगी देवलोकं च गच्छति ॥
संप्राप्ते चैत्रमासे तु देवीं पूज्याथ किंशुकैः ।
नैवेद्ये लड्डुका देयास्तथा कन्याश्च भोजयेत् ॥

1 कुन्दजस्रग्भिरादरात्—हे.

स्त्रियश्च रक्तवस्त्रैश्च दीक्षितव्या यथाविधि ।
अनेन सर्वकामार्थान् प्राप्नुयादविचारयन् ॥
देवीलोकं व्रजेद्वत्स यत्र भोगा निरन्तराः ।
वैशाखे पूजयेद्देवीं स्रग्भिर्वै कर्णिकारजैः ॥
नैवेद्यं सक्तवः खण्डं कन्या भोज्याश्च दक्षयेत् ।
शुभानि हेमवस्त्राणि देयानि द्विजसत्तमे ॥
देवीं तु प्रीणयेद्वत्स सर्वदेवेष्वनुत्तमाम् ।
ज्येष्ठे तु शङ्करी पूज्या रक्ताशोककरण्डकैः ॥
तथा देयं च नैवेद्यं घृतपूपाश्च कन्यकाः ।
भोजनीयास्तथा देया गोभूदानादिभिः शुभैः ॥
जलकुम्भास्तथा देयाः संपूर्णा वासिताम्भसा ।
अनेन वारुणान् भोगान् देवी क्षिप्रं प्रयच्छति ॥
आषाढे पूजयेद्देवीं पद्मैर्नीलोत्पलैर्दलैः ।
नैवेद्यं शर्कराभक्तं दद्याद्वै यवपायसम् ॥
कन्याः स्त्रियो द्विजा भोज्या दक्षयेच्च तथानघ ।
नानाहेमाङ्गरागाद्यैस्तिलभूम्यैश्च मौक्तिकैः ॥
पूज्या भगवती शक्त्या सर्वकामार्थसिद्धये ।
नन्दा सुनन्दा कनका उमा दुर्गा क्षमावती ॥
गौरी योगीश्वरी श्वेता नारायणी सुतारका ।
अम्बिकेति च नामानि श्रावणादावनुक्रमात् ॥
ये कीर्तयन्ति चोत्थाय ते नरा धूतकल्मषाः ।
भवन्ति कुरुशार्दूल पृथिव्यां धनसङ्कुलाः ॥
एतानि पथि सङ्ग्रामे रिपुपीडासु नित्यशः ।
स्मारयन्ति च दुर्गेति चण्डिकेति सुरोत्तमाः ॥

व्रतानां प्रवरं कार्यमर्धं वा पादमेव वा ।
मासं वाश्रित्य कर्तव्यं श्रावणादिक्रमेण तु ॥

[1]इति नन्दाव्रतम् ॥

## [नन्दापदद्वयव्रतम्]

[2]अतः परं प्रवक्ष्यामि नन्दादेव्याः पदव्रतम् ।
येन सा प्रीयते वत्स अचिरेण महात्मना ॥
हेमोत्थे पादुके कार्ये यथाशक्त्यनुसारतः ।
आम्रदूर्वाक्षतैर्बिल्वपत्रैः पूज्ये तु मन्त्रतः ॥
देवीं प्रपूज्य भक्त्या तु स्थण्डिले प्रतिमासु वा ।
मद्भक्ताय च विप्राय कन्यकासु निवेदयेत् ॥
मुच्यते सर्वपापेभ्यो दुर्गालोकं च गच्छति ।
ततः क्षये महाप्राज्ञ विद्याधरपतिर्भवेत् ॥
कालेनैवमिहायातः पृथिव्यां नृपसत्तम ।
जायते नात्र संदेहो ब्राह्मणेभ्यो मानवः ॥

[3]इति नन्दापदद्वयव्रतम् ॥

## [त्रिविक्रमव्रतम्]

भविष्यपुराणे—

[4]समभ्यर्च्य जगन्नाथं देवमर्कमथापि वा ।
एकमश्नाति यो नक्तं द्वितीयं ब्राह्मणार्पणम् ॥

1 इति देवीपुराणोक्तं नन्दाव्रतम्—हे.
2 हे. व्र. II., ८८५–८८६.
3 इति पद्मपुराणोक्तं नन्दापदद्वयव्रतम्—हे.
4 हे. व्र. II., ८५४–८५५.

करोति भास्करप्रीत्यै कार्तिकं मासमाप्नुयात् ।
पूर्वे वयसि यत्नेन जानताऽजानतापि वा ॥
पापमाचरितं तस्मान्मुच्यते नात्र संशयः ।
अनेनैव विधानेन मासि मार्गशिरे नरः ॥
तमभ्यर्च्यं चैकभक्तं विप्रेभ्यो यः प्रयच्छति ।
भगवत्प्रीणनार्थाय फलं तस्य शृणुष्व मे ॥
मध्ये वयसि यत्पापं योषिता पुरुषेण वा ।
कृतं तस्मात्प्रमुच्येत विविधात्पातकान्नृप ॥
तथा कृत्वैकभक्तं तु यस्तु विप्राय यच्छति ।
दिवाकरं समभ्यर्च्य पौषे मासि महीपते ॥
[1][त्रैमासिकं व्रतमिदं यः करोति नरेश्वर ।
स विष्णुप्रीणनात्पापैर्लघुभिः परिमुच्यते ॥
द्वितीये वत्सरे राजन्मुच्यते चोपपातकैः ।]
तद्वत्तृतीयेऽपि कृते महापातकनाशनम् ॥
व्रतमेतन्नरैः स्त्रीभिस्त्रिभिर्मासैरनुष्ठितम् ।
त्रिभिः संवत्सरैश्चैव प्रददाति फलं नृणाम् ॥
त्रिभिर्मासैर्व्यवस्था तु त्रिविधात्पातकान्नृप ।
त्रीणि नामानि देवस्य मोचयन्ति त्रिवार्षिकैः ॥
यतस्ततो व्रतमिदं त्रिविक्रममुदाहृतम् ।
सर्वपापप्रशमनं [2]भास्कराराधनं परम् ॥

[3]इति त्रिविक्रमव्रतम् ॥

1 Omitted in Mss; supplied from Hemādri.
2 केशवाराधनं परम्—हे.
3 इति विष्णुधर्मोक्तं त्रिविक्रमव्रतम्—हे.

## [अथ चित्रभानुपदद्वयव्रतम्]

ब्रह्मोवाच[1]—

उत्तरे त्वयने कृष्ण स्नातो नियतमानसः।
घृतक्षीरादिना देवं स्नापयेत्तिमिरापहम् ॥
चारुवस्त्रोपहारैश्च पुष्पधूपानुलेपनैः।
समभ्यर्च्य ततः सम्यग्ब्राह्मणानां च पूजनैः ॥
पदद्वयव्रतं सम्यग्गृह्णीयाद्भानुतत्परः।
वन्देत् स्नाने चित्रभानुं तथा भुञ्जन्नराधिप ॥
भुक्त्वा च चित्रभानुं च चित्रभानुं व्रजंस्तथा।
स्वपन् विबुद्धश्च सदा होमं कुर्वंस्तथार्चनम् ॥
चित्रभानोरनुदिनं करिष्ये नामकीर्तनम्।
यावदद्यादिना प्राप्तं क्रमशो दक्षिणायनम् ॥
करिष्येऽहं सदा चैवं कीर्तयिष्ये जगत्प्रभुम्।
तथा च नानृतं वक्ष्ये दुर्वचः परमात्मनः ॥
अज्ञानादथवा ज्ञानात्कीर्तयिष्याम्यहं प्रभुम्।
षण्मासानेव च जपेच्चित्रभानुमतः परम् ॥
तं स्मरन्मरणे याति यां गतिं सास्तु मे गतिः।
षण्मासाभ्यन्तरे मृत्युर्यद्येतस्मिन् भवेन्मम ॥
तन्मया भास्करस्येह स्वयमात्मा निवेदितः।
परमात्मा अपि ब्रह्मा चित्रभानुमयं परम् ॥
यन्नमस्य स्मरन् याति स मे भानुः परा गतिः।
यदि प्रातस्तथा सायं मध्याह्ने वा नृपोत्तम ॥
षण्मासाभ्यन्तरे न्यासः कृतो व्रतमयो नृप।

1 भविष्यपुराणम्, ब्राह्मपर्व, १०८, ७–२५.

तथा कुरु जगन्नाथ सर्वलोकपरायण ॥
चित्रभानो यथान्यायात् त्वत्तो भवति मे गतिः ।
एवमुच्चार्य षण्मासान् चित्रभानुमयं व्रतम् ॥
तावन्निष्पादयेद्यावत् संप्राप्ते दक्षिणायने ।
ततश्च प्रीणनं कुर्याद्यथाशक्त्या विभावसोः ॥
भोजयेद्ब्राह्मणान् दिव्यान् भौमांश्चैव सदक्षिणान् ।
पुण्यात्मनां कथां कुर्यान्मार्तण्डस्य तथाग्रतः ॥
पूजयेद्वाचकं भक्त्या यथाशक्त्या धराधर ।
एवं व्रतमिदं कृष्ण यो वाचयति मानवः ॥
नारी या देवशार्दूल मुच्यते सर्वकिल्बिषैः ।
षण्मासाभ्यन्तरे तासां मरणं यदि जायते ॥
प्राप्नोत्यनशने प्रोक्तं यत्फलं तन्न संशयः ।
यद्वयं कृष्ण पादस्य सुभक्तेन सदार्चितम् ॥
चित्रभानुपदद्वन्द्वव्रतं पापप्रणाशकम् ।
भवत्येतज्जगौ भानुः पुरा कृष्णाय पृच्छते ॥

इति चित्रभानुपदद्वयव्रतम् ॥

## [1][अथ सङ्क्रान्त्युद्यापनव्रतम्]

तत्र मत्स्यपुराणे

नन्दिकेश्वर उवाच—

अथान्यदपि वक्ष्यामि सङ्क्रान्त्युद्यापने फलम् ।
यदक्षयं परे लोके सर्वकामफलप्रदम् ॥
विषुवे चायने चापि सङ्क्रान्तिव्रतमाचरेत् ।
पूर्वेद्युरेकभक्तेन दन्तधावनपूर्वकम् ॥

1 मत्स्यपुराणम्, अ. ९८, श्लो. १-१४; व्रतराजः, पृ. ३७२; ना and उ Mss. read संक्रान्त्यायनव्रतम् ।

सङ्क्रान्तिवासरे प्रातस्तिलैः स्नानं विधीयते ।
रविसङ्क्रमणे भूमौ चन्दनेनाष्टपत्रकम् ॥
पद्मं सकर्णिकं कुर्यात् तस्मिन्नावाहयेद्रविम् ।

'चन्दनेन' रक्तचन्दनेन ॥

कर्णिकायां न्यसेत्सूर्यमादित्यं क्रमशस्ततः ॥
नमो यमार्चिषे याम्ये नमो ऋङ्मण्डलाय च ।
नमः सवित्रे नैर्ऋत्ये वारुणे तपनं पुनः ॥
वायव्ये तु भर्गं न्यस्य पुनः पुनरथार्चयेत् ।
मार्तण्डमुत्तरे विष्णुमीशाने विन्यसेत्सदा ॥
गन्धमाल्यैः फलैर्भक्ष्यैः स्थण्डिले पूजयेत्ततः ।
द्विजाय सोदकं कुम्भं घृतपात्रं हिरण्मयम् ॥
कमलं च यथाशक्त्या कारयित्वा निवेदयेत् ।
चन्दनोदकपुष्पैश्च देवायार्घ्यं न्यसेद्भुवि ॥
विश्वाय विश्वरूपाय विश्वधाम्ने स्वयंभुवे ।
नमोऽनन्त नमो धात्रे ऋक्सामयजुषां पते ॥
अनेन विधिना सर्वं मासि मासि समाचरेत् ।
वत्सरान्ते तथा कुर्यात् सर्वं द्वादश मानवः ॥
संवत्सरान्ते घृतपायसेन
समर्च्य वह्निं द्विजपुङ्गवांश्च ।
कुम्भान् पुनर्द्वादशधान्ययुक्तान्
हिरण्मयपद्मगर्भान् ॥
पयस्विनीः शीलवतीश्च कुर्यात्
हेमास्यरौप्यखुरवस्त्रयुक्ताः ।
गावोऽष्ट वा सप्त सकांस्यदोहा
मालाम्बरा वा चतुरोऽप्यशक्तः ॥

दौर्गत्ययुक्तः कपिलां तथैकां
निवेदयेद्ब्राह्मणपुङ्गवाय ।
हैमीं च दद्यात् पृथिवीं सशेषा-
माकर्षरौप्यामथवापि ताम्रीम् ॥
पैष्टीमशक्तोऽथ तिलैर्विधाय
सौवर्णसूर्येण समं प्रदद्यात् ।

'सशेषा' अनन्तोरगसहिता । 'पैष्टी' पिष्टमयी सप्तद्वीपयुक्ता ॥

न वित्तशाठ्यं पुरुषोऽत्र कुर्यात्
कुर्वन्नधो याति न संशयोऽत्र ॥
यावन्महेन्द्रप्रमुखा नरेन्द्राः
पृथ्वी च सप्ताब्धियुतात्र तिष्ठेत् ।
ततः स गन्धर्वगणाग्रशेषैः
संपूज्यते नारद नाकपृष्ठे ॥
ततस्तु कर्मक्षयमाप्य लोके
द्वीपाधिपः स्यात्कुलशीलयुक्तः ।
भवेत् सुखाढ्यङ्गवपुः सभार्यः
प्रभूतपुत्रो नृपवन्दिताङ्घ्रिः ॥

इति सङ्क्रान्त्युद्यापनव्रतम् ॥

# अथ संवत्सरव्रतानि

## [अथ सारस्वतव्रतम्]

[1]सम्यक्पृष्टं त्वया राजञ्छृणु सारस्वतं व्रतम्
यस्य संकीर्तनादेव तुष्यतीह सरस्वती ॥
यो मद्भक्तः पुमान् कुर्यादेतद्व्रतमनुत्तमम् ।
तद्वत्सरादौ संपूज्य विप्रमेनं समाचरेत् ॥
अथवादित्यवारेण ग्रहताराबलेन च ।
पायसं भोजयेद्विप्रान् कृत्वा ब्राह्मणवाचनम् ॥
शुक्लवस्त्राणि दत्वा च सहिरण्यानि शक्तितः ।
गायत्रीं पूजयेद्भक्त्या शुक्लमाल्यानुलेपनैः ॥
यथा न देवि भगवान् ब्रह्मलोकपितामहः ।
त्वां परित्यज्य संतिष्ठेत् तथा भव वरप्रदा ॥
वेदशास्त्राणि सर्वाणि नृत्यगीतादिकं च यत् ।
न विहीनस्तथा देवि तथा मे सन्तु सिद्धयः ॥
लक्ष्मीर्मेधा वरा पुष्टिस्तुष्टिः सृष्टिः प्रभा मतिः ।
एताभिः पाहि चाष्टाभिस्तनुभिर्मां सरस्वति ॥
एवं संपूज्य गायत्रीं वीणादण्डेन मण्डिताम् ।
शुक्लपुष्पाक्षतैर्भक्त्या सकमण्डलुपुष्टिकाम् ॥
मौनव्रतेन भुञ्जीयात् सायं प्रातश्च धर्मवित् ।
पञ्चम्यां प्रतिपक्षं च पूजयेच्छन्दवासिनीम् ॥

1 मत्स्यपुराणम्, अ. ६६, श्लो. ३–१८; भविष्यपुराणम्, उत्तरपर्व, ३५, ३–१९.

तथैव तण्डुलप्रस्थं घृतपात्रेण संयुतम् ।
क्षीरं दद्याद्धिरण्यं च गायत्री प्रीयतामिति ॥
संध्यायां च तथा मौनमेतत्कुर्वन् समाचरेत् ।
नान्तरा भोजनं कार्यं यावन्मासास्त्रयोदश ॥
समाप्ते च व्रते दद्याद्भोजनं तिलतण्डुलैः ।
पूर्णं कुम्भं वस्त्रयुग्मं गां च विप्राय शोभनाम्
देव्या वितानघण्टां च सितनेत्रपटान्विताम् ।
चन्दनं वस्त्रयुग्मं च दध्यन्नं शिखरं पुनः ॥
तथोपदेष्टारमपि भक्त्या संपूजयेद्गुरुम् ।
वित्तशाठ्येन रहितो वस्त्रमाल्यानुलेपनैः ॥
अनेन विधिना यस्तु कुर्यात्सारस्वतं व्रतम् ।
विद्यावानर्थयुक्तश्च लक्ष्मीयुक्तश्च जायते ॥

इति सारस्वतव्रतम् ॥

## [अथ फलत्यागव्रतम्]

[1]मत्स्यपुराणे

नन्दिकेश्वर उवाच—

मार्गशीर्षे शुभे मासि तृतीयायां मुने व्रतम् ।
द्वादश्यामथवाष्टम्यां चतुर्दश्यामथापि वा ॥
आरभेच्छुक्लपक्षस्य कृत्वा ब्राह्मणवाचनम् ।
अन्येष्वपि च मासेषु पुण्येऽह्नि मुनिसत्तम ॥
सदक्षिणं पायसेन शक्तितः पूजयेद्द्विजान् ।
अष्टादशानां धान्यानामन्यत्र फलमूलकम् ॥

1 हे. व्र. II., ९०७–९०९ ; मत्स्यपुराणम्—अ. ९६, श्लो. १–२४.

वर्जयेदब्दमेकं तु विनैवौषधकारणात् ।
सवृषं काञ्चनं रुद्रं धर्मराजं च कारयेत् ॥
[1]कूष्माण्डं मातुलिङ्गं च वृन्ताकं पनसं तथा ।
आम्रातककपित्थानि कालिङ्गमथ वारुकम्[2] ॥
श्रीफलाश्वत्थबदरं जम्बीरं कदलीफलम् ।
कर्मारं दाडिमं शक्त्या [3]कलधौतानि षोडश ॥
मूलकामलकं जम्बूतिन्तिडीकरमर्दकम् ।
तक्कोलैलाकतुण्डीरं करीरकुटजं शमी ॥
उदुम्बरं नारिकेलं द्राक्षाथ बृहतीद्वयम् ।
रौप्याणि कारयेद्भक्त्या फलानीमानि षोडश ॥
ताम्रं तालफलं कुर्यादगस्तिफलमेव च ।
पिण्डीरकाश्मर्यफलं तथा सूरणकन्दकान् ॥
रक्तालुकाकन्दकं च कनकाभीरुचिञ्चिकम्[4] ।
चित्रवल्लीफलं तद्वत् कूटशाल्मलिकाफलम् ॥
ग्राम्यनिष्पावमधुकवटेङ्गुदपटोलकम् ।
ताम्राणि षोडशैतानि कारयेद्बुद्धितो नरः ॥
उदकुम्भद्वयं कृत्वा धान्योपरि सवाससम् ।
[5]भक्ष्यपात्रद्वयोपेतं हैमरुद्रवृषान्वितम् ॥
धेन्वा सहैव शान्ताय विप्रायाथ कुटुम्बिने ।
सपत्नीकाय संपूज्य पुण्येऽह्नि विनिवेदयेत् ॥
यथा फलेषु सर्वेषु वसन्त्यमरकोटयः ।

1 कुष्ठाङ्गं—ना.
2 कालिङ्गमपवारकम्—उ.
3 घनधौतानि—उ.
4 केतकाम्लीकचिर्भटम्—ना ; कनकाह्वं च चिर्भिटम्—मु. म. पु.
5 भक्ष्यपात्रत्रयोपेतं यमरुद्रवृषान्वितम्—मु. म. पु.

तथा सर्वफलत्यागव्रताद्भक्तिः शिवेऽस्तु मे ॥
यथा शिवश्च धर्मश्च सदानन्तफलप्रदौ ।
तद्युक्तफलदानेन तौ स्यातां मे वरप्रदौ ॥
[1]यथा फलानां कामाः स्युः शिवभक्तेषु सर्वदा ।
तथानन्तफलावाप्तिर्मेऽस्तु जन्मनि जन्मनि ॥
यथाभेदेन[2] पश्यामि शिवविष्णवर्कपद्मजान् ।
तथा ममास्तु विश्वात्मा शंकरः शंकरः सदा ॥
इति दत्वा तु तत्सर्वमलङ्कृत्य च भूषणैः ।
शक्तिश्चेच्छयनं दद्यात्सर्वोपस्करसंयुतम् ॥
अशक्तस्तु फलान्येव यथोक्तानि विधानतः ।
तथोदकुम्भयुग्मं च शिवधर्मौ च काञ्चनौ ॥
विप्राय दत्वा भुञ्जीत वाग्यतः स्तेयवर्जनम्[3] ।
अन्यानपि यथाशक्त्या भोजयेद्द्विजपुङ्गवान्[4] ॥
एतद्भागवतानां च सौरवैष्णवयोगिनाम् ।
शुभं सर्वफलत्यागव्रतं वेदविदो विदुः ॥
नारीभिश्च यथाशक्त्या कर्तव्यं द्विजपुङ्गव ।
एतस्मान्न परं किंचिदिह लोके परत्र च ॥
व्रतमेतन्मुनिश्रेष्ठ यदनन्तफलप्रदम् ।
[5]सौवर्णताम्ररौप्येषु यावन्तः परमाणवः ॥
भवन्ति चूर्ण्यमानेषु [6]फलेषु मुनिसत्तम ।
तावद्युगसहस्राणि रुद्रलोके महीयते ॥

1 ना Ms. omits the following two lines.
2 भेदं न—मु. म. पु.
3 स्तेनवर्जितम्—उ.
4 द्विजपुंगवान्—उ.
5 सौरं तु ताम्र०—ना.
6 तथा च—ना.

एतत्समस्तकलुषापहरं जनाना-
माजीवनाय मनुजेषु च सर्वदा स्यात् ।
जन्मान्तरेषु न च पुत्रवियोगदुःख-
माप्नोति धाम च पुरंदरदेवजुष्टम् ॥

इति [illegible] ॥

## अथ षष्टिव्रतानि

[1]तत्र मत्स्यपुराणे

नन्दिकेश्वर उवाच—

अथातः संप्रवक्ष्यामि व्रतषष्टिकमुत्तमम् ।
रुद्रेणाभिहितं देव्या महापातकनाशनम् ॥

### [2]१. देवव्रतम्

नक्तमब्दं चरित्वा तु गवा सार्धं कुटुम्बिने ।
हैमं चक्रं त्रिशूलं च दद्याद्विप्राय वाससी ॥
[3]शिवरुद्रौ नतोऽस्मीति [illegible] स मोदते ।
एतद्देवव्रतं नाम महापातकनाशनम् ॥

### २. रुद्रव्रतम्

यस्त्वेकभक्तेन समां क्षपेद्धैमवृषान्विताम् ।
धेनुं तिलमयीं दद्यात् स पदं याति शाङ्करम् ॥
[4]एतद्रुद्रव्रतं नाम पापशोकविनाशनम् ।

1 मत्स्यपुराणम्, अ. १०१, श्लो. १–८४.

2 हे. व्र. II., ८६२.

3 शिवरूपस्ततोऽस्मीति—मु. म. पु; प्रणम्य भक्त्या शक्तिं च प्रीयेतां शिवकेशवौ—हे.

4 एतद्रुद्रपदं—ना.

### ३. नीलव्रतम्

यस्तु नीलोत्पलं हैमं शर्करापात्रसंयुतम् ।
एकान्तरितनक्ताशी समान्ते वृषसंयुतम् ॥
वैष्णवं स पदं याति [1]नीलव्रतमिदं शुभम् ।

### ४. प्रीतिव्रतम्

आषाढादिचतुर्मासमभ्यङ्गं वर्जयेन्नरः ।
भोजनोपस्करं दद्यात्स याति भवनं हरेः ॥
लोके प्रीतिकरं नृणां प्रीतिव्रतमिहोच्यते ।

### ५. गौरीव्रतम्

वर्जयित्वा मधौ यस्तु दधिक्षीरघृतेक्षुकान् ।

'मधौ' चैत्रे ॥

दद्याद्वस्त्राणि सूक्ष्माणि रसपात्रैर्युतानि च ॥
संपूज्य विप्रमिथुनं गौरी मे प्रीयतामिति ।
एतद्गौरीव्रतं नाम भवानीलोकदायकम् ॥

### ६. कामव्रतम्

पुष्यादौ तु त्रयोदश्यां कृत्वा नक्तं मधौ पुनः ।
अशोकं काञ्चनं दद्यादिक्षुयुक्तं दशाङ्गुलम् ॥
विप्राय वस्त्रसंयुक्तं प्रद्युम्नः प्रीयतामिति ।
कल्पं विष्णुपुरे स्थित्वा विशोकः स्यात्पुनर्नृप ॥
एतत्कामव्रतं नाम सदा शोकविनाशनम् ।

### ७. शिवव्रतम्

आषाढादिव्रतं यस्तु [2]वर्जयेन्नखकर्तनम् ।
वार्ताकं च चतुर्मासं मधुसर्पिर्घटान्वितम्

1 लीलाव्रतमिदं—मु. म. पु.
2 वर्जयेदथ कर्तनम्—ना.

कार्तिक्यां तत्पुनर्हैमं ब्राह्मणाय निवेदयेत् ।

'आषाढादि' आषाढोपक्रमम्, आषाढ्यां नियमं गृह्णीयादित्यर्थः ॥

रुद्रलोकमवाप्नोति शिवव्रतमिदं स्मृतम् ॥

## ८. सौम्यव्रतम्

वर्जयेद्यस्तु पुष्पाणि हेमन्ते शिशिरे तथा ।
पुष्पत्रयं च फाल्गुन्यां कृत्वा शक्त्या च काञ्चनम् ॥
दद्याद्द्विकालवेलायां प्रीयेतां शिवकेशवौ ।
दत्वा परं पदं याति सौम्यव्रतमिदं स्मृतम् ॥

## ९. सौभाग्यव्रतम्

फाल्गुन्यां तु तृतीयायां लवणं यस्तु वर्जयेत् ।
समाप्ते शयनं दद्याद्गृहं सोपस्करान्वितम् ॥
संपूज्य विप्रमिथुनं भवानी प्रीयतामिति ।
गौरीलोके वसेत्कल्पं सौभाग्यव्रतमुच्यते ॥

## १०. सारस्वतव्रतम्

संध्यामौनं नरः कुर्यात् [1]समान्ते घृतकुम्भकम् ।
वस्त्रयुग्मं [2]तिलघटं ब्राह्मणाय निवेदयेत् ॥
सारस्वतं पदं याति पुनरावृत्तिदुर्लभम् ।
एतत् सारस्वतं नाम [3]रूपविद्याप्रदायकम् ॥

## ११. संपद्व्रतम्

ामुपवासी भवेन्नरः ।

[1]समान्ते हेमकलशं दद्याद्धेम्ना समन्वितम्[2] ॥
स वैष्णवपदं याति लक्ष्मीवान् जन्मजन्मनि ।
एतत्संपद्व्रतं नाम सदा पापविनाशनम् ॥

## १२. आयुर्व्रतम्

[3]कृत्वा तु लेपनं शंभोरग्रतः केशवस्य च ।
यावदब्दं पुनर्दद्याद्धेनुं जलघटान्विताम् ॥
जन्मायुतं शतायुः स्यादन्ते शिवपुरं [4]लभेत् ।
एतदायुर्व्रतं नाम सदा पापविनाशनम् ॥

## १३. कीर्तिव्रतम्

अश्वत्थं भास्करं गङ्गां प्रणम्यैकत्र वाग्यतः ।
एकभक्तं नरः कुर्यादब्दमेकं विमत्सरः ॥
व्रतान्ते विप्रमिथुनं पूज्य धेनुत्रयान्वितम् ।
वृक्षं हिरण्मयं दद्यात्सोऽश्वमेधफलं लभेत् ॥
एतत्कीर्तिव्रतं नाम भूतिकीर्तिफलप्रदम् ।

## १४. सोमव्रतम्

घृतेन स्नपनं कृत्वा शंभोर्वा केशवस्य च ।
[5]अक्षतैस्तु समां कुर्यात्पद्मं [6]गोमयमण्डले ॥
[7]समान्ते हेमकलशं तिलधेनुसमन्वितम् ।
शुद्धमष्टाङ्गुलं दद्याच्छिवलोके महीयते ॥

1 समाप्ते—ना.
2 समान्ते हेमकमलं दद्याद्धेनुसमन्वितम्—मु. म. पु.
3 स राजा—मु. म. पु.
4 व्रजेत्—उ.
5 अक्षताभिः सुपुष्पाभिः कृत्वा गोमयमण्डलम्—मु. म. पु.
6 गोमण्डलेन च—ना.
7 तिलधेनुसमोपेतं समान्ते हेमपङ्कजम्—मु. म. पु.

'समां' वर्षम् ॥

सामगाय च तद्देयं सामव्रतमिहोच्यते ।

## १५. वीरव्रतम्

नवम्यामेकभक्तं तु कृत्वा कन्याश्च शक्तितः ।
[1]भोजयित्वा समां दद्याद्धेमकुम्भं सवाससी ॥
हैमं सिंहं च विप्राय दत्वा शिवपुरं व्रजेत् ।
[2]जन्मार्बुदं सुरूपः स्याच्छत्रुभिश्चापराजितः ॥
[3]एतद्वीरव्रतं नाम नारीणां च सुखप्रदम् ।

## १६. पितृव्रतम्

यावत्समां भवेद्यस्तु पञ्चदश्यां पयोव्रतः ।

'पञ्चदश्याम्' अमावास्यायाम् ॥

समान्ते श्राद्धकृद्दद्याद्गावः पञ्च पयस्विनीः ॥
वासांसि वा पिशङ्गानि जलकुम्भयुतानि च ।
स याति वैष्णवं लोकं पितॄणां तारयेच्छतम् ॥
कल्पान्ते राजराजः स्यात् पितृव्रतमिदं स्मृतम् ।

## १७. आनन्दव्रतम्

चैत्रादिचतुरो मासान् जलं दद्यादयाचितम् ।
व्रतान्ते मणिकं दद्यादन्नवस्त्रसमन्वितम् ॥
तिलपात्रं हिरण्यं च ब्रह्मलोके महीयते ।
कल्पान्ते भूपतिर्नूनमानन्दव्रतमुच्यते ॥

1 भोजयित्वासनं दद्याद्धैमकञ्चुकवाससी—मु. म. पु.
2 जन्मार्बुदस्वरूपः स्यात्—ना.
3 एतद्वारव्रतं नाम—ना.

## १८. धृतिव्रतम्

पञ्चामृतेन स्नपनं कृत्वा संवत्सरं विभोः।
वत्सरान्ते पुनर्दद्याद्धेनुं पञ्चामृतैर्युताम्॥

'पञ्चामृतम्' दधि-क्षीर-घृत-मधु-इक्षुरसाः॥
'विभोः' शङ्करस्य॥

विप्राय दद्याच्छङ्खं च स पदं याति शाङ्करम्।
राजा भवति कल्पान्ते धृतिव्रतमिदं स्मृतम्॥

## १९. अहिंसाव्रतम्

वर्जयित्वा पुमान् मांसमब्दान्ते गोप्रदो भवेत्।
तद्वद्धैमं मृगं दद्यात् सोऽश्वमेधफलं लभेत्॥
अहिंसाव्रतमित्युक्तं कल्पान्ते भूपतिर्भवेत्।

## २०. सूर्यव्रतम्

माघमास्युषसि स्नानं कृत्वा दाम्पत्यमर्चयेत्।
भोजयित्वा यथाशक्त्या माल्यवस्त्राणि भूषणैः॥
सूर्यलोके वसेत्कल्पं सूर्यव्रतमिदं स्मृतम्।

## २१. विष्णुव्रतम्

आषाढादिचतुर्मासं प्रातःस्नायी भवेन्नरः।
विप्रेषु भोजनं दत्वा कार्तिक्यां गोप्रदो भवेत्॥
स वैष्णवं पदं याति विष्णुव्रतमिदं स्मृतम्।

## २२. शीलव्रतम्

अयनादयनं यावद्वर्जयेत् क्षीरसर्पिषी।
तदन्ते पुष्पदामानि घृतधेन्वा सहैव तु॥

दत्वा शिवपुरं याति विप्राय घृतपायसम् ।
एतच्छीलव्रतं नाम चारोग्यश्रीफलप्रदम् ॥

### २३. दीप्तिव्रतम्

संध्यादीपः प्रदेयस्तु समां तैलं विवर्जयेत् ।
समान्ते दीपिकां दद्याच्चक्रशूले च काञ्चने ॥
वस्त्रयुग्मं च विप्राय स तेजस्वी भवेदिह ।
रुद्रलोकमवाप्नोति दीप्तिव्रतमिदं स्मृतम् ॥

### २४. रुद्रव्रतम्

कार्तिकादितृतीयायां प्राश्य गोमूत्रयावकम् ।
नक्तं चरेदब्दमेकमब्दान्ते गोप्रदो भवेत् ॥
गौरीलोके वसेत्कल्पं स्थित्वा राजा भवेदिह ।
एतद्रुद्रव्रतं नाम सदा कल्याणकारकम् ॥

### २५. दृढव्रतम्

ज्येष्ठमासे तु यस्तु गन्धानुलेपनम् ।
शुक्तिं गन्धभृतां दत्वा विप्राय सितवाससी ॥
वारुणं पदमाप्नोति दृढव्रतमिदं स्मृतम् ।

### २६. कान्तिव्रतम्

वैशाखे पुष्पलवणं वर्जयित्वा तु गोप्रदः ।
कृत्वा विष्णुपदे कल्पं स्थित्वा राजा भवेदिह ॥
एतत्कान्तिव्रतं नाम कान्तिकीर्तिफलप्रदम् ।

### २७. ब्रह्मव्रतम्

ब्रह्माण्डं काञ्चनं कृत्वा तिलराशिंसमन्वितम् ।
त्र्यहं तिलव्रतो भूत्वा वह्निं संतर्प्य सद्विजम् ॥

संपूज्य विप्रदाम्पत्यं माल्यवस्त्रविभूषणैः ।
शक्तितस्त्रिपलादूर्ध्वं विश्वात्मा प्रीयतामिति ॥
पुण्येऽह्नि पद्मशयनं ब्रह्म यात्यपुनर्भुवम् ।
एतद्ब्रह्मव्रतं नाम निर्वाणफलदं नृणाम् ॥

२८. धेनुव्रतम्

यश्चोभयमुखीं दद्यात्प्रभूतकनकान्विताम् ।
दिनं पयोव्रतस्तिष्ठेत् स याति परमं पदम् ॥
एतद्धेनुव्रतं नाम पुनरावृत्तिदुर्लभम् ।

२९. कल्पवृक्षव्रतम्

त्र्यहं पयोव्रतः स्थित्वा काञ्चनं कल्पपादपम् ।
पलादूर्ध्वं यथाशक्त्या तण्डुलं शूर्पसंयुतम् ॥
दत्वा ब्रह्मपदं याति [1]कल्पवृक्षव्रतं स्मृतम् ।

३०. भीमव्रतम्

मासोपवासी यो दद्याद्धेनुं विप्राय शोभनाम् ।
स वैष्णवपदं याति भीमव्रतमिदं स्मृतम् ॥

३१. धराव्रतम्

दद्याद्विंशत्पलादूर्ध्वं महीं कृत्वा तु काञ्चनीम् ।
दिनं पयोव्रतस्तिष्ठेद्रुद्रलोके महीयते ॥
धराव्रतमिदं प्रोक्तं सप्तकल्पशतानुगम् ।

३२. महाव्रतम्

माघमासेऽथ चैत्रे वा गुडधेनुप्रदो भवेत् ।
गुडव्रतस्तृतीयायां गोलोके स महीयते ॥
महाव्रतमिदं नाम परमानन्दकारकम् ।

1 कल्पव्रतमिदं—मु. म. पु.

## ३३. प्रभाव्रतम्

पक्षोपवासी यो दद्याद्विप्राय कपिलाद्वयम् ।
स ब्रह्मलोकमाप्नोति देवासुरसुपूजितः ॥
कल्पान्ते राजराजः स्यात् प्रभाव्रतमिदं स्मृतम् ।

## ३४. प्राप्तिव्रतम्

वत्सरं त्वेकभक्ताशी सभक्ष्यजलकुम्भदः ।
शिवलोके वसेत्कल्पं प्राप्तिव्रतमिदं स्मृतम् ॥

## ३५. सुगतिव्रतम्

नक्ताशी त्वष्टमीषु स्याद्वत्सरान्ते तु धेनुदः ।
पौरंदरपदं याति [1]सुगतिव्रतमुत्तमम् ॥

## ३६. वैश्वानरव्रतम्

[2]यश्चेन्धनाग्निदो विप्रे [3]वर्षादि चतुरस्त्वृतून् ।
घृतधेनुप्रदानेन स परं ब्रह्म गच्छति ॥
[4]वैश्वानरव्रतं नाम [5]सर्वपापप्रणाशनम् ।

## ३७. कृष्णव्रतम्

एकादश्यां च नक्ताशी यश्चक्रं विनिवेदयेत् ।
चैत्रे समान्ते सौवर्णं स विष्णोः पदमाप्नुयात् ॥
एतत्कृष्णव्रतं नाम कल्पान्ते राज्यलाभकृत् ।

## ३८. देवीव्रतम्

पायसाशी समान्ते तु दद्याद्विप्राय गोयुतम् ।

1 स्वगतिव्रतमुत्तमम्—ना.
2 यथेन्धनाग्नि—ना ; यश्चेन्धनानि—उ.
3 वर्षादि चतुरं क्रतून्—उ.
4 वैश्वानरपदं याति—ना.
5 शिवलोकफलप्रदम्—उ.

लक्ष्मीलोके वसेत्कल्पमेतद्देवीव्रतं स्मृतम् ॥

## ३९. भानुव्रतम्

सप्तम्यां नक्तभुग्दद्यात्समान्ते गां पयस्विनीम् ।
सूर्यलोकमवाप्नोति भानुव्रतमिदं स्मृतम् ॥

## ४०. वैनायकव्रतम्

चतुर्थ्यां नक्तभुग्दद्यादब्दान्ते हेमवारिजम् ।
व्रतं वैनायकं नाम शिवलोकप्रदायकम् ॥

## ४१. फलव्रतम्

महाफलानि यस्त्यक्त्वा चतुर्मासं द्विजातये ।
[1]इमानि कार्तिके दद्याद्गोयुगेन समं नरः ॥
एतत् फलव्रतं नाम सूर्यलोके महीयते ।
'महाफलानि' कूष्माण्डपनसादीनि ॥

## ४२. सौरव्रतम्

यश्चोपवासी सप्तम्यां समान्ते हेमपङ्कजम् ।
गावश्च शक्तितो दद्याद्धेमान्नघटसंयुताः ॥
एतत्सौरव्रतं नाम सूर्यलोकफलप्रदम् ।

## ४३. वृषव्रतम्

द्वादश [illegible] यस्तु समाप्योपोषणैः पुनः ।
गोवस्त्रकाञ्चनैर्विप्रान् पूजयेच्छक्तितो नरः ॥
परं पदमवाप्नोति वृषव्रतमिदं स्मृतम् ।

## ४४. प्राजापत्यव्रतम्

[illegible]त्लान्ते गोप्रदः कुर्याद्भोजनं शक्तितः पदम् ।

1 हैमानि—उ.

शाङ्करं याति विप्राणं प्राजापत्यमिदं स्मृतम् ॥

'भोजनं' 'विप्राणाम्' इति संबन्धः ॥

### ४५. त्र्यम्बकव्रतम्

चतुर्दश्यां समान्ते तु नक्ताशी गोयुगप्रदः ।
शैवं पदमवाप्नोति त्रैयम्बकमिदं स्मृतम् ॥

### ४६. वरव्रतम्

सप्तरात्रोषितो दद्याद्घृतकुम्भं द्विजातये ।
वरव्रतमिदं प्राहुर्ब्रह्मलोकफलप्रदम् ॥

### ४७. इन्द्रव्रतम्

[illegible]शायी वर्षासु दद्यादन्ते पयस्विनीम् ।
शक्रलोके वसेत्कल्पमिदमिन्द्रव्रतं स्मृतम् ॥

### ४८. शीलव्रतम्

अनग्निपक्वमश्नाति तृतीयायां तु यो नरः ।
गां दत्वा शिवमभ्येति पुनरावृत्तिवर्जितम् ॥
इह चानन्दकृत्पुंसां [1]शीलव्रतमिदं स्मृतम् ।

### ४९. अश्वव्रतम्

[2]हेमं पलद्वयादूर्ध्वं रथमश्वयुगान्वितम् ।
दद्यात्कृ[illegible]पवा[illegible]ः सन् दिवि कल्पशतं वसेत् ॥
कल्पान्ते राजराजः स्यादश्वव्रतमिदं स्मृतम् ।

### ५०. [illegible]म्

[illegible]मरथं दद्यात्करिभ्यां संयुतं नरः ।

1 श्रेयोव्रतमिदं—मुं. म. पु.

2 ना MS. repeats the following two lines.

तद्भूत्पलद्वयादूर्ध्वमर्कलोके [1]महीयते ॥
भवेदुपोषितो भूत्वा करिव्रतमिदं स्मृतम् ।

## ५१. सुखव्रतम्

अथवा संपरित्यज्य समान्ते गोप्रदो भवेत् ।
यक्षाधिपत्यमाप्नोति तत्सुखव्रतमुच्यते ॥

## ५२. वरुणव्रतम्

निशि कृत्वा जले वासं प्रभाते गोप्रदो भवेत् ।
वारुणं लोकमाप्नोति वरुणव्रतमुच्यते ॥

## ५३. चन्द्रव्रतम्

चान्द्रायणं च यः कुर्याद्धेमचन्द्रं निवेदयेत् ।
चन्द्रव्रतमिदं प्रोक्तं चन्द्रलोकफलप्रदम् ॥

## ५४. रुद्रव्रतम्

ज्येष्ठे पञ्चतपाः सायं हेमधेनुप्रदो दिवम् ।
यावत् षष्ठीत्रयोदश्यो रुद्रव्रतमिदं स्मृतम् ॥

## ५५. भवानीव्रतम्

सकृन्नक्तव्रतं कुर्यात्तृतीयायां शिवालये ।
समान्ते धेनुदो भक्त्या भवानीव्रतमुच्यते ॥

## ५६. पवनव्रतम्

माघे मास्यार्द्रवासाः स्यात्सप्तम्यां गोप्रदो भवेत् ।
दिवि कल्पमुषित्वा तु राजा स्यात्पवनव्रतम् ॥

## ५७. धामव्रतम्

त्रिरात्रोपोषितो दद्यात्फाल्गुन्यां भवनं शुभम् ।

1 वसेत्सदा—उ.

आदित्यलोकमाप्नोति धामव्रतमिदं स्मृतम् ॥

### ५८. इन्दुव्रतम्

त्रिसंध्यं पूज्य दाम्पत्यमुपवासी विभूषणैः ।
दद्याद्यः समवाप्नोति [1]मोक्षमिन्दुव्रतादिकम् ॥

### ५९. सोमव्रतम्

दत्वा सितद्वितीयायामिन्दोर्लवणभोजनम् ।
समान्ते गोप्रदो याति विप्राय शिवमन्दिरम् ॥
कल्पान्ते राजराजः स्यात्सोमव्रतमिदं स्मृतम् ।

### ६०. विश्वव्रतम्

दशम्यामेकभक्ताशी समान्ते दशधेनुदः ।
गिरिं च काञ्चनीं दद्याद्ब्रह्मणेऽधिपतिर्भवेत् ॥
एतद्विश्वव्रतं नाम महापातकनाशनम् [2] ।

इति षष्टिव्रतानि ॥

---

1 मोक्षमिन्द्रव्रतादिह—मु. म. पु.

2 The printed Matsyapurāṇa adds:
यः पठेच्छृणुयाद्वापि व्रतषष्टिमनुत्तमाम् ।
मन्वन्तरशतं सोऽपि गन्धर्वाधिपतिर्भवेत् ॥
षष्टिव्रतं नारद पुण्यमेतत्तवोदितं विश्वजनीनमन्यत् ।
श्रोतुं तवेच्छा तदुदीरयामि प्रियेषु किं वाऽकथनीयमस्ति ॥

# अथ प्रकीर्णव्रतानि

तत्र वराहपुराणे—

एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
शुक्ले वा यदि कृष्णे वा तद्व्रतं वैष्णवं महत् ॥
एतद्विद्वान् सुघोराणि हन्ति पापानि पार्थिव ।
त्रयोदश्यां तु नक्तेन धर्मव्रतमिदं स्मृतम् ॥
शुक्लपक्षे फाल्गुनस्य तदारभ्य विचक्षणः ।
रौद्रव्रतं चतुर्दश्यां कृष्णपक्षे विशेषतः ॥
तं माघमासादारभ्य पूर्णं संवत्सरं नृप ।
इन्द्रव्रतं पञ्चदश्यां शुक्लायां नक्तभोजनात् ॥
पितृव्रतममावास्यामिति बीजं तवोदितम् ।
दश पञ्च च वर्षाणि य एवं कुरुते नृप ॥
तिथिव्रतानि कस्तस्य फलं ब्रूते प्रमाणतः ।
अश्वमेधसहस्राणि राजसूयशतानि च ॥
इष्टानि तेन राजेन्द्र कल्पोक्ताः क्रतवस्तथा ।
एकमेव व्रतं हन्ति कृतं पापानि नित्यशः ॥
यः पुनः सर्वमेवैतत् कुर्यान्नरवरात्मज ।
स शुद्धो विरजान् लोकानाप्नोति सकलान्नृप ॥

# [महातपोव्रतानि]

**स्कन्दपुराणे—**

अहोरात्रं तु यो देव्याः कुर्यादेकं नरोत्तम ।
[1]दशानां स सुवर्णानां फलमाप्नोति शोभनम् ॥

'सुवर्णानां' सुवर्णदानस्य 'फलं' इत्यर्थः ॥

मासे मासे त्वहोरात्रं यः करोति नरोत्तमः ।
स तेन कर्मणा युक्तः सर्वपापविवर्जितः ॥
न याति नरकं सत्यं यमं च न (स) पश्यति ॥

**तथा—**

[2]मासे मासे तु यः कुर्यात्त्रिरात्रक्षपणं व्रतम् ।
कौबेरलोकमासाद्य स विन्देत्परमं पदम् ॥
चतुर्थेऽहनि यो भुङ्क्ते [3]प्रयतात्मा शुचिर्नरः ।
गान्धर्वं स पदं प्राप्य मोदते शक्रवद्दिवि ॥
पञ्चमेऽहनि यो भुङ्क्ते प्रतिमासमतन्द्रितः ।
स मुक्तः सर्वपापैस्तु स गच्छेद्दिवमूर्जितः ॥
यो भुङ्क्ते दिवसे षष्ठे नित्यं [4]नियमवान् शुचिः ।
वारुणं लोकमासाद्य स [5]याति परमं पदम् ॥
सप्तमेऽहनि यो भुङ्क्ते [6]जितद्वन्द्वो दृढव्रतः ।
[7]आदित्यलोकमाप्नोति सोऽपि विन्देन्महाव्रतम्[8] ॥

1 The following three lines are not found in ना MS.
2 हे. व्र. II., ९१७–९१९.
3 व्रतवांश्च—हे.
4 नियतवत्स्न्—ना.
5 विन्देत्—हे.
6 द्विजद्वन्द्वे—उ.
7 The following three lines are not found in ना MS.
8 आदित्यलोकमासाद्य सोऽपि विन्देन्महाश्रियम्—हे.

[1]'जितद्वन्द्वः' आतपादिदुःखसहिष्णुः।

अष्टमेऽहनि यो भुङ्क्ते जितद्वन्द्वो दृढव्रतः ॥
वैष्णवं लोकमासाद्य स भवेत्परमद्युतिः ।
नवमेऽहनि यो भुङ्क्ते नरो [2]नियमवान् शुचिः ॥
स वसूनां प्रियो भूत्वा वसते [3]वसुभिः सह ।
दशमेऽहनि यो भुङ्क्ते द्वादशाहफलं लभेत् ॥
[4]अश्विभ्यां स समो भूत्वा [5]सूर्यवज्ज्वलते सदा ।

'द्वादशाहः' क्रतुविशेषः ॥

एकादशे तु यो भुङ्क्ते दिवसे मानवः सदा ॥
एकादशाहं संप्राप्य स रुद्रगणतां लभेत् ।
यो द्वादशे तु दिवसे भुङ्क्ते देवि सदा नरः ॥
द्वादशाहं तु संप्राप्य शक्रलोके महीयते ।
त्रयोदशे तु यो नित्यमश्नाति दिवसे नरः ॥
वसेत्स भार्गवं स्थानं प्राप्य दिव्यसुखान्वितम् ।
[6]अश्नन् चतुर्दशे नित्यं दिवसांस्तु क्षपेन्नरः ॥
[7]तौष्टिकं लोकमासाद्य भवेद्गणपतिर्नरः ।

'तौष्टिकम्' दिव्यम् ॥

अर्धमासं क्षपेद्यस्तु नित्यमेव [8]ह्यतन्द्रितः ॥

1 'जितद्वन्द्वः' सहिष्णुः—हे.
2 नियतवान्—ना ; नियममास्थितः—हे.
3 सुरभिः—ना.
4 अश्विनां समरे भूत्वा—ना.
5 अव्ययं खेलते सदा—हे.
6 चतुर्दशे तु यो नित्यं दिवसांस्तु—ना, उ ; चतुर्दशे तु दिवसे नित्यमश्नाति यो नरः—हे.
7 स वसेद्रुद्रलोके तु शिवसायुज्यतां व्रजेत्—हे.
8 जितेन्द्रियः—हे.

देवराजेन तुल्योऽसौ भूत्वा स्वर्गे तु तिष्ठति ।
यस्तु मासं क्षपेद्धीरो जितक्रोधो जितेन्द्रियः ॥
स विमानेन दिव्येन अप्सरोभिः समन्वितः ।
सर्वलोकेषु वसते [1]बहून्यब्दयुतानि च ॥
ततो ब्रह्मासनं प्राप्य ब्रह्मणा च सुपूजितः ।
ब्रह्मलोके निवसते यथा ब्रह्मा नरोत्तम ॥

महाभारते—

[2]मासि मासि त्रिरात्राणि कृत्वा वर्षाणि द्वादश ।
गणाधिपत्यमाप्नोति निःसपत्नमकण्टकम्[3] ॥
यस्तु संवत्सरं पूर्णमेकाहारो भवेन्नरः ।
अतिरात्रस्य यज्ञस्य [4]फलं स समुपाश्नुते ॥
दश वर्षसहस्राणि स्वर्गलोके महीयते ।
[5]तत्क्षयादिह चागत्य माहात्म्यं प्रतिपद्यते ॥
यस्तु संवत्सरं पूर्णं चतुर्थं भक्तमश्नुते ।
अहिंसानिरतो नित्यं [6]सत्यवाङ्नियतेन्द्रियः ॥
वाजपेयस्य यज्ञस्य [7]फलं प्राप्नोति वै नरः ।
त्रिंशद्वर्षसहस्राणि [8]स्वर्गे च स महीयते ॥

'चतुर्थं भक्तमश्नुते' उपोष्य परेऽहनि न भुङ्क्ते इत्यर्थः ॥

1 जन्मान्यष्टायुतानि च—हे.
2 हे. व्र. II., ९१९—९२१.
3 अनाविलम्—हे.
4 समं फलमुपाश्नुते—हे.
5 Line omitted in ना MS.
6 सत्यवाग्विजितेन्द्रियः—हे.
7 फलं प्राप्नुवते नरः—ना ; स फलं समुपाश्नुते—हे.
8 वर्षाणि दिवि मोदते—हे.

[1]षष्ठकाले तु कौन्तेय नरः संवत्सरं क्षपेत् ।

'षष्ठकाले' भुङ्क्ते इति शेषः ॥

अश्वमेधस्य[2] यज्ञस्य फलं प्राप्नोति मानवः ॥
चक्रवाकप्रयुक्तेन[3] विमानेन स गच्छति ।
चत्वारिंशत्सहस्राणि दिवमावसते च सः[4] ॥
[5][पक्षे पक्षे गते राजन् योऽश्नीयाद्वर्षमेव तु ।
षण्मासानशनं तस्य भगवानङ्गिरा ब्रवीत् ॥
षष्टिर्वर्षसहस्राणि दिवमावसते स च सः ।]

'अश्नीयात्' द्वितीये पक्षे सर्वदिनेष्वित्यर्थः ॥

वीणानां वल्लकीनां च वेणूनां च विशांपते ॥
सुघोषैर्मधुरैः शब्दैः सुसुप्तः प्रतिबुध्यते ।
संवत्सरमिहैकं तु मासि मासि पिबेत् पयः ॥
फलं विश्वजितः स्फीतं प्राप्नोति स नरोत्तमः ।
सिंहव्याघ्रादियुक्तेन स विमानेन गच्छति ॥
शतं चाप्सरसः कन्या[6] रमयन्ति नरं तथा ।
सप्ततिं च सहस्राणि वर्षाणां दिवि मोदते ॥
मासादूर्ध्वं नरव्याघ्र नोपवासो विधीयते ।

युधिष्ठिर उवाच—

यो दरिद्रैरपि विधिः शक्यः प्राप्तुं सदा भवेत् ।
तुल्यो यज्ञफलैरेतैस्तन्मे ब्रूहि पितामह ॥

1 अष्टमेन तु भक्तेन जीवेत्संवत्सरं नरः—हे.
2 गवां मेधस्य—हे.
3 हंससारसयुक्तेन—हे.
4 पञ्चाशत्तु सहस्राणि वर्षाणि दिवि मोदते—हे.
5 Portion in brackets omitted in ना Ms ; supplied from Hemādri.
6 शतं चाष्टौ सुरकन्या—ना.

भीष्म उवाच—

यस्तु कल्यं तथा सायं भुञ्जानो नान्तरा पिबेत् ।
अहिंसानिरतो नित्यं यजानो जातवेदसम् ॥[1]

'पिबेत्' उदकमपीति शेषः ॥

षड्भिरेव तु वर्षैः स सिध्यते नात्र संशयः ।
देवस्त्रीणामधीवासे नृत्यगीतनिनादिते ॥
प्राजापत्ये वसेत्पद्मं वर्षाणामग्निसन्निभे ।

'पद्मं' कोटिशतम् ॥

त्रीणि वर्षाणि सततं यः प्राश्नोत्येकभोजनम् ॥
धर्मपत्नीरतो नित्यमग्निष्टोमफलं लभेत् ।
द्वितीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ॥
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ।
[[2]यज्ञं बहुसुवर्णं यो वासवप्रियमाहरेत् ॥
सत्यवाग्दानशीलश्च ब्रह्मण्यश्चानसूयकः ।
क्षान्तो दान्तो जितक्रोधो यत्फलं समवाप्नुयात् ॥
पाण्डुराभप्रतीकाशे विमाने हंसलक्षणे ।
द्वे समाप्ते ततः पद्मे सोऽप्सरोभिर्वसेत्सह ॥

'समाप्ते' परिपूर्णे ॥

तृतीये दिवसे यस्तु प्राश्नीयादेकभोजनम् ।

1 Hemādri adds :
यज्ञं बहुसुवर्णं यो वासवप्रियमाहरेत् ।
सत्यवाग्दानशीलश्च ब्रह्मशासुनसूचकः ॥'
क्षान्तो दान्तो जितक्रोधो यत्फलं समवाप्नुयात् ।
पाण्डुराभप्रतीकाशें विमाने हंसलक्ष्णे ॥

2 Portion in brackets omitted in ना Ms; supplied from Hemādri.

सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥]
अग्निकार्यपरो नित्यं नित्यं कालप्रबोधितः ।
अतिरात्रस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥
सप्तर्षीणां सदा लोके सोऽप्सरोभिर्वसेत्सह ।
निवर्तनं च तत्रास्य त्रीणि पद्मानि वै विदुः ॥

'आस्य' स्थित्वा ॥

दिवसे यश्चतुर्थे तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥
वाजपेयस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।
सागरस्य च पर्यन्तं [1]वासवं लोकमावसेत् ॥
[2]देवराजस्य च क्रीडां नित्यकालमवेक्षते ।

'सागरस्य च पर्यन्तं' समुद्रसंख्याविशेषान्तम् ॥

दिवसे पञ्चमे यस्तु प्राश्नीयादेकभोजनम् ॥
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
[3]अलुब्धः सत्यवादी च ब्रह्मण्यश्चाविहिंसकः ॥
असूयापापरहितो द्वादशाहफलं लभेत् ।
जाम्बूनदमयं दिव्यं विमानं हंसलक्षणम् ॥
सूर्यमालासमाभासमारोहेत् पाण्डुरं गृहम् ।
आवर्तनानि चत्वारि तुलापद्मानि द्वादश ॥
शराग्निपरिमाणं च तत्रासौ वसते सुखम् ।

'आवर्तनानि' मन्वन्तराणि । तुलापद्मानि शतं प्रमाणानि । 'शराग्निपरिमाणम्' शराः पञ्च, अग्नयस्त्रयः । इदमपि परिमाणं मन्वन्तराणामेव ॥

1 सर्वलोके च वेशयेत्—हे.
2 Line omitted in ना Ms.
3 The following three lines are omitted in ना Ms.

दिवसे यस्तु षष्ठे तु मुनिः प्राश्नीत भोजनम् ॥
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
सदा त्रिषवणस्नायी ब्रह्मचार्यनसूयकः ॥

'मुनिः' संयतवाक् ॥

[1][गवां मेधस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ।]
तथैवाप्सरसामङ्के सुषुप्तः प्रतिबुध्यते ॥
नूपुराणां निनादेन मेखलानां च निःस्वनैः ।
कोटीः सहस्रवर्षाणां युगकोटिशतानि च ॥
पद्मान्यष्टादश तथा पताके द्वे तथैव च ।
अयुतानि च पञ्चाशदृक्षचर्मशतस्य च ॥
लोमप्रमाणेन समं ब्रह्मलोके महीयते ।

'पताका' संख्याविशेषः ॥

दिवसे सप्तमे यस्तु प्राश्नीयादेकभोजनम् ॥
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
सरस्वतीं गोपयानो ब्रह्मचर्यं समाचरेत् ॥
सुमनो वर्णकं चैव मधु मांसं च वर्जयेत् ।
पुरुषो मरुतां लोकमिन्द्रलोकं च गच्छति ॥
तत्र तत्र च सिद्धार्थो देवकन्याभिरर्च्यते ।
फलं बहुसुवर्णस्य दानस्य लभते नरः ॥
संख्यामतिगुणां चापि तेषु लोकेषु मोदते ।

[2]'सरस्वतीं गोपयानः' वाचं नियच्छन् । 'वर्णकम्' कुङ्कुमादि । 'अतिगुणां' अतिक्रान्तगुणां, अपरिमितामिति यावत् ॥

1 Line omitted in ना and ङ Mss; supplied from Hemādri.

2 Comment reproduced by Hemādri as usual; but found corrupt in the printed edition.

यस्तु संवत्सरं पूर्णं भुङ्क्तेऽहन्यष्टमे नरः ॥
देवकार्यपरो नित्यं जुह्वानो जातवेदसम् ।
पुण्डरीकस्य यज्ञस्य फलं प्राप्नोत्यनुत्तमम् ॥
पद्मवर्णनिभं चैव विमानमधिरोहति ।
कृष्णाः कनकगौराश्च नार्यः श्यामास्तथैव च ॥
वयोरूपसमायुक्ता लभते नात्र संशयः ।
यस्तु संवत्सरं भुङ्क्ते नवमे च परेऽहनि ॥
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
अश्वमेधस्य यज्ञस्य फलमाप्नोति मानवः ॥
पुण्डरीकप्रभासं च विमानं लभते नरः ।
दीप्तः सूर्याग्नितेजोभिर्दिव्यमालाभिरेव च ॥
नीयते रुद्रकन्याभिः सोऽन्तरिक्षं सनातनम् ।
अष्टादश सहस्राणि वर्षाणां कल्पमेव च ॥
कोटीशतसहस्रं च तेषु लोकेषु मोदते ।
यस्तु संवत्सरं भुङ्क्ते दशाहे वै गते गते ॥
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
[1]'गते' प्राप्ते ॥

तथा—

अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
ब्रह्मकन्यानिवासे च सर्वभूतमनोहरे ॥
रूपवत्यश्च तं कन्या रमयन्ति सदा नरम् ।

1 Hemādri reads :
गते प्राप्ते तथा ब्रह्मकन्या चामरवीजिता ।
कुरुते तत्र सा क्रीडां सर्वभूतमनोहरे ॥
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
रूपवत्यश्च etc.

एकादशे तु दिवसे यः प्राप्ते प्राशते हविः ॥
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ।
परस्त्रियो नाभिलषेत् वाचा च मनसापि वा ॥
अनृतं च न भाषेत मातापित्रोः कृते अपि ।
अभिगच्छेन्महादेवं विमानस्थं महाबलम् ॥
[1]कुमार्यः काञ्चनाभासा रूपवत्यो नयन्ति तम् ।
रुद्राणां तमधीवासं दिवं दिव्यं मनोरमम् ॥
वर्षाण्यपरिमेयानि युगान्ताग्निसमप्रभः ।
कोटीशतसहस्रं च कोटीशतशतानि च ॥
रुद्रं नित्यं प्रणमते देवदानवसंमतः ।
स तस्मै कुशलं प्राप्तो दिवसे दिवसे भवेत् ॥
दिवसे द्वादशे यस्तु प्राप्ते वै प्राशते हविः ।
[2][सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥
आदित्यद्वादशाभासं विमानं सोऽधिरोहति ।
अष्टमहर्द्धिसंयुक्तं ब्रह्मलोके प्रतिष्ठितम् ॥
नित्यमावसथं प्राप्य नरनारीसमाकुलम् ।
त्रयोदशे तु दिवसे यः प्राप्ते भुञ्जते हविः ॥
सदा द्वादशमासान्वै देवसत्रफलं लभेत् ।]
रत्नपद्मोदयं नाम[3] विमानं साधयेन्नरः ॥
तत्र शङ्कुं पताकां च युगान्ते कल्पमेव च ।
युतायुतं तथा पद्मं समुद्रं च तथा वसेत् ॥

'शङ्कुपताका'प्रभृतयः संख्याविशेषाः ॥

1 Line omitted by Hemādri.

2 Portion in brackets omitted in ना Ms; supplied from Hemādri

3 कोटीशतसहस्राणि—ना.

गीतगन्धर्वघोषैश्च भेरीप्रणवनिःस्वनैः ।
सदा प्रमुदितस्ताभिर्देवकन्याभिरीड्यते ॥
चतुर्दशे तु दिवसे यः प्राप्ते प्राशते हविः ।
[1]सदा द्वादश मासान्वै महामेधफलं लभेत् ॥
अनिर्देश्यवयोरूपा देवकन्याः स्वलङ्कृताः ।
पृष्ठतश्चामरधरा[2] विमानैरनुयान्ति तम् ॥[3]
देवकन्यानिवासे च तस्मिन्वसति मानवः ।
जाह्नवीवालुकाकीर्णे पूर्णं संवत्सरं नरः ॥
यस्तु पक्षे गते भुङ्क्ते ह्येकभक्तो जितेन्द्रियः ।
सदा द्वादशमासांस्तु जुह्वानो जातवेदसम् ॥
राजसूयसहस्रस्य फलं प्राप्नोत्यनुत्तमम् ।
यानमारोहते दिव्यं हंसबर्हिणसेवितम् ॥
[4][मुनिमण्डलकैश्चित्रं जातरूपसमावृतम् ।
दिव्याभरणशोभाभिर्वरस्त्रीभिरलंकृतम् ॥
एकस्तम्भं चतुर्द्वारं सप्तभौमं सुमङ्गलम् ।
वैजयन्तीसहस्रैश्च शोभितं गीतनिःस्वनैः ॥
दिव्यं दिव्यगुणोपेतं विमानमधिरोहति ।]
वसेद्युगसहस्रं च खड्गकुञ्जरवाहनः ॥
षोडशे दिवसे यस्तु संप्राप्ते प्राशते हविः ।
सदा द्वादशमासान्वै सोमयज्ञफलं लभेत् ॥

1 प्रदत्वा दश—ना.

2 मृष्टतप्ताङ्गदधराः—हे.

3 Hemādri adds :
कलहंसविनिर्घोषैर्नूपुराणां च निःस्वनैः ।
काञ्चीनां च समुत्कर्षैस्तत्र तत्र विबोध्यते ॥

4 Portion in brackets omitted in ना and ड Mss ; supplied from Hemādri.

सोमकन्यानिवासेषु सोऽध्यावसति नित्यशः ।
सौम्यगन्धानुलेपश्च [1]सेव्यतेऽप्सरसां गणैः ॥
[2][सुदर्शनाभिर्नारीभिर्मधुराभिस्तथैव च ।
अर्च्यते वै विमानस्थः कामभोगैश्च सेव्यते ॥]
फलं पद्मशतं कल्पं महाकल्पशताधिकम् ।
आवर्तनानि चत्वारि साधयेच्चाप्यसौ नरः ॥
दिवसे सप्तदशमे यः प्राप्ते प्राशते हविः ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥
स्थानं वारुणमैन्द्रं वा रौद्रं वाप्यधिगच्छति ।
मारुतौशनसं चैव ब्रह्मलोकं च गच्छति ॥
तत्र दैवतकल्पाभिरासनेनोपचर्यते ।
भूर्भुवं चापि देवर्षिं विश्वरूपमवेक्षते ॥[3]

'भूर्भुवं' ब्राह्मणम् ॥

चन्द्रादित्यावुभौ यावद्गगने चरतः प्रभो ।
तावच्चरत्यसौ वीरः शुद्धामृतरसायनः ॥
अष्टादशे तु दिवसे प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै सप्तलोकान् स पश्यति ॥
रथैः सनन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते ।
देवकन्याधिरूढैश्च भ्राजमानैरलङ्कृतैः ॥[4]

1 कामचारगतिर्भवेत्—उ, हे.

2 Portion in brackets omitted in ना Ms; supplied from उ Ms.

3 Hemādri adds :
तत्र देवाधिदेवस्य कुमार्यो रमयन्ति तम् ।
द्वात्रिंशद्रूपधारिण्यो मधुराः समलंकृताः ॥

4 Hemādri adds :
व्याघ्रसिंहप्रयुक्तं च मेघस्वननिनादितम् ।

विमानमुत्तमं दिव्यं सः स्वयं ह्यधिरोहति ।
तत्र कल्पसहस्रं च क्रान्ताभिः सह मोदते ॥
सुधारसं च भुञ्जीतामृतोपममनुत्तमम् ।
एकोनविंशे दिवसे यो भुङ्क्ते ह्येकभोजनम् ॥
सदा द्वादशमासान्वै सप्तलोकान् स पश्यति ।
उत्तमं लभते स्थानं सोऽप्सरोगणसेवितम् ॥[1]
तत्रामरवरस्त्रीभिर्मोदते विगतज्वरः ।
दिव्याम्बरधरः श्रीमानयुतानां शतं समाः ॥
पूर्णेऽथ दिवसे विंशे यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादशमासान्वै जुह्वानो जातवेदसम् ॥
अमांसाशी ब्रह्मचारी सर्वभूतहिते रतः ।
स लोकान् विमलान् वश्यानादित्यानामुपाश्नुते ॥
गन्धर्वैरप्सरोभिश्च दिव्यमाल्यानुलेपनैः ।
विमानैः काञ्चनैर्दिव्यैः पृष्ठतः सोऽनुगम्यते ॥
एकविंशे तु दिवसे यो भुङ्क्ते ह्येकभोजनम् ।
स हि द्वादशमासान्वै जुह्वानो जातवेदसम् ॥
[2][लोकमौशनसं दिव्यं शक्रलोकं च गच्छति ।
अश्विनोर्मरुतां चैव सुखेष्वभिरतः सदा ॥
अनभिज्ञश्च दुःखानां विमानवरमास्थितः ।
सेव्यमानो वरस्त्रीभिः क्रीडत्यमरवत्प्रभुः ॥
द्वाविंशे दिवसे प्राप्ते यो भुङ्क्ते ह्येकभोजनम् ।
सदा द्वादश मासान्वै जुह्वानो जातवेदसम् ॥]

1 Hemādri adds:
गन्धर्वैरुपगीतं च विमानं सूर्यवर्चसम् ।

2 Portion in brackets omitted in ना and उ Mss; supplied from Hemādri.

द्युतिमान् मार्गनिरतः[1] सत्यवागनसूयकः ।
लोकान् वसूनां प्राप्नोति दिवाकरसमद्युतिः ॥
कामचारः स्वधाहारो विमानवरमास्थितः ।
रमते देवकन्याभिर्दिव्याभरणभूषितः ॥
[2][त्रयोविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासांस्तु मिताहारी जितेन्द्रियः ॥
वायोरुशनसश्चैव रुद्रलोकं च गच्छति ।
कामचारी कामगमः पूज्यमानोऽप्सरोगणैः ॥
अनेकयुगपर्यन्तं विमानवरमास्थितः ।
रमते देवकन्याभिर्दिव्याभरणभूषितः ॥]
चतुर्विंशे तु दिवसे यः प्राशेदेकभोजनम् ।
स हि द्वादशमासान्वै जुह्वानो जातवेदसम् ॥
आदित्यानामधीवासे मोदमानो वसेच्चिरम् ।
रमते देवकन्यानां सहस्रैरयुतैस्तथा ॥
पञ्चविंशे तु दिवसे यः प्राशेदेकभोजनम् ।
सदा द्वादशमासान्वै पुष्कलं यानमारुहेत् ॥
रथैः सनन्दिघोषैश्च पृष्ठतः सोऽनुगम्यते ।
देवकन्यासमारूढै रजतैर्विमलैः शुभैः ॥
तत्र कल्पसहस्रं वै [3][रमते स्त्रीशतावृतः ।
सुधारसं च लभतेऽमृतोपममनुत्तमम् ॥
षड्विंशे दिवसे यस्तु प्राश्नीयादेकभोजनम् ।
सदा द्वादशमासान्वै] नियतो नियताशनः ॥

1 अहिंसानिरतो धीमान्—हे.

2 Portion in brackets omitted in ना and उ Mss: supplied from Hemādri.

3 Portion in brackets omitted in ना; supplied from उ Ms.

जितेन्द्रियो वीतरागो जुह्वानो जातवेदसम् ।
संप्राप्नोति महाभागः पूज्यमानोऽप्सरोगणैः ॥
सप्तानां मरुतां लोकान् वसूनां च समश्नुते ।
गन्धर्वैरप्सरोभिश्च पूज्यमानः प्रमोदते ॥
द्वे युगानां सहस्रे तु दिवि दिव्येन चेतसा ।
सप्तविंशे तु दिवसे यः प्राशेदेकभोजनम् ॥
सदा द्वादशमासांस्तु [1][जुह्वानो जातवेदसम् ।
फलमाप्नोति विपुलं देवलोके च मोदते ॥
अमृताशी वसंस्तत्र स वै तृप्तः प्रपूज्यते ।
स्त्रीभिर्मनोभिरामाभी रममाणो मदोत्कटः ॥
युगकल्पसहस्राणि त्रीण्यावसति वै सुखम् ।
योऽष्टाविंशे तु दिवसे प्राश्नीयादेकभोजनम् ॥
सदा द्वादशमासान्वै] जितात्मा च जितेन्द्रियः ।
फलं देवर्षिचरितं विपुलं च समश्नुते ॥
भोगवांस्तेजसा युक्तः स्वर्गे रविरिवामलः ।
सुकुमार्यश्च तं भार्यास्त्वरमाणाः सुवर्चसः ॥
रमयन्ति मनःकान्ते विमाने सूर्यसन्निभे ।
सर्वकामयुते दिव्ये कल्पायुतशतं समाः ॥
एकोनत्रिंशे दिवसे [1][यः प्राशेदेकभोजनम् ।
सदा द्वादशमासान्वै सत्यव्रतपरायणः ॥
तस्य लोकाः शुभा दिव्या दिव्यगन्धगुणान्विताः ।
तत्र चैतं शुभा नार्यो] दिव्याभरणभूषिताः ॥
मनोऽभिरामा मधुरा रमयन्ति मदोत्कटाः ।
भोगवांस्तेजसा युक्तो वैश्वानरसमप्रभः ॥

1 Portion in brackets omitted in ना and उ Mss; supplied from Hemâdri.

दिव्येन वपुषा चैव भ्राजमान इवामरः ।
वसूनां मरुतां चैव संध्यानामश्विनोस्तथा ॥
रुद्राणां च तथा लोकान् ब्रह्मलोकं च गच्छति ।
यस्तु मासे गते भुङ्क्ते एकभक्तं समात्मकः ॥
सदा द्वादश मासान्वै ब्रह्मलोके गतिर्भवेत् ।
सुधाक्षारकृताहारः श्रीमान् सर्वमनोहरः ॥
तेजसा वपुषा युक्तो भ्राजते रश्मिमानिव ।
स्वयं युताभिर्नारीभिर्विमानस्थो महीपते ॥
रुद्रदेवर्षिकन्याभिः सततं चाभिपूज्यते ।
यावद्वर्षसहस्रं तु जम्बूद्वीपेऽभिवर्षति ॥
तावत्संवत्सरः प्रोक्तो ब्रह्मलोकस्य धीमतः ।
विप्रुषश्चैव यावत्यो निपतन्ति नभस्तलात् ॥
वर्षासु वर्षतस्तावन्निवसत्यमरप्रभः ।

यावदित्यादि । 'जम्बूद्वीपे' 'वर्षासु' 'वर्षसहस्रं' 'धीमतो' देवस्य 'वर्षतो' वृष्टिं कुर्वतो 'यावत्यो विप्रुषो' जलकणाः 'नभस्थलान्निपतन्ति' 'तावत्' तावतः संवत्सरान् ब्रह्मलोके वसतीत्यर्थः ॥

मासोपवासी वर्षैस्तु दशभिः स्वयमुत्तमम् ॥
महर्षित्वमथासाद्य स्वशरीरगतिर्भवेत् ।
मुनिर्दान्तो जितक्रोधो जितशिश्नोदरस्तथा ॥
जुह्वन्नग्नौ च नियतः संध्योपासनसेविता ।
बहुभिर्नियमैरेवं मासमश्नाति यो नरः ॥
अभावकाशशीलश्च तस्य वासोऽतिरिच्यते ।
दिवं गत्वा शरीरेण स्वेन राजन् यथामरः ॥

स्वर्गे पुण्यं यथाकामं नृप भुङ्क्ते यथाविधि ।
उपवासानिमान् कृत्वा गच्छेच्च परमां गतिम् ॥

[1]तथा—

वैश्याः शूद्राश्च ये मोहादुपवासं प्रकुर्वते ।
त्रिरात्रमेकरात्रं च तयोः पुष्टिर्न विद्यते ॥
चतुर्थभक्तक्षपणं वैश्ये शूद्रे विधीयते ।
त्रिरात्रं तु न धर्मज्ञैर्विहितं ब्रह्मवादिभिः ॥

'पुष्टिः' फलम् ॥

तथा—

[2]फलमूलाशिनां राज्यं स्वर्गः पर्णाशिनां भवेत् ।
पयोभक्ष्यो दिवं याति स्नानेन [3]द्रविणाधिकः ॥
गवाढ्यः[4] शाकदीक्षाभिः स्वर्गमार्गस्तृणाशिनाम् ।
स्त्रियस्त्रिषवणस्नानाद्वायुं पीत्वा क्रतुं लभेत् ॥
नित्यस्नायी भवेद्राजा संध्ये तु द्वे जपन् द्विजः ।
सेन्द्रं साधयते राज्यं नाकपृष्ठमनाशकः ॥
स्थण्डिले तु शयानानां गृहाणि शयनानि च ।
चीरवल्कलवासोभिर्वासांस्याभरणानि च ॥
रसानां प्रतिसंहारे सौभाग्यमिह विन्दति ।
आमिषप्रतिसंहारे प्रजास्यायुष्मती भवेत् ॥
[5]उदवासं वसेद्यस्तु स नराधिपतिर्भवेत् ।

1 तथा वैश्याश्च शूद्राश्चाप्युपवासं—हे.
2 हे. व्र. II., ९४५
3 द्रविणोदकः—हे.
4 गन्धाढ्यः—ना.
5 उपवासं—ना.

'प्रतिसंहारः' परित्यागः। 'उदवासः' उदके वासः॥

सत्यवादी नरश्रेष्ठो दैवतैः सह मोदते॥
[1]गन्धमाल्यनिवृत्त्या तु कीर्तिर्भवति पुष्कला।
केशश्मश्रून् धारयतामग्र्या भवति संततिः॥
उपवासं च दीक्षां वाप्यभिषेकं च पार्थिवः।
कृत्वा द्वादश वर्षाणि [2]वीरयानाद्विशिष्यते॥[3]

इति महाराजाधिराजश्रीमद्गोविन्दचन्द्रदेवमहासान्धिविग्रहिकेण
भट्टहृदयधरात्मजेन भट्टश्रीलक्ष्मीधरेण विरचिते
कृत्यकल्पतरौ व्रतकाण्डं समाप्तम्[4]॥

॥ श्रीशुभमस्तु ॥

1 गन्धमाल्यानुवृत्त्या—हे.

2 वासवत्वाद्विशिष्यते—हे.

3 Hemādri adds :

अवाक्शिरास्तु यो लम्बेदुदवासं वसेच्च यः।
सततं चैकसायी यः स लभेदीप्सितां गतिम्॥
परं विन्दति दानेन मौनेनात्मा प्रतीच्छति।
उपभोगांश्च तपसा ब्रह्मचर्येण जीवितम्॥
रूपमैश्वर्यमारोग्यमहिंसाफलमुच्यते।
प्रायोपवेशनाद्राज्यं सर्वत्र फलमश्नुते॥
स्वर्गं सत्येन लभते दीक्षया कुलमुत्तमम्।
अधीत्य सर्ववेदान्वै सद्यो दुःखात्प्रमुच्यते॥
मानसं तु परं धर्मं स्वर्गलोकमवाप्यते।

4 Nagpur Ms. contains the following scribal note at the end :

संवत् २८३६। वर्षे मासि फाल्गुनकृष्णचतुर्दश्यां शिवरात्र्यां बुधवासरान्वितायां श्रीघनश्यामपुत्रगोविन्दस्तेनालेखि। रामः। रामाय नमः॥

फाल्गुने कृष्णपक्षे च चतुर्दश्यां चान्द्रवासरे।
काण्डीव धर्मशास्त्रस्य व्यलिखद्गोविदः सुधीः॥

APPENDIX A

## *Index of Smṛti-authors and Works cited*

## APPENDIX B

### *Index of Vratas*

| व्रतनाम | कालः | व्रतविभागः | देवता | पृष्ठाङ्कः |
|---|---|---|---|---|
| इन्दुव्रतम् | | संवत्स. | इन्दुः | ४५१ |
| इन्द्रव्रतम् | | ,, | इन्द्रः | ४४९ |
| ईशानव्रतम् | चतुर्द. पौर्ण. गुरु. | तिथि. | ईशानः | ३८३ |
| उदकसप्तमीव्रतम् | सप्त. | ,, | | १८४ |
| उभयनवमीव्रतम् | शु. कृ. नव. | ,, | देवी | २७४ |
| उभयसप्तमीव्रतम् | पौषादि. शु. कृ. सप्त. | ,, | सूर्यः | १५९ |
| उमामहेश्वरव्रतम् | भाद्र. आश्व. मृगशिरा. | नक्षत्र. | उमेशौ | ४१४ |
| एकभक्तव्रतम् | | मास. | | ४१८ |
| एकादशीव्रतम् | मार्ग. शु. एका. | तिथि. | | ३१० |
| कमलसप्तमीव्रतम् | वसन्त. शु. सप्त. | ,, | दिवाकरः | २१७ |
| करिव्रतम् | | संवत्सर. | करी. | ४४९ |
| कल्किद्वादशीव्रतम् | भाद्र. शु. द्वाद. | तिथि. | कल्की | ३३२ |
| कल्पवृक्षव्रतम् | | संवत्सर. | कल्पवृक्षः | ४४६ |
| कल्याणसप्तमीव्रतम् | शु. सप्त. आदित्य. | तिथि. | दिवाकरः | २०८ |
| कान्तिव्रतम् | कार्ति. शु. द्विती. | ,, | जनार्दनः | ४७ |
| ,, | वैशाख. | संवत्सर. | | ४४५ |
| कामदविधिः | मार्ग. शु. षष्ठी. आदित्य. | वार. | आदित्यः | १४ |
| कामदासप्तमीव्रतम् | फाल्गु. शु. सप्त. | तिथि. | दिवाकरः | १६९ |
| कामव्रतम् | | संवत्सर. | प्रद्युम्नः | ४४० |
| कामषष्ठीव्रतम् | षष्ठी | तिथि. | केशवः | ९८ |
| कार्तिकस्नानविधिः | कार्ति. | मास. | अग्निः | ४१८ |
| कालाष्टमीव्रतम् | भाद्र कृ. अष्ट. मृग. | तिथि. | शङ्करः | २५८ |
| कालीव्रतम् | आश्व. कृ. अष्ट. | तिथि. | देवी | २६३ |
| कीर्तिव्रतम् | | संवत्सर. | अश्वत्थः, भास्करः, गङ्गा | ४४२ |
| कुन्दचतुर्थीव्रतम् | माघ. चतु. | तिथि. | देवी. | ८३ |
| कूर्मद्वादशीव्रतम् | पौष. शु. द्वाद. | ,, | जनार्दनः | ३१७ |
| कृष्णद्वादशीव्रतम् | आषा. द्वाद. | ,, | वासुदेवः | ३२९ |
| कृष्णव्रतम् | एका. | संवत्सर. | कृष्णः | ४४७ |
| कृष्णषष्ठीव्रतम् | कृ. षष्ठी. | तिथि. | सूर्यः | १०१ |
| कृष्णाष्टमीव्रतम् | कृ. शु. अष्ट. | ,, | देवी. | २३३ |
| ,, | मार्ग—कार्ति. कृ. अष्ट | ,, | शङ्करः | २४० |
| ,, | ,, | ,, | ,, | २४५ |
| ,, | ,, | ,, | शम्भुः | २४८ |
| ,, | कन्या. श्राव. कृ. अष्ट. | ,, | ,, | २५० |

| व्रतनाम | कालः | व्रतविभागः | देवता | पृष्ठाङ्कः |
|---|---|---|---|---|
| कृष्णाष्टमीव्रतम् | ज्येष्ठ—वैशा. कृ. अष्ट. | तिथि. | शम्भुः | २५२ |
| क्षीरप्रतिपद्व्रतम् | प्रतिपत्. | ,, | गायत्री | ३६ |
| गणेशचतुर्थीव्रतम् | चतु. | ,, | विनायकः | ८४ |
| गोमयादिसप्तमीव्रतम् | शु. सप्त. | ,, | दिवाकरः | १८५ |
| गोयुग्मव्रतम् | रोहिणी, मृगशिराः | नक्षत्र. | शिवोमे | ४१० |
| गोव्रतम् | ,, | ,, | ,, | ,, |
| गौरीव्रतम् | | संवत्सर. | गौरी | ४४० |
| चण्डिकाव्रतम् | अष्ट. नव. | तिथि. | चण्डिका. | ३८८ |
| चन्द्ररोहिणीशयनव्रतम् | पौर्ण. सोम, पौर्ण. रोहिणी. | ,, | रोहिणी, चन्द्रः | ३७८ |
| चन्द्रव्रतम् | | संवत्सर. | चन्द्रः | ४५० |
| चित्रभानुपदद्वयव्रतम् | उत्तर-दक्षिण. | मास. | चित्रभानुः | ४३१ |
| जयन्तविधिः | उत्तर. आदित्य. | वार. | भास्करः | १६ |
| जयन्तीसप्तमीव्रतम् | माघ-पौष. शु. सप्त. | तिथि. | ,, | १२९ |
| जयविधिः | दक्षिण. आदित्य. | वार. | आदित्यः | १६ |
| जयासप्तमीव्रतम् | शु. सप्त. रोहिण्यादि. | तिथि. | दिवाकरः | १२४ |
| जामदग्न्यद्वादशीव्रतम् | वैशा. द्वाद. | ,, | हरिः | ३२५ |
| तिथियुगलव्रतम् | शु. कृ. अष्टम्यादि. | ,, | तिथिस्वामिनः | ३८५ |
| त्रयोदशीव्रतम् | त्रयो. गुरु. | तिथि. | नरसिंहः | ३६९ |
| त्रिगतिसप्तमीव्रतम् | फाल्गु—माघ. शु. सप्त. | ,, | भास्करः | १४१ |
| त्रितयप्रदानसप्तमीव्रतम् | मार्ग. शु. सप्त. हस्त. | ,, | भानुः | १५१ |
| त्रिविक्रमव्रतम् | कार्ति—पौष. | मास. | भास्करः | ४२९ |
| त्र्यम्बकव्रतम् | चतुर्द. | संवत्सर. | त्र्यम्बकः | ४४९ |
| दम्पत्यष्टमीव्रतम् | कार्ति. कृ. अष्ट. | तिथि. | उमा, देवश्च | २५४ |
| दिवाकरव्रतम् | हस्तयुक्तादित्य. | वार. | दिवाकरः | २३ |
| दीप्तिव्रतम् | सन्ध्या | संवत्सर. | | ४४५ |
| दुर्गाष्टमीव्रतम् | श्राव. शु. अष्ट. | तिथि. | देवी | २२५ |
| दूर्वाष्टमीव्रतम् | भाद्र. शु. अष्ट. | ,, | शङ्करः | २३९ |
| दृढव्रतम् | चैत्र | संवत्सर. | | ४४५ |
| देवव्रतम् | नक्तम् | ,, | शिवरुद्रौ | ४३९ |
| देवीव्रतम् | | ,, | देवी | ४४७ |
| द्वादशीव्रतम् | मार्ग. शु. द्वादश्यादि | तिथि. | वासुदेव. | ३१० |
| धन्यप्रतिपद्व्रतम् | मार्ग. शु. प्रतिपद् | ,, | विष्णुः | ३८ |
| धराव्रतम् | | संवत्सर. | धरा. | ४४६ |
| धामव्रतम् | | ,, | | ४५० |
| धृतिव्रतम् | | संवत्सर. | शङ्करः | ४४४ |

| व्रतनाम | कालः | व्रतविभागः | देवता | पृष्ठाङ्कः |
|---|---|---|---|---|
| पुष्यव्रतम् | पुष्य. | नक्षत्र. | कुबेरः | ३९९ |
| पुष्यार्कद्वादशीव्रतम् | पुष्यद्वाद. | तिथि. | जनार्दनः | ३५१ |
| प्रभावव्रतम् | | संवत्सर. | | ४४७ |
| प्राजापत्यव्रतम् | | ,, | | ४४८ |
| प्राप्तिव्रतम् | | ,, | | ४४७ |
| प्रीतिव्रतम् | आषाढादि | ,, | | ४४० |
| फलत्यागव्रतम् | मार्ग. शु. तृती. | ,, | शङ्करः | ४३६ |
| फलव्रतम् | | ,, | | ४४८ |
| फलसप्तमीव्रतम् | भाद्र. शु. सप्त. | तिथि. | आदित्यः | ११७ |
| फलसप्तमीव्रतम् | ,, | ,, | भास्करः | २०४ |
| फलसप्तमीव्रतम् | मार्ग. सप्त. | ,, | भानुः | २१३ |
| बुद्धद्वादशीव्रतम् | श्रावण. द्वाद. | ,, | बुद्धः | ३३१ |
| ब्रह्मगायत्रि-चन्द्ररोहिणीव्रतम् | | नक्षत्र. | ब्रह्मा, गायत्री च, चन्द्रः रोहिणी च | ४१७ |
| ब्रह्मव्रतम् | त्र्यहम् | संवत्सर. | | ४४५ |
| भद्रविधिः | भाद्र. शु. षष्ठी. आदित्य. | वार. | आदित्यः | १२ |
| भद्रासप्तमीव्रतम् | शु. सप्त. हस्त. | तिथि. | भद्रः | १३८ |
| भर्तृद्वादशीव्रतम् | वसन्त. शु. द्वाद. | ,, | नारायणः | ३३९ |
| भवानीव्रतम् | तृती. नक्तम् | संवत्सर. | भवानी | ४५० |
| भाग्यर्क्षद्वादशीव्रतम् | द्वाद. धनिष्ठादि. | तिथि. | हरिः | ३५२ |
| भानुव्रतम् | सप्तमी | संवत्सर. | भानुः | ४४८ |
| भीमद्वादशीव्रतम् | माघ. शु. द्वाद. | तिथि. | विष्णुः | ३५४ |
| भीमव्रतम् | | संवत्सर. | | ४४६ |
| मदनद्वादशीव्रतम् | चैत्र. शु. द्वाद. | तिथि. | विष्णुः | ३६७ |
| मन्दारसप्तमीव्रतम् | माघ. शु. सप्त. | ,, | रविः | २१९ |
| मत्स्यद्वादशीव्रतम् | मार्ग. शु द्वाद. | ,, | जनार्दनः | ३११ |
| महाजयासप्तमीव्रतम् | संक्रमण. शु. सप्त. | ,, | भास्करः | १३५ |
| महातपोव्रतानि | अहोरात्रादि | प्रकीर्ण. | | ४५३ |
| महानन्दानवमीव्रतम् | माघ. शु. नव. | तिथि. | चण्डिका | ३०६ |
| महानवमीव्रतम् | आश्व. शु. नव. | ,, | चण्डिका | २९६ |
| महानवमीव्रतम् | माघ. शु. नव. | ,, | दुर्गा | ३०७ |
| महाव्रतम् | आश्व. पर्वादि | ,, | महादेवः | १९३ |
| महाव्रतम् | चैत्रतृतीया | संवत्सर. | | ४४६ |
| महाश्वेताप्रियविधिः | आदित्यग्रहण. आदित्य | वार. | महाश्वेता, दिनकरः | २१ |
| मार्ताण्डसप्तमीव्रतम् | पौष. शु. सप्त. | तिथि. | मार्ताण्डः | १४७ |

| व्रतनाम | काल: | व्रतविभाग: | देवता | पृष्ठाङ्क: |
|---|---|---|---|---|
| शङ्करार्कव्रतम् | अष्ट. सोम. | तिथि. | शङ्करार्क: | २७१ |
| शर्करासप्तमीव्रतम् | चैत्र. शु. सप्त. | ,, | रवि: | २१४ |
| शाकसप्तमीव्रतम् | कार्ति. शु. सप्त. | ,, | भास्कर: | १०३ |
| शान्तिपञ्चमीव्रतम् | आश्व. पञ्च. | ,, | नागा: | ९५ |
| ,, | कार्ति. शु. पञ्च. | ,, | हरि: | ९६ |
| शिवचतुर्दशीव्रतम् | मार्ग. शु. चतुर्द. | ,, | उमा, शङ्कर: | ३७० |
| शिवनक्तव्रतम् | कृ. अष्टम्यादि. | ,, | शिव: | ३८६ |
| शिवव्रतम् | | संवत्सर. | | ४४० |
| शिवोपासनव्रतम् | अष्ट. चतुर्द. | तिथि. | शिव: | ३८५ |
| शीलव्रतम् | | संवत्सर. | | ४४४ |
| ,, | तृतीया | ,, | | ४४९ |
| शुभद्वादशीव्रतम् | मार्ग. शु. द्वाद. | तिथि. | हरि: | ३४० |
| शुभसप्तमीव्रतम् | आश्व. शु. सप्त. | ,, | अर्यमा. | २२१ |
| शौर्यव्रतम् | आश्व. शु. नव. | ,, | दुर्गा | २७३ |
| श्रवणद्वादशीव्रतम् | भाद्र. द्वाद. श्रवण. | ,, | | ३४८ |
| सङ्क्रान्त्युद्यापनव्रतम् | विषुव, अयन. | मास. | रवि: | ४३२ |
| सपद्व्रतम् | पञ्चमी | संवत्सर. | लक्ष्मी: | ४४१ |
| संभोगव्रतम् | प्रतिपत्, पञ्च. | तिथि. | | ३८८ |
| सप्तवारव्रतानि | आदित्य. हस्तादि. | वार. | वाराधिपा: | २५ |
| सप्तसप्तमीकल्प: | उत्तर. शु. सप्त. आदित्य | तिथि. | सूर्य: | १८९ |
| सर्पाभयपञ्चमीव्रतम् | श्रावण. शु. पञ्च. | ,, | नागा: | ९४ |
| सर्वाप्तिसप्तमीव्रतम् | माघ. कृ. सप्त. | ,, | भानु: | १६८ |
| सर्वसप्तमीव्रतम् | सप्तमी | ,, | दिवाकर: | १८७ |
| सारस्वतव्रतम् | पञ्चमी | संवत्सर. | सरस्वती | ४३५ |
| सारस्वतव्रतम् | सन्ध्या | ,, | ,, | ४४१ |
| सार्वभौमव्रतम् | कार्ति. शु. दश. | तिथि. | | ३०९ |
| सिद्धार्थकादिसप्तमीव्रतम् | सप्तमी | ,, | रवि: | १७२ |
| सुखव्रतम् | कृ. षष्ठी. सप्त. | ,, | | ३८७ |
| सुखव्रतम् | | संवत्सर. | | ४५० |
| सुगतिव्रतम् | अष्टमी | ,, | | ४४७ |
| सूर्यव्रतम् | षष्ठी, सप्तमी | तिथि. | भास्कर: | ३८८ |
| सूर्यव्रतम् | माघ. | संवत्सर. | सूर्य: | ४४४ |
| सोमव्रतम् | अष्ट. सोम. | तिथि. | चन्द्रचूड-सचन्द्रसोम: | २६९ |
| सोमव्रतम् | वैशा. पौर्ण. | ,, | शंकर: | ३८३ |

## APPENDIX C

### *Index of works and Authors cited in Footnotes*



---